BIBLIOTHECA INDICA
A COLLECTION OF ORIENTAL WORKS

# TATTVACINTĀMAṆI-DĪDHITI-PRAKĀŚA

BY

Bhavānanda Siddhāntavāgīśa

with

Tattvacintāmaṇi and Dīdhiti

Anumānakhaṇḍa

VOL II

(Tarkaprakaraṇa to Pakṣatāprakaraṇa)

EDITED BY

MAHAMAHOPADHYAYA KALIPADA TARKACHARYA

Work Number
194

Issue Number
1583




THE ASIATIC SOCIETY
1, PARK STREET
CALCUTTA-16

बिब्लिओथिका इण्डिका ग्रन्थमालायां·
१६४ संख्यकोग्रन्थः

# तत्त्वचिन्तामणि दीधितिप्रकाशः

श्रीभवानन्दसिद्धान्तवागीश विरचितः

(तत्वचिन्तामणिना तत्वचिन्तामणिदीधित्या च समेतः)

अनुमान खण्डे

द्वितीयो भागः

( तर्कप्रकरणात् पक्षताप्रकरणं यावत् )



. महामहोपाध्याय श्रीकालीपद तर्काचार्य
सम्पादित

एसियाटिक् सोसाइटि समित्या प्रकाशितः
कलिकाता
१ पार्क ष्ट्रीट् भवनतः

# श्रीभवानन्दादिवृत्तरेखा

नूनं विदितमिदं श्रीरघुरन्धराणां यत् सुचिरात् प्रभृत्येव प्रभूतसुविश्रुतश्रुतयशोधवलाया इलारत्नभूताया मिथिलाया इव सुतरामशिथिला चानवद्या च कीर्त्तिर्वरीवर्त्ति विद्यायामान्वीक्षिक्यां विद्वद्वरिष्ठसमधिष्ठिताया वङ्गवसुन्धरायाः। यत्र किल संख्यातीताः प्रथितमहिमानो मानोन्नतास्तार्किकविपश्चितः प्रचितप्रतिभाप्रोद्दीप्ताः प्रज्ञानवनीयकेभ्यो विद्याप्रदानव्रतेन तथा निबन्धनादिना विविधनिबन्धरत्नानां तार्किकसम्प्रदायमर्कज्योतिःप्रचयमिव तमिस्रप्रतानघातनं सम्प्रवर्त्तयन्तः शर्माण्यसमानि समपादयन्निखिलानां न्यायनयमधिजिगमिषूणां समधिगतविविधविद्यानाञ्च प्रतिभावतां विद्यासम्प्रदायमवतां विपश्चिदपश्चिमानाम्। तेषु महामहिमानो नवद्वीपप्रदीपभूताः सुविश्रुतास्तर्कादितन्त्रस्वतन्त्रमतयः श्रीवासुदेवसार्वभौम-श्रीरघुनाथतार्किकशिरोमणि-श्रीमथुरानाथतर्कवागीश-श्रीकृष्णदाससार्वभौम-श्रीभवानन्दसिद्धान्तवागीश श्रीजगदीशतर्कालङ्कार-श्रीहरिरामतर्कवागीश--श्रीगदाधरभट्टाचार्य--श्रीजानकीनाथचूडामणिप्रमुखा मुख्याः प्रेक्षावन्तः प्राथम्येन प्राज्ञगोष्ठीषु विशेषतः समुल्लेखमर्हन्ति। येषां शिष्याध्यापनसम्भवा तथा निरवद्यनिबन्धनिबन्धननिबन्धना कीर्त्तिरतिशुद्धा वर्वर्त्ति निखिलामिलां समश्नुवाना। तत्राद्य निरवद्यविद्याप्रद्योतः प्रकृततत्त्वचिन्तामणिदीधितिप्रकाशप्रजापतिः श्रीभवानन्दसिद्धान्तवागीश एव सुविश्रुतः समाश्रयते नः सविशेषालोचनगोचरताम्।

प्राचीनन्यायभाष्यादिशैलीविलक्षणां निबन्धनिबन्धनशैलीं विन्दमानेन प्रथितयशसा न्यायपरमाचार्य्येण श्रीमदुदयनाचार्य्येण स्वीयनिबन्धरत्नेषु बहुत्र संसूचितस्वरूपस्य नव्यन्यायप्रस्थानस्य यदा तत्त्वचिन्तामणिग्रन्थाकारेण मीमांसादिविविधतन्त्रपारदृश्वा गङ्गेश्वरो गङ्गेश्वर इवागमानामपूर्वमुपदेशमुपस्थापयाञ्चकार, तदनन्तरमन्तर्निहितप्रभूतगूढार्थस्य सूत्रवदल्पाक्षरस्य तस्य चिन्तामणेरनतिशितमतीनामप्यर्थप्रतिपत्तिसौकर्य्याय बहव एव विलक्षणा न्यायनयविचक्षणास्तमिमं मणिग्रन्थमनायत्या वा महत्या वा व्याख्यानसन्तत्या समलङ्कृत्य कृतकृत्यतां प्रत्यलम्भयन् नव्यन्यायनये सविशेषप्रवेशमभिलषतो विद्यार्थिसार्थान्।

तत्रादौ प्रेक्षावदग्रेसरः पक्षधराभिधानधरः श्रीजयदेवमिश्रो नाम मैथिलतार्किकप्रवरस्तमिमं तत्त्वचिन्तामणिमालोकाख्यया विलक्षणव्याख्यया समुद्भासयामास। प्रथमतस्तावत् सैवासादेकमवलम्बनं मणिरहस्यानि गूढानि

बुभुत्समानानाम्। तदानीं मिथिलाप्रभवस्य नव्यन्यायतन्त्रप्रवर्तकस्य श्रीगङ्गेशस्य तत्त्वचिन्तामणिग्रन्थो मैथिलानामेव विपश्चितामायत्तः समवर्त्तत। तेन नव्यन्याय-विद्यापरिग्रहे गुरुस्थानतायाः गौरवमेका मिथिलावसुन्धरैवाधिचक्रे। तदानीन्तना मैथिला विद्याधना विपरीते पथि प्रयाणे मिथिलायाः निरुक्तगौरवनाशमाशङ्कमाना मानमात्मनीनं पिपालयिषवो नान्वमन्यन्त नव्यन्यायतन्त्रस्य तत्त्वचिन्तामणिग्रन्थस्य लिपिद्वारेण तदा क्वापि देशान्तरे संक्रमणं नाम, येन तस्य मणिग्रन्थस्य यथाक्रम-मध्यापनविधिना नव्यन्यायतन्त्रगुरुस्थानतायाः गौरवं देशान्तरमायत्तीकर्तुमलं जायेत। सुचिरमेवमनिवारे प्रवरत्यनुदारे देशान्तरजुषां सन्तापकरे मैथिलविदुषामाचारे दृढचेतसामग्रणीः श्रीवासुदेवसार्वभौमो नाम वङ्गीयविद्वन्मुकुटमणिः श्रीपक्षधरमिश्रा-त्तत्त्वचिन्तामणिमध्येतुकामो मिथिलाजनपदमाससाद। निर्बाधञ्चाध्येतुमुपचक्रमे यथाक्रमं मणिग्रन्थं लोकातीतेनाध्यवसायेन। तत्रासीदेव महान् विशेषः, यत् अनन्यसामान्यो मेधावी सुदृढोद्यमः श्रीसार्वभौमो नाम परविद्यार्थिवद् गुरोः सकाशान्न केवलं ग्रन्थस्यार्थमेवायत्तीकर्त्तुं यत्नपरो बभूव, किन्तु पक्षधरमिश्रादात्मनः शिक्षायाः प्रथमदिनात् प्रभृत्येव मणिग्रन्थं यथाक्रमं निजसंस्कारारूढं विधातुमधिका-धिकं यत्नमालम्बे। नातिचिरेणैव कालेन च स्वया महत्या प्रतिभया गुरोः सकाशान्निःशेषग्रन्थार्थाधिगमेन साकं सुमहत्या मेधया सर्वमेव मणिग्रन्थं स्वीय-संस्कारगतं कृत्वा भृशं कृतकृत्यम्मन्यो गुरुणा पक्षधरमिश्रेणाविदिततदीयगुप्तवृत्तेन ससन्तोषमेवाभ्यनुज्ञातः प्रहृष्टः स्वदेशं प्रत्याजगाम। स्वयञ्च सार्वभौमनिरुक्ति नाम मणिग्रन्थस्य टीकां प्रणीय वङ्गेषु शिष्यानध्यापयितुमारेभे तदनन्तरं वङ्गेष्वेव नव्यन्यायस्य सम्प्रदायः सुप्रतिष्ठः समजनिष्ट। क्रमेण मणिग्रन्थमवलम्ब्य वङ्गेषु परेऽपि बहवो व्याख्यानकृतः समजायन्तेति केचन प्रवदन्ति।

किन्तु तत्र सार्वभौमवृत्तान्ते कञ्चिदंशं निपुणैतिहासिका वितथं मन्यन्ते। तदुक्तं 'वङ्ग नव्यन्यायचर्च'त्याख्यप्रख्यातवङ्गभाषामयेतिहासग्रन्थकारेण स्वर्गत-दीनेशचन्द्रभट्टाचार्येण "निरुक्तः प्रवादः सर्वंश्चैवांशेषु निष्प्रमाण इत्यधुना शक्यं निर्णेतुम्। तदिदं तत्त्वं यथा वासुदेवसार्वभौमः पक्षधरस्यान्तेवासी नासीत्। ततः पूर्वमेव च नव्यन्यायतन्त्रे गौड़मतस्य प्रतिष्ठा समवर्त्तिष्ट। सार्वभौमनिरुक्तिरिति न कस्यचन टीकाग्रन्थस्य नाम। संस्कारमारोप्य सार्वभौमस्य मणिग्रन्थानयन-वार्त्तापि सुतरामयथार्था' इत्यादि (भाषान्तरीकृतम्)। तदर्थं सुसमर्थयितुं

तेनोपन्यस्त, तत्र सुदृढ़ा चातिविस्तृता च युक्तिजालवैखरी। तद् यथा तथैवास्तु समग्रे वङ्गदेशे न्यायविद्याप्रतिष्ठाया वार्त्ता, नवद्वीपनगरे नव्यन्यायसम्प्रदायप्रतिष्ठाया मिथिलामधरीकृत्य तस्यैव काले नव्यन्यायविद्याधिकारे जगद्गुरुतासमासादनस्य च मूलं श्रीवासुदेवसार्वभौमः श्रीरघुनाथतार्किकशिरोमणिप्रमुखाश्चेति निर्विवादम्। सार्वभौमनिरुक्तिः श्रीसार्वभौमस्य स्वतन्त्रग्रन्थरूपा मणिव्याख्येत्यत्र सत्यप्यनेकेषां वैमत्ये परवर्त्तिव्याख्याग्रन्थेषु बहुत्र 'सार्वभौममतम्' 'सार्वभौमनिरुक्ति'रित्याद्विवादैः सार्वभौमस्य मतसमुल्लेखात् तत्त्वचिन्तामणिग्रन्थार्थपरिष्कारे तस्य सविशेषं स्वातन्त्र्यमुपलभ्यते। प्रभूतप्रमाणपरिचयेन सुचिरन्तननिर्विरोधप्रवादसंवादेन च शक्यमिदमतिदृढ़ं निर्णेतुं यत् तार्किकशिरोमणिः श्रीरघुनाथः श्रीवासुदेवसार्वभौमस्यान्तेवासी समवर्त्तत, न्यायतन्त्रस्वतन्त्रमतिश्चासावेव दीधितिं नाम प्रख्यातं तत्त्वचिन्तामणिव्याख्यानिबन्धं निबबन्धेति। सन्ति चापरेऽपि तथैव तत्त्वचिन्तामणिग्रन्थव्याख्यानकृतः पक्षधरमिश्र-मथुरानाथतर्कवागीशप्रमुखा येषां व्याख्यानानि रघुनाथव्याख्यानतश्च स्वल्पान्तराणि, तथापि मणिदीधितिसमाख्यायाः शिरोमणिप्रणीतमणिव्याख्यायास्तार्किकसम्प्रदायेषु यथा प्रभूतः प्रचारश्च समादरश्च न तथा वैशद्येनार्थ-विवरणं विहितवतामपि भिन्नव्याख्यानानाम्। ततो दीधितेः स्वल्पसंस्थानायाः सुगभीरविपुलार्थायाः परिष्करणाय वङ्गेषु बहवो नैयायिकाः स्वकीयां तर्कप्रतिभामर्कप्रभामिव तिमिरहरां प्रवर्त्तितवन्तः सुप्रशस्तोदर्काम्। तत्र प्रथमं रामकृष्णो नाम कश्चन रघुनाथशिरोमणेः शिष्यो दीधितिं संक्षिप्तेन व्याख्यानेन समलञ्चकार। तदिदं 'श्रीरामकृष्णो व्याचष्टे प्रत्यक्षमणिदीधिति'मिति प्रारम्भश्लोकेन स्वयमेवासौ संसूचयामास। तस्य शिरोमणिशिष्यत्वमपि 'ब्रूते शिरोमणिगुरोरिह रामकृष्ण' इति गुणदीधितिटीकायां तेन स्वयमेव निबद्धेन सुप्रतिपद्यते प्रतिज्ञावाङ्मयेन।

अथ दीधितेरतिगभीरार्थायाः स्वल्पसंस्थानाया निःशेषार्थबोधे तथाविधसंक्षिप्तटीकामपर्य्याप्तां मन्यमानाः श्रीभवानन्दसिद्धान्तवागीश-मथुरानाथतर्कवागीश-जगदीशतर्कालङ्कार-गदाधरभट्टाचार्य्यप्रमुखास्तार्किकविपश्चिदपश्चिमास्तथा विलक्षणव्याख्यानैस्तार्किकशिरोमणिप्रणीतायाः दीधितेरतिवैशद्येन सुगभीरानर्थानशेषं प्रकाशयाञ्चक्रुर्यथा स्वल्पाक्षरसंस्थानाया विपुलार्थायास्तस्याः सुतरां दुरूहार्थताया अपगमेन समं समजायत सर्वस्यैव नव्यतार्किकसम्प्रदायस्य तत्रैव महती गौरवबुद्धिः

सुलमिश्रा श्रद्धा च नाम। तेष्वन्यतम मणिदीधितेः प्रकाशाख्य-सुविख्यातव्याख्यान-प्रजापतिः स्वतन्त्रमतिः श्रीभवानन्दसिद्धान्तवागीशभट्टाचार्य्य एव नः समश्नुते समालोचनगोचरताम्।

स एव श्रीभवानन्दसिद्धान्तवागीशभट्टाचार्य्यः खृष्टीयषोड़शशतके वङ्गेषु प्रसिद्धो नैयायिकमध्यमणिः समवर्त्ततेति सिद्धान्तः शुद्धबुद्धीनामैतिहासिकवृद्धानाम। प्रकाशाख्या तदीया दीधितिव्याख्या तदानीन्तनसंख्यावतां समाजेषु महतीं सुख्यातिं समाससाद। सुव्यक्तमिदं तदा पण्डितसमाजे लब्धप्रचारेण—

गुणोपरि गुणानन्दी भावानन्दी च दीधितौ।
सर्वत्र मथुरानाथी जागदीशी क्वचित् क्वचित्।'

इत्यादिप्रशस्तिश्लोकेन। दीधितिव्याख्यातृषु श्रीभवानन्दसिद्धान्तवागीशस्य सर्वश्रेष्ठमासनमित्यस्य वादस्य सुतरामशक्यवचनत्वेऽपि दीधितिटीकाप्रणेतृषु तस्य सुमहती प्रशस्तिरासीदिति शक्यं निःसंशयमेव निर्वक्तुम्। दीधितिप्रकाशाख्या मणिदीधितिव्याख्या समपेक्षितनिखिलार्थापत्तेयत्ता विजयपताकेव श्रीभवानन्दस्य तस्य प्रचारयति परितः प्रभूतां पाण्डित्यप्रसूतामनार्त्तां कीर्त्तिम्। एकदा समवर्त्तत महानादरः प्रचारश्च भारतान्तर्वर्त्तिसर्वप्रदेशेषु मणिदीधितिप्रकाशस्येति प्रतिपद्यते नानाप्रदेशीयग्रन्थशालासु तदीयसुप्राचीनप्रतिलिपीनां समुपलम्भेन, देशान्तरगतैरनेकैस्तदीयोपटीकाग्रन्थानाञ्च प्रणयनेन। तथाहि महाराष्ट्रप्रदेशीयो नैयायिकवरः पुन्तामकर-श्रीमहादेवभट्टो नाम भवानन्दीयदीधितिप्रकाशग्रन्थस्य 'भवानन्दीप्रकाशं' नाम विस्तृतं टीकाग्रन्थं 'सर्वोपकारिणीं' नाम संक्षिप्तां टीकाञ्च प्रणिनाय। तस्मादन्येऽपि भिन्नदेशीया दिनकरभट्ट-गुरुपण्डितविश्वेश्वर-विश्वनाथसुत-वीरेश्वर-कृष्णमिश्राचार्य्य-प्रभृतयो भवानन्दीयदीधितिप्रकाशमुपटीकाभिरलञ्चक्रुरिति प्रत्नतत्त्वगवेषकाणां सविशेषो निर्देशः।

देशान्तरेषु सत्यपि दीधितिप्रकाशस्य भवानन्दीयस्य तथा भूयसि प्रचारे वङ्गेषु किमिति तस्य नोपजातस्तथा प्रचार इत्यत्र कारणमनुसन्धेयम्। वयं मन्यामहे,—श्रीभवानन्दसिद्धान्तवागीशादनन्तरं श्रीजगदीशतर्कालङ्कारः श्रीगदाधरभट्टाचार्य्यश्च सुतरामुत्कृष्टगुणे दीधितिव्याख्याने प्रणीतवन्तौ, ततः स्वप्रवर्त्तितेषु सम्प्रदायेषु दीधितिप्रकाशस्यापास्य प्रशस्तिप्रतिपादनपुरःसरं ताभ्यां स्वस्वटीकाया एव भृशं प्रचारणेन सदैव च स्वव्याख्यानेष्वन्तरान्तरा प्रकाशपक्षप्रतिक्षेपेण

दीधितिप्रकाशस्य बहुलः प्रचारो वङ्गेषु व्याहतिमापेदे, सिद्धान्तवागीशोऽपि तेन सुभृशं दुर्मनायितो वङ्गदेशमपहाय स्वीयनिवासाय वाराणसीमाशिश्राय, नानादेशीयविद्यार्थिजनाधिष्ठाने च तत्रैव पुण्ये धाम्नि स्वं सम्प्रदायं प्रवर्त्तयामास। ततस्तदीयशिष्योपशिष्यादिपरम्परया दीधितिप्रकाशस्य बाहुल्येन देशान्तरीयविद्वत्समाजेष्वेव प्रचारः समजनिष्ट, न वङ्गीयविद्वत्समाजेषु। वङ्गीयविद्वत्समवायः पुनः सविशेषालोचनया व्याख्यानविधौ जगदीशगदाधरयोरेव गुणातिशयविनिर्णयेन तत्रैव सुतरां रतिं भेजे, नान्यत्र, या तावदद्याप्यव्याहतमनुवर्त्तमाना समन्ततः सन्दृश्यते वङ्गेषु। इति।

सिद्धान्तवागीशस्य वागीशस्येव सत्यपि नितरामनितरसाधारणे प्रौढपाण्डित्ये तस्य तान्त्रिकवीराचारपरायणतया तदानीन्तनाः सुप्रतिष्ठा नवद्वीपनिष्ठाः पण्डितप्रष्ठास्तमिमं नवद्वीपाद्‌बहिश्चक्रिरे, यतो नास्य वङ्गेषु प्रतिष्ठा समजनिष्टेति केचिदितिहासरसिका व्याकुर्वन्ति, तदिदं मतं निपुणगवेषकाणां सूक्ष्मं विचारं नैव क्षमते सोढुम्। यतः स्वयमेव श्रीभवानन्देन स्वकीयबहुग्रन्थेषु नितरामक्षीणा समुपज्ञिता भगवत्यधोक्षजे भक्तिः। तदिदं नोपपद्यते कस्यापि तान्त्रिकवीराचारे श्रद्दधानस्य। तथापि नासत्यमिदं यद्येवमसत्यपि तत्र सुधियां वीराचारमूले विद्वेषे 'न तेजस्तेजस्वी प्रसृतमपरेषां प्रसहते' इति न्यायेन कारणान्तरेण वा तत्रासीदेव तदानीममूया गौडीयविदुषां यया निर्दोषमपि प्रकाशं ते नोपादेयतया गृहीतवन्तः, परं दोषानध्यारोप्य प्रत्याख्यातवन्तः। तदिदमुक्तं प्रकाशस्य टीकाकृता महादेवभट्टेन स्वकीयटीकाप्रारम्भे यथा,—

अनालोच्य सिद्धान्तवागीशवाण्यां
वृथासूयितैः पण्डितैर्गौड़जातैः।
यदुद्भासितं दूषणाभासवृन्दं
तदुद्धारणार्थो ममोद्योग एषः। इति

श्रीकृष्णदाससार्वभौमो नाम सुप्रसिद्धः प्राचीनो नैयायिकः श्रीभवानन्दस्य गुरुरवर्तनेति दृढं प्रतिपादितं न्यायेतिहासमालिकशिरोमणिना दीनेशचन्द्र-भट्टाचार्येण। सोऽयं कृष्णदाससार्वभौमो दीधितिप्रसारिणीं नाम दीधितिटीकां प्रणिनाय। अयम् 'अनुमानालोकप्रसारिणी' प्रभृतीनामन्येषामपि बहुग्रन्थानां रचयिता। किं बहुना विद्यानिवाससूनु-श्रीविश्वनाथन्यायपञ्चाननकृतित्वेन सुचिरात् प्रभृति नैयायिकसम्प्रदायेषु प्रख्याताया भाषापरिच्छेदकारिकावल्यास्तदीयसिद्धान्तमुक्तावलीसमाख्य-

व्याख्यायाश्च स एव कृष्णदाससार्वभौमो रचयिता न विद्यानिवाससूनुः श्रीविश्वनाथ इत्यपि दृढमुपपादितं स्वकीयवङ्गभाषामयन्यायेतिहासग्रन्थे तेनैव भट्टाचार्येण। सहैव च युक्तिजालेन कृष्णदाससार्वभौमो भवानन्दस्य गुरुरिति दृढमुपपादयता प्रत्याख्यातं मथुरानाथतर्कवागीशस्य रघुनाथतार्किकशिरोमणेर्वा केषाञ्चन निर्मूल-प्रवादसिद्धं भवानन्दसिद्धान्तवागीशगुरुत्वम्।

भवानन्दसिद्धान्तवागीशस्य पौत्रः श्रीरुद्रतर्कवागीशः सुप्रसिद्धो नैयायिक आसीत्। तेन स्वपितामह-श्रीभवानन्दसिद्धान्तवागीशकृतकारकचक्राख्यग्रन्थस्य रौद्रीनाम्नी व्याख्या व्यधायि, यया रौद्रीसमाख्यव्याख्यया माधवतर्कसिद्धान्तकृतया चान्यया माधवीसमाख्यव्याख्यया समलङ्कृतं मुद्रापितं भवानन्दीयकारकचक्र-मद्यापि भूयः प्रचरद्रूपं नानासंस्कृतपरीक्षास्ववश्यपाठ्यतया विनिर्दिष्टमधीयते नियमेन विद्यार्थिवृन्दैः। सत्स्वपि श्रीभवानन्दसिद्धान्तवागीशस्य बहुषु 'प्रत्यक्षालोक-सारमञ्जरी' 'अनुमानालोकसारमञ्जरी' 'शब्दालोकसारमञ्जरी' 'शब्दार्थसारमञ्जरी' प्रभृतिषु ग्रन्थरत्नेषु केवलमेकं कारकचक्रमेव बहोः कालात् प्रभृति वङ्गेषु लब्धप्रचारं पण्डितकोटौ श्रीभवानन्दस्य नाम संस्मारयतीत्यतिदुःखावहमेवेदम्।

देशान्तरेषु बहुविश्रुतस्य भवानन्दस्य वङ्गेष्वपि केचन शिष्याः सुप्रसिद्धा आसन्। तेषु विद्वन्मोदतरङ्गिणीकारस्य श्रीचिरञ्जीवभट्टाचार्य्यस्य जनकः श्रीराघवेन्द्रशतावधानभट्टाचार्य्यः सुतरां प्रशस्तिमर्हति। यमधिकृत्य प्रोक्तं विद्वन्मोदतरङ्गिणीकारेण चिरञ्जीवेन,—

तेषामेव गुणोत्तरः समजनि श्रीराघवेन्द्रः कृती,
बाल्ये यं समुदीक्ष्य लक्षणयुतं तातोऽनुरक्तोऽभवत्।
लेभे षोड़शवार्षिकः कृतिमतामानन्दवृन्दाङ्कुरो
भट्टाचार्य्यशतावधानपदवीं यस्तीर्णविद्यार्णवः।

तदीयो गुरुः श्रीभवानन्दसिद्धान्तवागीशस्तस्य विश्वातिशायिप्रतिभया विस्मयातिशयमातसादित्यपि तत्रैवोक्तं तरङ्गिणीकारेण यथा—

अधीयानमुद्दिश्य चाध्यापको यं
भवानन्दसिद्धान्तवागीश ऊचे।
अयं कोऽपि देवोऽनवद्यातिविद्या-
चमत्कारधारामपारां बिभर्त्ति। इति

'स एष भवानन्दशिष्यः शतावधानभट्टाचार्य्यः बुभुत्सूनां श्रौतमन्त्रार्थगतमज्ञानं विघटयितुं 'मन्त्रार्थदीपं' नाम ग्रन्थं कालतत्त्वार्णवसमुत्तरणाय 'रामप्रकाशं' नाम ग्रन्थञ्च निबबन्धेति तत्रैव व्यक्तम् ।

श्रीभवानन्दस्यापरोऽपि कश्चन वङ्गीयः प्रसिद्धशिष्य आसीत्, यस्य नाम देवीदासविद्याभूषण इति, वासश्चासीदस्य पाटलिसमाख्ये ग्रामे । स हि नवद्वीपनिवासिनोन्यायस्मृतिटीकाकृतः कृष्णकान्तविद्यावागीशस्य वृद्धप्रपितामह इति सप्रमाणमुल्लिखितं दीनेशचन्द्रभट्टाचार्येण ।

तदेवं सत्स्वपि द्वित्रेषु भवानन्दशिष्येषु वङ्गीयेषु न्यायतन्त्रे सुप्रसिद्धिमुपगतास्तेषु केचन नोपलभ्यन्ते, नापि समीक्ष्यते वङ्गेषु जगदीशगदाधरादिसम्प्रदाय इव सम्प्रवृत्तो नव्यन्यायशास्त्रे कोऽपि भवानन्दीयः सम्प्रदायः । अथ च कृते तावद् व्याख्यानगुणविचारे तदीयः प्रकाशग्रन्थो जगदीशगदाधरादिकृतदीधितिव्याख्यानग्रन्थान्नातिन्यूनगुणः प्रतिभायात् । अतः स एव भवानन्दीयः प्रकाशग्रन्थोऽपि जगदीशादिकृतदीधितिव्याख्यानमिव मणिदीधितितत्त्वप्रतिपत्त्या नव्यन्यायविद्याभिवृद्धये सुतरामुपयुज्यते । प्राचीनतरञ्चेदं व्याख्यानं तत्त्वचिन्तामणिदीधितेरिति सर्वथायं प्रकाशः प्रकाशनीय इति निर्धार्य्य कलिकाता-एसियाटिक् सोसाइटीपरिषदा कृतस्तत्प्रकाशनस्य समारम्भः । येन नितरामर्हत्यसौ सुधियामनेकशः साधुवादान् ।

तस्य च प्रथमो भागो व्याप्तिग्रहोपायग्रन्थपर्य्यन्तः कतिपयवत्सरेभ्यः पूर्वमस्या एव परिषदः प्रेरणया स्वर्गतमहामहोपाध्याय-गुरुचरणतर्कदर्शनतीर्थमहाभागैः सुसंस्कृतः प्राकाश्यमासाद । सम्प्रति सुचिरादूर्ध्वं मया तथैव परिषदा प्रेरितेन संस्क्रियमाणः प्रकाशमुपयाति तर्कप्रकरणादारभ्य पक्षताप्रकरणान्तो द्वितीयो भागः । तत्रापि पूर्वभाग इव तत्त्वचिन्तामणिमूलम्, तदनुगता दीधितिः, तदनुगामी दीधितिप्रकाशः, पाठान्तरम्, स्वकृता पदटिप्पनी चेत्येतानि वस्तूनि सन्ति सन्निवेशितानि ।

तत्र तत्त्वचिन्तामणिमूलपाठविषये एसियाटिक्सोसाइटीमुद्रापितमथुरानाथटीकासहिततत्त्वचिन्तामणिसंस्करणात्, काशीचौखाम्बाप्रकाशितात् जगदीशटीकोपस्कृतदीधितिसहितानुमानतत्त्वचिन्तामणिसंस्करणात् तथा गादाधरीसहितदीधितिसम्बलितानुमानतत्त्वचिन्तामणिसंस्करणात्, वामाचरणभट्टाचार्यन्यायाचार्य्यसम्पादितात् तर्कप्रकरणात् तथा सामान्यलक्षणाप्रकरणात्, कलिकाता-एसियाटिक्सोसाइटीग्रन्थागारलब्धात् हस्तलिपिमयाद् दीधितिप्रकाशोपस्कृत-दीधितिटीकोपेता-

खण्डानुमानतत्त्वचिन्तामणिग्रन्थात् तथैव खण्डितादन्यस्मात् परिप्राप्तं प्रकृतसंस्करणं साहाय्यकम्। दीधितिपाठविषये तु वामाचरणन्यायाचार्यसम्पादितं तर्कप्रकरणं तथा कलिकाताएसियाटिक्सोसाइटीप्रकाशितमाथुरीसहिततत्त्वचिन्तामणिसंस्करणं विना सर्वस्मादेवान्यस्मात्। दीधितिप्रकाशपाठविषये पुनः देवनागराक्षरलिखितः कलिकाता-एसियाटिक्सोसाइटीग्रन्थागारसंरक्षितः सम्पूर्णो दीधितिप्रकाशोपस्कृतदीधिति-सम्वलितानुमानतत्त्वचिन्तामणिग्रन्थ एवात्र मुख्यमवलम्बनम्। दीधितिप्रकाशाद्-पाठान्तरविषये सत्स्वपि देशान्तरस्थग्रन्थागारगतेषु नैकेष्वादर्शपुस्तकेषु दुरतिक्रम-कारणान्तरेण तेषामसौलभ्यात् कलिकाता-एसियाटिक्सोसाइटीग्रन्थालयसंरक्षितं हस्तलिखितं पुस्तकद्वयं, कलिकाता-राष्ट्रियसंस्कृतमहाविद्यालयग्रन्थागाररक्षितं ग्रन्थद्वयं, कलिकातासंस्कृतसाहित्यपरिषद्ग्रन्थागारगतं वङ्गाक्षरलिखितमखण्डमेक मनुमानदीधितिप्रकाशपुस्तकञ्च केवलमत्र मे साहाय्यं व्यधत्त। पदटिप्पन्यान्तु सोसाइटीग्रन्थागारपरिप्राप्तया महादेवभट्टकृत-सर्वोपकारिण्याख्यप्रकाशव्याख्यायाः, क्वचित् क्वचित् जगदीशकृतदीधितिव्याख्यायास्तथा गदाधरकृतदीधितिटीकायाः, स्थलविशेषेषु च कुतश्चित् कुतश्चिदन्यस्मात् परिगृहीतमानुकूल्यं नाम। प्रकृत-'श्रीभवानन्दादिवृत्तरेखा'निबन्धनिबन्धने सुमहदुपकृतं नो महामहोपाध्याय-फणिभूषणतर्कवागीशकृतन्यायपरिचयग्रन्थेन दीनेशचन्द्रभट्टाचार्यकृतेन च वङ्गे नव्यन्यायचर्चेत्याख्येन ग्रन्थेन। ततः कालधर्मेण स्वर्गतं तद्ग्रन्थकारद्वयमुद्दिश्य सुमहतीमात्मनः कृतवेदितां निवेदयामः। अपि च परां कृतज्ञतां विज्ञापयामस्तेषां येषामौदार्य्यादिगुणगणेन वयमेतद्ग्रन्थसम्पादनश्रमं फलोपहितं कर्तुमवसरं लब्धवन्तः, यैश्च स्वल्पेनैव कालेन मुद्रापणायोजनादिकं विधाय यथायथमस्य ग्रन्थस्य त्वरया प्रकाशने कृतः सुसमीचीनः प्रबन्धो नाम। तेषां विद्याप्रतिष्ठानानामपि वेदयामो निरवधि कृतवेदितां यैः स्वग्रन्थागारगतास्मदपेक्षितग्रन्थपरीक्षणस्य समीचीनं प्रबन्धं विहितवद्भिः प्रदर्शितं सुमहदात्मौदार्य्यम्। तदेते वयं तैस्तैः सुतरामुपकृताः कृतज्ञतया समावर्जिताः परमेशपदारविन्दे तेषां कल्याणं कामयामहे।

अथ पर्यन्ते सविनयं निवेदनमिदं विदुषामन्ते यत् प्रारम्भादन्तं यावत् सावधानमेव संशोधनव्यापारे व्यवसितस्यापि मे दृष्टिदोषेण वा स्वल्पवेदितया वा कारणान्तरेण वा ये तावदत्र त्रपाकराः समापतिता दोषास्तानेतान् हंसनीरक्षीरन्यायेन परिवर्ज्य यद्यत्र क्वचिद् गुणलेशस्तदा स एव सुधीभिरनुकम्पया समुपादेय इति शम्।

विनयावनत-संस्कर्तुः

श्रीकालीपदतर्काचार्यदेवशर्मणः

# अथ तर्कप्रकरणे

## तत्त्वचिन्तामणिः

तथाहि(क) धूमो यदि वह्न्यसमवहिताजन्यत्वे सति वह्निसमवहिताजन्यः स्यात्(१), नोत्पन्नः स्यादित्यत्र किं धूमोऽवह्नेरेव भविष्यति, क्वचिद् वह्निं विनापि भविष्यति, अहेतुक एव वोत्पत्स्यत इति शङ्का स्यात्, सर्वत्र स्वक्रियाव्याघातः स्यात्।

## अथ तर्कप्रकरणे

## दीधितिः

हुताशनरासभादिपदार्थसार्थस्यान्वयव्यतिरेकयोरन्वयव्यतिरेकौ धूमस्योपलभमानः (ख) अवश्यमेतेषामन्यतमं कारणं धूमस्येत्यवधार्य सन्दिग्धे(ग),—किमेतानि सर्वाण्येव कारणानि ? किं वा कानिचित्तथा कानिचिन्न(२) नेति।

(१) 'स्यात्, तदा नोत्पन्नः' इति पाठान्तरम्। (२) 'कानिचिन्नेति' इति पाठान्तरम्।

(क) यद्यप्यनेकतर्कप्रकरणादर्शग्रन्थेषु 'तर्कस्य व्याप्तिग्रहमूलकत्वेनानवस्थेति चेन्न, यावदाशङ्कं तर्कानुसरणात्। यत्र च व्याघातेन शङ्कैव नावतरति, तत्र तर्कं विनैव व्याप्तिग्रहः।' इत्यस्य व्याप्तिग्रहोपायाङ्गतया पूर्वं निबद्धस्य सन्दर्भस्य तर्कप्रकरणाङ्गतया निबन्धो दृश्यते, तथापि प्राचीनप्रामाणिकसम्प्रदायसिद्धतया श्रीगुरुचरणादिसम्मततया च 'तथाहि धूमो यदी' त्यादित एव तर्कप्रकरणारम्भः क्रियते।

(ख) अन्वयव्यतिरेकयोः, सतोरिति शेषः। तथाहि तादृशपदार्थसार्थस्यान्वये सति धूमस्यान्वयं व्यतिरेके च सति व्यतिरेकमुपलभमान इत्यर्थः

(ग) 'सन्दिग्ध' इत्यनेन प्रकृतावधारणस्य अन्यतमत्वसामानाधिकरण्येन कारणत्वावगाहित्वं सूचितम्। अन्यथा अन्यतमत्वावच्छेदेन तस्य धूमकारणत्वावगाहित्वे हुताशनाद्यन्यतमत्वेन गृह्यमाणे हुताशनाद्यन्यतमे क्वापि निरुक्ताकारसन्देहायोगात्। एतेन हुताशनाद्यन्यतमत्वावच्छेदेन धूमकारणत्वनिर्णये अवच्छेदकधर्मदर्शनविधया तादृशान्यतमत्वनिर्णयस्यैव वह्नौ धूमकारणत्वसंशयनिवर्त्तकत्वसम्भवात् प्रकृततर्कानुसरणवैफल्याशङ्कापि निरस्ता।

किमेतानि सर्वाण्येवेत्यत्र निरुक्तान्यतमत्वावच्छेदेन प्रकृतकारणत्वभानप्रत्यायनाय सर्वाणीति विशेषणम्। अन्यथा प्रकृते सामानाधिकरण्यमात्रेण कोटिद्वयस्य विरोधाभावात्

तत्र(१) च यस्य व्यतिरेकेऽपि इतरेभ्यस्तथाविधेभ्यो धूमोत्पत्तिमुपलभते, तस्याहेतुत्वमवधारयति, यथा रासभादेः। यस्य च व्यतिरेके तादृशापरसंकलान्वयेऽपि धूमानुत्पत्तिं पश्यति, तस्य कारणत्वमेव निश्चिनुते। यथा वह्नेः। तत्र च अकारणत्व-सन्देहो विरोधितामासादयन् निवर्त्यते(२) येन तर्केण(A) तमाह "धूम" इत्यादि [ना]।

(१) 'अत्र च' इति पाठान्तरम्। (२) 'निवर्त्तते' इति पाठान्तरम्।

तथा कोटिद्वयावगाहिनि प्रकृतज्ञाने संशयत्वमेव नोपपद्यते। न चान्यतमत्वावच्छेदेनाभाव-कोट्यवगाहित्वेऽपि प्रकृते संशयत्वं नानुपपन्नमिति वाच्यम्, अन्यतमत्वसामानाधिकरण्येन प्रकृते कारणत्वावधारणस्य तद्विघटकत्वादिति ध्येयम्।

(A) तर्क आपत्तिः प्रसङ्ग इत्याद्यनर्थान्तरम्। तल्लक्षणमाह न्यायसूत्रकारः,—'अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्क' इति। (अ-१, आ-१, सू ४०) तदर्थमाह विश्वनाथः,—'तर्क' इति लक्ष्यनिर्देशः। 'कारणोपपत्तित ऊह' इति लक्षणम्। 'अविज्ञाततत्त्वेऽर्थे तत्त्वज्ञानार्थ'मिति प्रयोजनकथनम्। 'कारणं' व्याप्यम्। तस्य 'उपपत्तिः' आरोपः। तस्मात् 'ऊहः'। आरोपः अर्थात् व्यापकस्य। तथा च व्यापकाभाववत्त्वेन निर्णीते व्याप्यस्याहार्य्यारोपाद् यो व्यापकस्याहार्य्यारोपः स तर्कः। यथा निर्वह्नित्वारोपान्नि-र्धूमत्वारोपो 'निर्वह्निः स्यान्निर्धूमः स्या'दित्यादिः।

केचित्तु 'ऊह' इत्येतावन्मात्रं लक्षणमामनन्ति। तन्मते ऊहत्वमेव तर्कत्वं, तच्च तर्कयामि आपादयामीत्याद्यनुभवसाक्षिको मानसत्वव्याप्यजातिविशेषः। 'कारणोपपत्तित' इति च कारणस्य व्याप्तिज्ञानादेः परम्परया उपपादनद्वारा तदुपयोगप्रदर्शनपरम्।

स चायं तर्क आत्माश्रया-न्योन्याश्रय-चक्रका-नवस्था-तदन्यबाधितार्थप्रसङ्गभेदात् पञ्च-विधः। तत्र आत्माश्रयादीनां चतुर्णां लक्षणोदाहरणानि प्रकृतानुपयोगितया न सविशेषमाख्यायन्ते। तदन्यबाधितार्थप्रसङ्गस्य तु प्रकृते उपादेयतया स एव विशेषतो विभ्रियते। तदन्येत्यत्र तत्पदेन आत्माश्रयादीनां चतुर्णां परिग्रहः। तथा च आत्माश्रयादिचतुष्टयान्य-प्रमाणबाधितार्थप्रसङ्गः तदन्यबाधितार्थप्रसङ्गः। स एष द्विविधो व्याप्तिग्राहक-विषयपरिशोधकभेदात्। तत्र प्रथमो यथा; धूमो यदि वह्निव्यभिचारी स्याद्, वह्निजन्यो न स्यादित्यादिः। द्वितीयो यथा; पर्वतो यदि निर्वह्निः स्यात् निर्धूमः स्यादित्यादिः।

तर्कं प्रति पक्षे आपाद्याभाववत्तानिश्चयः आपादकवत्त्वांशे आहार्य्यरूप आपाद्यव्याप्यापा-दकवत्तानिश्चयश्चेति द्वयं कारणम्। प्रतिबध्नाति चासौ पक्षे आपादकवत्ताबोधम्। प्रतिबन्धकता चास्य, यत्र शुद्धस्यापादकता तत्र तद्धर्मावच्छिन्नवत्ताबुद्धौ तद्धर्मावच्छिन्नापादकताकापत्तित्वेन, यत्र विशिष्टस्यापादकता तत्र विशेष्यवत्ताबुद्धौ विशेषणवत्तानिश्चयसहकृतविशिष्टापादककापत्तित्वेन विशेषणवत्ताबुद्धौ च विशेष्यवत्तानिश्चयसहकृतविशिष्टापादककापत्तित्वेनेति।

# अथ तर्कप्रकरणे

## दीधितिप्रकाशः

व्याप्तिग्राहकतर्कप्रस्तावे(घ) कार्य्यकारणभावग्राहकतर्कप्रदर्शनस्य अर्थान्तरत्वं परिहरन्नेव तत्तर्कोपपादकं(ङ)(१) तर्कं दर्शयति,—'हुताशने'त्यादिना। 'रासभादी'-त्यादिना आर्द्रेन्धनादिपरिग्रहः।

यद्यपि वह्नेः कारणताग्रहे(२) तदन्वयव्यतिरेकग्रहस्यैव तन्त्रत्वेन रासभघटितस्य अन्वयव्यतिरेकानुविधानप्रदर्शनमग्रे तस्याहेतुत्वप्रदर्शनञ्च प्रकृतानुपयोगि, तथापि उक्तदिशा(३) वह्नाविव रासभेऽपि कारणताग्रहः कुतो न स्यादिति निरुक्ततर्कावतारस्य अकारणे(च) असम्भवमाविष्कर्त्तुं तथोक्तमिति।

(१) 'पादकं दर्शयति' इति क्वचित् पाठः। (२) 'कारणतायास्तदन्वये'ति क्वचित् पाठः। (३) 'उक्तदशाया'मिति पाठान्तरम्।

(घ) व्याप्तिग्राहकतर्को नाम प्रकृतहेतौ प्रकृतसाध्यव्याप्तिग्रहप्रतिबन्धकव्यभिचार-ज्ञाननिवर्त्तनद्वारा व्याप्तिग्रहप्रयोजकस्तर्कः। स च धूमो यदि वह्निव्यभिचारी स्याद् वह्निजन्यो न स्यादित्यादिरूपः। तत्रैव 'तद्विरहश्च क्वचिद् विपक्षबाधकतर्का'दित्यादिना अनवस्थाभावः प्रदर्शितो, न तु 'धूमो यदी'त्यादिकार्य्यकारणभावग्राहकतर्के, ततो धूमो यदीत्यादितर्के तद्व्युत्-पादनं न प्रकृतोपयोगीति प्रकृते प्रसक्तस्यार्थान्तरस्य परिहार आवश्यकः।

अर्थान्तरलक्षणञ्चाह गोतमः,—'प्रकृतादर्थादप्रतिसम्बद्धार्थमर्थान्तरम्' इति। (अ—५, आ—२, सू—७)। प्रकृतोपयुक्तमर्थमुपेक्ष्य असम्बद्धार्थाभिधानमर्थान्तरम् इत्यर्थः। तथात्वञ्च प्रकृते स्पष्टम्।

(ङ) 'तत्तर्कोपपादकं तर्कम्' व्याप्तिग्राहकतर्कोपपादकं कार्य्यकारणभावग्राहकं 'धूमो-यदी'त्यादितर्कमित्यर्थः। तादृशतर्कस्य व्याप्तिग्राहकप्रकृततर्कोपपादकत्वञ्च केषाञ्चिदित्थम्,—यथा धूमो यदि वह्निव्यभिचारी स्याद् वह्निजन्यो न स्यादित्यापत्तौ वह्निजन्यत्वरूपापाद्यव्यतिरेक-निश्चयो हेतुरापत्तौ बाधनिश्चयस्य हेतुत्वात्। प्रात्यक्षिके तस्मिन् वह्निजन्यत्वसंशयो विरोधी, प्रत्यक्षे ग्राह्यसंशयस्य प्रतिबन्धकत्वात्, संशयसामग्रीसम्पादकत्वाद्वा। तत्संशयनिवर्त्तकश्चायं प्रकृतस्तर्क इति परम्परया कार्य्यकारणभावग्राहकस्तर्कः प्रकृतं व्याप्तिग्राहकं तर्कमुपपादयतीति। अत्र प्रकरणे कार्य्यत्वकारणत्वयोस्तुल्यवित्तिवेद्यतासरणिरनुसरणीया।

(च) 'अकारणे' रासभादौ। असम्भवमिति,—कारणत्वसंशयनिवर्त्तनं द्वारीकृत्यैव कारणत्वनिश्चयं प्रति प्रकृततर्कस्योपयोगित्वेनाहेतुत्वनिश्चये तेनैव प्रतिबन्धात् प्रकृतकारणता-सन्देहासम्भवेन तन्निवर्त्तनार्थं तर्कावतारस्य अनावश्यकत्वादिति भावः।

वस्तुतस्तु 'अवह्नेरेव भविष्यती'ति शङ्काव्युदासार्थं वह्नियुक्तकारणस्तोमान्वये धूमान्वयप्रदर्शनम्(१)। 'अहेतुक एव वोत्पत्स्यत' इति शङ्कानिराकरणायावश्यमेतेषा मन्यतमं कारणं धूमस्येत्यवधारणं दर्शितम्। एतदुपपादकतयैव वह्निव्यतिरेकोऽपि(२) दर्शितः।

अयं धूमः तृणारणिमणिन्यायेन क्वचिद् वह्नेर्भविष्यति, क्वचिद् वह्निं विनापि कारणान्तररासभादेर्भविष्यतीत्याकारिका या(३) क्वचिद् वह्निं विनापीति शङ्का, तन्निराकरणाय रासभादेरहेतुत्वनिश्चयोपदर्शनम्। यस्य च व्यतिरेके(४) तादृशापरसकलान्वयेऽपि धूमानुत्पत्तिं पश्यतीत्यनेन च वह्न्यसमवहिताजन्यत्वस्य वह्न्यसमवधानकालीन वह्नितत्समवधानेतरयावत्कारणकत्वस्य च धूमे सत्त्वमादर्शितमिति सारम्।

'तत्र च' कारणत्वनिश्चये च। 'अकारणत्वसन्देह' इति—धूमे वह्निजन्यत्वनिर्णये समानवित्तिवेद्यतया वह्नावपि धूमकारणत्वग्रहः सम्भवतीत्याशयेनेदम् (छ)। स्वारसिक(ज)सन्देहस्य तर्ककारणीभूतव्याप्यवत्ताज्ञानेनैव निरासा(झ)दाहार्य्यसन्देहोऽयम्। तस्याविरोधित्वे तु इच्छाघटिततत्सामग्री(ञ) तथा बोध्या।

---

(१) 'स्तोमान्वयव्यतिरेकप्रदर्शन'मिति पाठान्तरम्। (२) पुस्तकविशेषे 'वह्नि' इति नास्ति। (३) पुस्तकभेदे 'या' इत्यंशो नास्ति। (४) क्वचित् 'व्यतिरेकेऽपि' इति पाठः। (५) क्वचित् 'इच्छाघटिततत्सामग्री'त्यत्र 'इच्छाघटित-सामग्री'त्येतन्मात्रं दृश्यते।

(छ) 'इदम्' अकारणत्वसंशयस्य वह्निजन्यत्वसाधकतर्कप्रतिबध्यत्वनिरूपणम्।

(ज) 'स्वारसिकसन्देहस्य' अनाहार्य्यापादकसंशयस्येत्यर्थः।

(झ) तर्ककारणीभूतव्याप्यवत्ताज्ञानेनेत्यस्य तर्कहेतुभूतापाद्यव्याप्यापादकवत्तानिश्चयेनेत्यर्थः। निरासादिति ;—तथाहि तदर्थं तर्कानुसरणमफलमिति भावः। ननु पक्षधर्मत्वांशे आहार्य्यरूपस्यापाद्यव्याप्यापादकवत्तानिश्चयस्य तर्कं प्रति कारणत्वसिद्धेराहार्य्यज्ञानस्याविरोधित्वेन च कथं तर्ककारणीभूतेनाहार्य्यव्याप्यवत्ताज्ञानेनापादकसन्देहप्रतिबन्धः, येन तर्कवैफल्यं प्रसज्येतेति चेन्न, तादृशाहार्य्यनिश्चयप्रयोजकेनानाहार्य्यापादकाभाववत्तानिश्चयेन पूर्ववर्त्तिना तत्रापादकसंशयप्रतिबन्धोपपत्त्यैव प्रकृते तर्कवैफल्यस्य लब्धास्पदत्वादित्यादिदिशा चिन्त्यम्।

(ञ) 'तत्सामग्री' आहार्य्यसंशयसामग्री। 'तथा बोध्या' विरोधिनी बोध्या। इच्छाघटितसामग्र्या बलवत्त्वादिति भावः।

## दीधितिः

अनुसन्धेयश्चावश्यं कार्य्यकारणभावग्रहः तदधीनत्वाद् व्याप्तिबुद्धेः। सामानाधिकरण्येनान्वयव्यतिरेकग्रहाज् (A) जायमानस्य तथैव हेतुहेतुमद्भावं गृह्णतस्तस्यैव वा व्याप्तिपरिच्छेदकत्वात्।

## दीधितिप्रकाशः

प्रकृतोपयोगित्वं दर्शयति,—'अनुसन्धेयश्चे'ति। तर्कप्रयोक्तुरिति शेषः। प्रतिपाद्यस्य (ट) कार्य्यकारणभावग्रहस्य फलं प्रतिसन्धायैव(१) तर्कप्रयोगादिति भावः।

'तदधीनत्वा'दिति,—'धूमो यदि वह्निव्यभिचारी स्यात् सामानाधिकरण्यप्रत्यासत्त्या वह्निजन्यो न स्यात्' एतादृशतर्कोत्थापकतयेति शेषः। अवश्याभ्युपेयस्य सामानाधिकरण्यप्रत्यासत्त्या(२)कार्य्यकारणभावग्रहस्यैव व्याप्तिग्रहत्वं दर्शयति,—'सामानाधिकरण्येने'ति। एतेन व्याप्तिग्रहकारणीभूतस्य सहचारज्ञानस्य व्यभिचारज्ञानाभावस्य च सत्त्वमादर्शितम्। 'तथैव' सामानाधिकरण्येनैव। 'गृह्णतः' विषयीकुर्वतः। 'तस्यैव' कार्य्यकारणभावग्रहस्यैव। 'व्याप्तिपरिच्छेदकत्वात्' व्याप्तिविषयकत्वात्।

न च कार्य्यकारणभावग्रहस्य सामग्रीबलाद्(३) व्याप्तिविषयकत्वेऽपि तस्य व्याप्तिग्रहानुपयोगितया तदुपपादकतर्कस्य प्रकृतानुपयोगित्वमेवेति(४) वाच्यम्; धूमत्वावच्छेदेन वह्निजन्यत्वे लाघवमित्याकारकलाघवज्ञानस्य तदवच्छेदेन वह्निजन्यत्वग्राहकसामग्रीसहकृतस्यैव सामान्यव्यभिचारशङ्कायामुत्तेजकतया तर्कानवतारे

(१) 'प्रतिपाद्यकार्य्यकारणभावग्रहमनुसन्धायैव' इति क्वचित् पाठः। (२) प्रत्यासत्त्या कारणभावग्रहस्यैव' इति क्वचित् पाठः। (३) 'वशा'दिति क्वचित् पाठः। (४) आदर्शविशेषे 'एव' शब्दो नास्ति।

---

(A) सामानाधिकरण्येनान्वयव्यतिरेकग्रहादित्यस्य 'यत्र यदा कार्य्यं तत्र तदव्यवहितप्राक्क्षणे कारणम्, यत्र यदा कारणाभावस्तत्र तदग्रिमक्षणे कार्य्याभाव' इत्येवंरूपान्वयव्यतिरेकग्रहादित्यर्थः। न तु 'यदा कार्य्यं तदव्यवहितप्राक्क्षणे कारणम्, यदा कारणाभावस्तदग्रिमक्षणे कार्य्याभाव' इत्येवंरूपग्रहादपीत्यर्थः। तथाभूतकालमात्रघटितान्वयव्यतिरेकग्रहग्राह्यस्य कालिकप्रत्यासत्त्यवच्छिन्नकार्य्यत्वस्य व्याप्तिविरोधिव्यभिचाराव्यावर्त्तकत्वात्।

(ट) प्रतिपाद्यस्येति तर्कजन्यप्रतिपत्त्याश्रयत्वेनाभिमतस्य पुरुषस्येत्यर्थः। षष्ठ्यर्थो निष्ठत्वं तच्च ग्रहान्वयि, फलं तर्कादिसम्पादनेन प्रकृतव्याप्तिग्रहः। ज्ञाप्यस्येति वा।

तादृश(ठ)सामग्रीविरहात् उक्तलाघवज्ञानस्य अनुत्तेजकत्वे सामान्यव्यभिचारशङ्का-वशाद् व्याप्तिधीप्रतिबन्धापत्त्या तादृशोत्तेजकसम्पादकतयैव तर्कस्योपयोग-सत्त्वात्(१)।

न च कारणताग्राहककालिकव्याप्तिग्रह(२) एव तत्सामान्यव्यभिचारशङ्कायाः प्रतिबन्धकत्वे(३) तादृशलाघवज्ञानस्योत्तेजकतया दैशिकव्याप्तौ न तदुत्तेजकत्व-मिति(४) वाच्यम्; सामानाधिकरण्येन धूमत्वावच्छेदेन वह्निजन्यत्वग्रहस्य तादृश-दैशिकव्याप्तिमविषयीकृत्यासम्भवेन तत्रापि तदुत्तेजकत्वकल्पनादिति (५)।

## दीधितिः

विपर्य्यये(६) तत्कोटिमात्रपर्य्यवसायिनश्च तर्कस्य तदभावकोटिकशङ्का-निवर्त्तकत्वम्। अन्यथा धूमो यदि वह्नितच्छून्यजन्यान्यतरो न स्यात् जन्यो न स्यादित्यादेरपि तथात्वापत्तेः।

तथापर्य्यवसायिता च क्वचिद् विशेषतो व्याप्त्या सामान्यतोऽपि क्वचित् पक्षधर्मताबलात्। तत्सम्पत्तये च वह्न्यसमवहिताजन्यत्वेन पक्षो विशेष्यः। विशेषणवत्त्वेनोपस्थिते विशिष्टाभावबुद्धेर्विशेष्याभावावलम्बित्वात्। तथोपस्थिति-विरोधि च अवह्नेरित्यादिशङ्काद्वयमग्रे निरसनीयम्।

## दीधितिप्रकाशः

पक्षे(ड) वह्न्यसमवहिताजन्यत्वं विशेषणं दातुं प्रणालीमाह,—'विपर्य्यय' इति(७)। 'तत्कोटी'ति,—यदा यत् साधनीयं तदेव(८)तत्कोटिपदेनोक्तम्। यत्तर्कस्य आपादकव्यतिरेकवत्ताज्ञानं पक्षे तत्कोटिविषयतां विनानुपपन्नं, स एव तर्को विपर्य्यये तत्कोटिमात्रपर्य्यवसायी, तस्यैव तदभावकोटिक-शङ्काप्रतिबन्धकत्व-

(१) 'सम्भवा'दिति क्वाचित्कः पाठः। (२) 'व्याप्तिज्ञान एव तत्सामान्य-शङ्कायाः' इति क्वाचित्कः पाठः। (३) क्वचित् 'प्रतिबन्धकत्वेन' इति पाठः। (४) 'तदुत्तेजकमिति' इति क्वचित् पाठः। अन्यत्र 'तस्योत्तेजकत्वे'ति पाठः। (५) 'तस्योत्तेजकत्व' इति पाठान्तरम्। (६) 'विपर्य्यये च' इति क्वचित् पाठः। (७) 'विपर्य्यये च' इति क्वचित् पाठः। (८) 'तदा तदेवे'ति सम्यगाभाति।

(ठ) 'तादृशसामग्रीविरहात्' धूमत्वावच्छेदेन वह्निजन्यत्वग्राहकसामग्रीविरहात्, तर्कस्य वह्निजन्यत्वग्राहकसामग्रीघटकत्वादिति भावः।

(ड) 'पक्षे' आपत्त्युद्देश्यभूते धूमादौ।

मित्यर्थः(ढ)। 'चो'ऽवधारणे। 'अन्यथा' पाक्षिकतत्कोटिविषयतामात्रेणैव शङ्का-निवर्त्तकत्वे।

'वह्नितच्छून्यजन्यान्यतरो न स्या'दिति पाठः।--'तच्छून्यं' तदसमवहितम्। न च नान्तरीयकवह्निके व्यभिचारः, वह्न्यसमवधानकालीनवह्नितत्समवधानेतरयावत्-कारणकत्वरूपजन्यत्वाभावस्यैव आपाद्यत्वात्। तस्य(ण) च तत्रापि सत्त्वात्। वह्निपदस्य वह्नि(१)समवहितपरत्वे तच्छून्यपदस्य(२) वा वह्न्यघटितसामग्रीपरत्वे तु यथाश्रुतमेव(त) सम्यक्।

यत्तु व्यभिचारेऽपि तर्काभासता अक्षतै(३)वेति, तदसत्, विपर्य्यये तत्कोटिमात्रापर्य्यवसानेनैव तर्काभासतायाः(४) उक्तत्वात्, न तु व्यभिचारेणापीति। वह्नितच्छून्यान्यतरजन्यो न स्यादिति पाठस्तु वह्नित्वरूपेण तज्जन्यत्वकोटौ पाक्षिकप्राप्तेरप्यभावादश्रद्धेयः(५)।

'तथात्वापत्तेः' वह्निजन्यत्वाभावशङ्काप्रतिबन्धकत्वापत्तेः। 'तथापर्य्यवसायिता' तत्कोटिमात्रपर्य्यवसायिता। 'विशेषतो व्याप्त्या' तत्कोटिमात्रवृत्तिधर्मावच्छिन्न-निरूपितव्याप्त्या। 'सामान्यतो व्याप्त्या' तत्कोटि-तदितरकोटिसाधारणधर्मा-

(१) 'वह्निपदस्य समवहितपरत्वे' इति क्वचित् पाठः। (२) 'तच्छून्यशब्दस्य' इति क्वचित् पाठः। (३) 'अक्षुण्णैवेति' इति क्वचित् पाठः। (४) 'आभासतायाः' इति क्वचित् पाठः। (५) 'पाक्षिकप्राप्तेरप्यभावाद्धेय' इति क्वचित् पाठः।

(ढ) 'तदभावकोटिके'ति,—शङ्काया भावाभावरूपकोटिद्वयावगाहितया तत्कोटिकत्वे-तन्मात्रस्यैव सम्यक्त्वेऽपि निर्विशेषेण संशयनिश्चययोरुभयोरेव ज्ञानयोः प्रतिबध्यत्वसूचनाय तथोक्तमिति ध्येयम्।

(ण) 'तस्य च' वह्न्यसमवधानकालीन-वह्नितत्समवधानेतरयावत्कारणकत्वरूपजन्य-त्वाभावात्मकस्य आपाद्यस्य चेत्यर्थः। 'तत्रापि' नान्तरीयकवह्निके धूमरूपादावपीत्यर्थः। तथाहि स एव नान्तरीयकवह्निको धूमरूपादिर्यदुत्पादकयावत्कारणसमवधानदशायां नियमेन वह्नेरकारणस्यापि समवधानम्। अतस्तदीयकारणसमुदायस्य वह्न्यसमवधानकालीनत्वाभावेन तादृशं जन्यत्वं न तादृशे नान्तरीयकवह्निके धूमरूपादाविति व्यभिचारनिरासः।

(त) नान्तरीयकवह्निकस्य धूमरूपादेर्वह्निसमवहितजन्यत्वात् वह्न्यघटितसामग्रीजन्य-त्वाच्च तत्र आपादकाभावेन व्यभिचाराभावाद् यथाश्रुतजन्यत्वाभावरूपापाद्यपरिग्रहे दोषाभाव इति भावः।

वच्छिन्ननिरूपितव्याप्त्या। 'पक्षधर्मताबलात्' इतर(थ)कोटिबाधबलात्। 'तत्-सम्पत्तये' तादृशबलसम्पत्तये। 'तथोपस्थिती'ति, वह्न्यसमवहिताजन्यत्वविशिष्ट-पक्षोपस्थितीत्यर्थः।

## दीधितिः

वस्तुतो वह्न्यजन्यमपि वह्निसमवहितजन्यं वह्न्यसमवहिताजन्यञ्च सम्भवतीति वह्निजन्यत्वपर्य्यवसितं वह्निसमवहितजन्यत्वं वाच्यम्। तथा च घटादौ व्यभिचार-वारणाय आपाद्यकोटिप्रतियोगिविशेषणार्थकं(१) सत्यन्तम्।

अजन्ये जन्ये च नान्तरीयकवह्निके व्यभिचारवारणाय जन्य इति (द)। तदर्थस्तु वह्न्यसमवधानकालीन-वह्नितत्समवधानेतरयावत्कारणजन्यत्वम्, तथा-विधयावत्कारणकत्वमिति यावत्। तथा च वह्न्यसमवहिताजन्यत्वे सति वह्न्य-समवधानकालीन-वह्नितत्समवधानेतरयावत्कारणको न स्यादिति पर्य्यवसितोऽर्थः।

## दीधितिप्रकाशः

निष्कृष्टकल्पान्तरं वक्तुमत्र(२)कल्पे अस्वरसं प्रकाशयति(३) 'वस्तुत' इत्यादिना। 'वह्न्यजन्यमपी'ति ;—यद्यपि वह्निसमवहितजन्यत्वस्य वह्निजन्यत्वात्म-कत्वेऽपि न वह्निजन्यत्वाभाव-(ध) प्रकारकशङ्काप्रतिबन्धकत्वम्, न वा वह्निजन्यत्व-प्रकारकसिद्धौ तत्सहकारित्वम्, तद्रूपेण(न) तदभावस्य अनापादकत्वात्, तथापि वह्निसमवहितजन्यत्वस्य वह्निजन्यत्वरूपत्वे(४) तन्नियतत्वे वा व्यावर्त्तक(५)धर्म-दर्शनविधयापि प्रकृततर्कस्य वह्निजन्यत्वाभावशङ्काप्रतिबन्धकत्वं सम्भवतीति तत् प्रतिषिद्धमिति(६)।

(१) 'विशेषणम्' इति पाठान्तरम्। (२) 'वक्तुमस्मिन्' इति पाठान्तरम्। (३) 'प्रदर्शयती'ति पाठान्तरम्। (४) 'जन्यत्वस्वरूपत्वे' इति पाठान्तरम्। (५) 'तादृशव्यावर्त्तके'ति पाठान्तरम्। (६) 'इति' इत्यंशः पुस्तकान्तरे नास्ति।

(थ) 'इतरकोटिबाधबलादि'ति,—इतरबाधादिसहितस्य परामर्शस्य व्यापकतानव-च्छेदकेनापि रूपेण साध्यानुमितिहेतुत्वादिति भावः।

(द) जन्य इत्यर्थपरनिर्देशः, उत्पन्न इतीत्यर्थः।

(ध) 'वह्निजन्यत्वाभावेति वह्निजन्यत्वत्वावच्छिन्नप्रतियोगिताकाभावेत्यर्थः। वह्नि-जन्यत्वप्रकारकसिद्धावित्यत्रापि तथैव वह्निजन्यत्वत्वावच्छिन्नप्रकारकेत्यर्थः प्रतिपत्तव्यः।

(न) 'तद्रूपेण' वह्निजन्यत्वत्वेन रूपेण। 'तदभावस्य' वह्निजन्यत्वाभावस्य।

ननु, फलविशेषणीभूतवह्न्यसमवहिताजन्यत्वविशिष्टं वह्निसमवहितजन्यत्वं वह्निजन्यत्वव्याप्यं स्यादतस्तदपि(प) प्रतिषेधति 'वह्न्यसमवहिताजन्य'मिति। 'पर्य्यवसितं' तत्स्वरूपम्। मूलस्थ—वह्निसमवहितजन्य(१) पदं वा बह्निजन्यपरम्(२)।

ननु तर्कस्याहार्य्यशङ्काप्रतिबन्ध एव फलम्। स्वारसिक(फ)शङ्कायास्तर्ककारणीभूतव्याप्यवत्ताज्ञानेनैव निरासात्। भवति हि अनिष्टोपदर्शनेनेच्छाविच्छेदात् कारणाभावेनाहार्य्यशङ्काया अनुत्पादः। तद्धर्मावच्छिन्ने(३) अनिष्टोपदर्शनञ्च तद्धर्मावच्छिन्नज्ञानेच्छाविरोधि, न तु रूपान्तरेणापि। नीलघटत्वावच्छिन्ने अनिष्टोपदर्शनेऽपि घटत्वावच्छिन्नज्ञानेच्छाया अनिवृत्तेः। तदिह वह्न्यसमवहिताजन्यत्वविशिष्टे वह्निजन्यत्वाभावे अनिष्टोपदर्शने तज्ज्ञानेच्छा विच्छिद्यताम्, वह्निजन्यत्वाभावज्ञानेच्छा तु कुत(ब) इत्यभ्युपेत्य वह्निजन्यत्वाभावमेव केवलमापादकीकृत्याह तथा चेति।

अनुयोगि(भ)विशेषणत्वे व्यभिचारस्यैव सम्भवादाह 'प्रतियोगी'ति। तथा च वह्न्यसमवहिताजन्यत्वविशिष्टं यज्जन्यत्वं धूमादौ प्रसिद्धं तदभावः सर्वत्रास्तीति(म) न व्यभिचार इति भावः।

यथाश्रुतस्य व्यावृत्तिं दर्शयति,—'अजन्ये' इति। विवक्षणीयस्य(४) तां(य) दर्शयति,—'जन्ये चे'ति। 'नान्तरीयके'ति,—धूमजनकताघटकसम्बन्धेन स्वाव्यवहितपूर्वक्षणावच्छेदेन स्वाधिकरणे(५) प्रत्यासन्नः स्वाजनको वह्निर्यत्र तस्मिन् धूमरूपादा-

(१) 'जन्यत्वपदम्' इति क्वचित् पाठः। (२) 'जन्यत्वपरम्' इति क्वचित् पाठः। (३) 'तद्धर्मावच्छिन्नानिष्टोपदर्शनञ्च' इति क्वचित् पाठो दृश्यते। (४) 'विवक्षितस्य' इति पाठान्तरम्। (५) क्वचित् 'सम्बन्धेन' इत्यनन्तरं 'स्वाव्यवहिते'त्यतः पूर्वमेव 'स्वाधिकरणे' इति पाठो दृश्यते।

(प) 'तदपि' विशिष्टस्य वह्निजन्यत्वव्याप्यत्वमपि।

(फ) 'स्वारसिकशङ्कायाः' अनाहार्य्यशङ्काया इत्यर्थ।

(ब) 'कुत' इत्यस्य विच्छिद्यतामिति पूर्वेणानुषङ्गः।

(भ) 'अनुयोगिविशेषणत्व' इति जन्यत्वाभावरूपापाद्यविशेषणत्व इत्यर्थः। अभावत्वस्यानुयोगितात्मकत्वात्। अथवा जन्यत्वाभावे सामानाधिकरण्यसम्बन्धेन वह्न्यसमवहिताजन्यत्वस्य वैशिष्ट्यं साक्षात्सम्बन्धेन प्रकृतजन्यत्वाभावाधिकरणरूपानुयोग्यंशे तद्वैशिष्ट्यघटितमिति तदधिकृत्येदम्।

(म) सर्वत्रेति वह्न्यजन्य इति शेषः।

(य) 'विवक्षणीयस्य' तदर्थस्त्वित्यादिना विवरणीयस्य जन्यत्वस्येत्यर्थः। 'तां' व्यावृत्तिम्।

वित्यर्थः। एतेन वह्निजन्यत्वाभावरूपापादकस्य वह्न्यसमवहिताजन्यत्वस्य च आपाद्यकाद्यवृत्तियोगिविशेषणस्य(१) सत्त्वमादर्शितम्। यथाश्रुतजन्यत्वेन(२) नान्तरीयकवह्निके व्यभिचारस्यावारणादाह,— 'तदर्थस्त्वि'ति।

'वह्न्यसमवधाने'ति,—वह्न्यसमवधानकालीनानि वह्नितत्समवधानेतराणि यावन्ति कारणानि तज्जन्यो न स्यादित्यर्थः। ननु नान्तरीयकवह्निकस्यापि वह्न्यसमवधानकालीनानि यावन्ति कारणानि स्वप्रागभावादीनि तज्जन्यत्वसत्त्वाद् व्यभिचार इत्यत आह,—तथाविधयावत्कारणकत्व'मिति। तथा च वह्न्यसमवधानकालीनानि वह्नितत्समवधानेतर(३) धूमादिघटितानि यावन्ति कारणानि यस्येति विग्रहात् स्वीययावत्कारणवृत्ति(४) तदसमवधानकालीनत्वस्य विधेयत्वभानात्(५) नान्तरीयकवह्निकस्य तादृशयावत्कारणमध्यनिविष्टचरम(६) कारणे वह्न्यसमवधानकालीनत्वस्याभावान्न व्यभिचारः।

अत्र च वह्न्यसमवधानकालीनयावत्कारणकत्वं वह्न्यसमवहिताजन्यत्वविशिष्टमप्रसिद्धमतस्तद्वारणाय इतरान्तं कारणविशेषणम्। वह्नीतरयावत्कारणमध्यनिविष्ट- (७) तत्समवधानस्य तत्समवधानेतरयावत्कारणमध्यनिविष्टस्य च (८) वह्नेः(९) वह्न्यसमवधानकालीनत्वाभावादप्रसिद्धिरत(१०) उभयोपादानम्(र)। धूमरूपादौ व्यभिचारवारणाय 'वह्न्यसमवधानकालीने'ति। नान्तरीयकवह्निकस्य तु धूमरूपादेरादृशयावत्(११) कारणमध्यनिविष्टस्य धूमादेर्वह्न्यसमवधानकालीनत्वाभावादेव न व्यभिचारः। तादृशधूमरूपप्रागभावादेर्वह्न्यसमवधानकालीनत्वात्तत्रैव व्यभिचार इत्यतो यावदिति।

---

(१) 'विशेषणसत्त्व'मिति पाठान्तरम्। (२) 'यथाश्रुतं जन्यत्वे नान्तरीयके'ति पाठान्तरम्। (३) 'नेतराणि' इति पाठान्तरम्। (४) 'कारणे वह्न्यसमवधाने'ति पाठान्तरम्। (५) 'विधेयत्वान्न दोष इति पाठान्तरम्। तन्मते 'नान्तरीयके'त्यारभ्य 'व्यभिचार'इत्यन्तग्रन्थो नास्ति। (६) 'चरमधूमात्मक' इति पाठान्तरम्। (७) 'निविष्टस्य' इति क्वचित् पाठः। (८) क्वचित् 'च'- काररहितः पाठः। (९) 'निविष्टस्य वह्नेश्च' इति क्वचित् पाठः। (१०) 'सिद्धिरित्युभ' इति क्वचित् पाठः। (११) पुस्तकविशेषे 'यावत्' इति नास्ति।

(र) 'उभयोपादानम्' इतरत्वांशे प्रतियोगितया 'वह्नि-तत्समवधाने'ति द्वयोपादानम्। प्रकृते प्रतियोगिता च वह्नित्वेन तत्समवधानत्वेन च विशिष्य उपादेया, ततो भेदद्वयमेव यावत्कारणविशेषणम्। अन्यथा उभयत्वेन भेदमादाय दोषतादवस्थ्यात्।

अत्र च तद्वह्नेस्तद्धूमं प्रति कारणताघटकप्रत्यासत्तिरेव वह्निसमवधानम्। तस्यावच्छिन्नप्रागभाव एव वह्न्यसमवधानपदस्यार्थः। स च तद्धर्मावच्छिन्न-यावत्(१) प्रागभावो वा तद्धर्मावच्छिन्नप्रतियोगिताकप्रागभावो वेत्यन्यदेतत्। तेन(ल)पक्षीकृतधूमस्य देशान्तरीयवह्निसमवधानकालीनयावत्कारणकतया नाप्रसिद्धिः। न वा तद्वह्निसमवधानध्वंसकालीनयावत्कारणके तद्धूमरूपादौ(२) व्यभिचारः। अत्यन्ताभावविवक्षायान्तु(३) देशान्तरे पर्वतादौ धूमारम्भकसंयोगादिरूपस्य वह्निसमवधानस्य योऽत्यन्ताभावस्तत्कालीनत्वं धूमरूपकारणानामस्तीति व्यभिचारः स्यादिति ध्येयम् (४)।

तद्वह्नितत्समवधानेतर(५)धूमकारणयावद्व्यक्तीनां तदार्द्रेन्धनादिरूपाणा-मेतद्वह्निसमवधानात्मकार्द्रेन्धनसंयोगादिप्रागभावकालीनत्वेन तत्र नाप्रसिद्धिः। तद्धूमादेर्नान्तरीयकजनकयावन्मध्यपतितस्य तादृशप्रागभावकालीनत्वाभावेन च नान्तरीयके व्यभिचाराभावात्।

अत एव(व) यत्रेन्धने तद्वह्निसंयोगोत्पत्तिद्वितीयक्षणे नान्तरीयको घटादि-संयोगस्तत्र तज्जनकक्रियापूर्वसंयोगनाशादेर्वह्निसमवधानप्रागभावध्वंस(श)समान-कालीनत्वेऽपि न व्यभिचारः। तत्र पूर्वसंयोगनाशस्य तादृशप्रागभावसमानकालीनत्वा-भावात्। तस्यापि तद्वह्निसंयोगानन्तरोत्पत्स्यमानतद्धूमावयवसंयोगादिरूप-वह्नि-समवधानप्रागभावसमानकालीनत्वात् तद्वह्निसमवधानत्वावच्छिन्न(६) प्रतियोगिताक-प्रागभावपर्यन्तानुधावनम्।

(१) 'यावत्कारणप्रागभावो वा' इति पाठान्तरम्। (२) 'धूमरूपादौ' इति पाठान्तरम्। (३) 'एतद्वह्नि-अत्यन्ताभावे'ति पाठान्तरम्। (४) 'व्यभिचारः स्यादिति ध्येयम्' इत्यनन्तरं 'तद्वह्नि' इत्यादिः 'नान्तरीयकजनके'त्यन्तग्रन्थः पुस्तकविशेषे न दृश्यते। तत्र च तद्वह्नितत्समवधानेतरधूमरूपकारणे'ति ग्रन्थः, 'यावन्मध्यपतितस्य' इत्यनन्तरं 'तद्धूमादे'रिति च दृश्यते। (५) क्वचित् 'समवधानेतरे' त्यादिरेव पाठः। तत्रादौ 'तद्वह्नितत्समवधानेतरे'त्यादिरेव पाठः सुष्ठु प्रतिभाति। (६) पुस्तकान्तरे 'प्रतियोगिताक' इत्यंशो नास्ति।

---

(ल) 'तेन' तद्वह्नित्वेन वह्निनिवेशेन प्रागभावनिवेशेन चेत्यर्थः।

(व) 'अत एवे'ति, ध्वंसप्रागभावसाधारणकादाचित्काभावत्वेनाभावमनिवेश्य केवल-प्रागभावत्वेनाभावनिवेशादेवेत्यर्थः।

(श) प्रागभावध्वंसयोः प्रकृतक्रियापूर्वसंयोगनाशाभ्यां सह यथासंख्येनान्वयो बोध्यः।

न च तद्वह्निसमवधानप्राक्कालीन—वह्न्यन्तरसंयोगोत्पत्तिद्वितीयक्षणोत्पन्ने(१) इन्धनघटादिसंयोगे तद्वह्निसमवधानत्वावच्छिन्नप्रागभावकालीनयावत्कारणके व्यभिचार इति वाच्यम् तद्वह्न्यसमवहिताजन्यत्वस्य सत्यन्तार्थत्वात्(ष) वह्न्यन्तरसंयोगद्वितीयक्षणोत्पन्न(२) घटादिसंयोगादौ च तस्यासत्त्वात् ।

तद्वह्न्यसमवहिताजन्यत्वञ्च तद्वह्न्यसमवधानकालावच्छिन्नाजन्यत्वम् । तेन यत्रेन्धने तद्वह्निसंयोगोत्पत्तिकाले नान्तरीयको घटादिसंयोगस्तत्रापि न व्यभिचारः । तस्य तादृशसमवधानप्रागभावकालीनयावत्कारणकत्वेऽपि तद्वह्न्यसमवधानकालावच्छिन्न-(३)—जन्यत्वात् । कारणञ्चात्र फलोपधायकमेव धर्त्तव्यम् । तेन तद्वह्निसमवधानानन्तरोत्पन्नेन्धनव्यक्तेस्तद्धूमं प्रति स्वरूपयोग्यायास्तादृशसमवधानप्रागभावसमान(४)कालीनत्वाभावेऽपि न क्षतिः(स) ।

न च तद्वह्निसमवधानकालोत्पत्तिकार्द्रेन्धनव्यक्तेरपि तद्वह्निजन्यधूमं प्रति फलोपधायकत्वसम्भवात् तस्य च तादृशसमवधानप्रागभावकालीनत्वाभावात् तद्वह्न्यसमवहिताजन्यत्वविशिष्टनिरुक्तजन्यत्वस्याप्रसिद्धिरिति वाच्यम्; आर्द्रेन्धनजवह्नेरेव धूमं प्रति हेतुत्वेन स्वजन्यवह्निजन्यधूमं प्रत्येव तत्तदार्द्रेन्धनानां हेतुत्वेन तद्वह्नि(५)-समवधानकालोत्पन्नार्द्रेन्धनव्यक्तेस्तद्वह्निजन्यधूमं प्रत्यजनकत्वात्(६) ।

न च यत्र चरमोत्पन्नार्द्रेन्धनजवह्निना पूर्वोत्पन्नतादृशवह्निना च मिलित्वा एको धूमो जनितस्तत्र(ह) तद्दोषतादवस्थ्यमिति वाच्यम्; यत्र एकेनैव(७) वह्निना धूमो जनितस्तादृशस्थल एव उक्ततर्कावतारात् । तादृशवह्निद्वयज(८)धूमस्थले च चरमोत्पन्नतादृशवह्निमेव(९) तद्वह्नित्वेनोपादाय तादृशतर्कावतारस्य निष्प्रत्यूहत्वाच्च (१०) ।

(१) 'क्षणोत्पन्नेन्धन' इति क्वचित् पाठः । (२) पन्नेन्धनघटादि' इति पाठान्तरम् । (३) 'कालावच्छेदेनैव जन्यत्वात्' इति पाठान्तरम् । (४) 'भावकालीन' इति पाठान्तरम् । (५) 'तत्तद्वह्नि' इति क्वचित् पाठः । (६) 'प्रत्यहेतुत्वात्' इति क्वचित् पाठः । (७) 'एकेन वह्निना' इति क्वचित् पाठः । (८) 'वह्निद्वयजन्य' इति क्वचित् । (९) 'तादृशव्यक्तिमेव तद्व्यक्तित्वेनोपादाय' इति क्वचित् पाठः । क्वचिच्च 'तादृशवह्नि' इत्यत्र 'तादृशे'ति पदं नास्ति । (१०) 'निष्प्रत्यूहत्वात्' इत्येव क्वचित् पाठः ।

---

(ष) सत्यन्तदले लक्षणया वह्निपदस्य तद्वह्निरूपविशेषार्थपरत्वेन तथार्थलाभात् ।

(स) 'न क्षति'रिति न व्यभिचार इत्यर्थः । तादृशेन्धनव्यक्तेस्तद्धूमं प्रति स्वरूपयोग्यत्वेऽपि फलोपधायकत्वाभावात्तद्धूमीययावत्कारणानन्तर्गतत्वादिति भावः ।

(ह) 'तत्र' आर्द्रेन्धनजन्यवह्निद्वयजन्यधूमे । 'तद्दोषतादवस्थ्य'मित्यप्रसिद्धिदोषतादवस्थ्यमित्यर्थः ।

न च तथापि वह्नितत्समवधानेतरयावत्कारणमध्यनिविष्टस्य तद्धूमावयव-तत्संयोगादेस्तद्वह्निसमवधानकालीनत्वाभावादप्रसिद्धिरिति वाच्यम्; दण्डस्य घटजनकतायां चक्रसंयोग-भ्रमि-कपालिकाकपालद्वयसंयोगपर्य्यन्तानां व्यापारत्ववत् तद्वह्नेरपि तद्धूमजनकतायां तद्धूमावयवतत्संयोगपर्य्यन्तानां व्यापारतया तद्वह्निसम-वधानत्वेन तद्वह्निसमवधानेतरेत्यनेनैव वारणात्(क्ष)।

नचैवमपि तद्धूमावयवरूपादौ व्यभिचारः, तद्धूमावयवस्य तद्वह्निसमवधान-त्वेन(अ) तदितरयावत्कारणानां तद्वह्निसमवधानकालीनत्वादिति(१) वाच्यम्, तद्धूमावयवरूपादिजनकस्य तदवयव(आ)रूपस्य(२)वह्निसमवधानकालीनत्वाभावात्।

नचैवमपि तद्वह्नि(३) जन्य(इ) धूमद्व्यणुकैकत्वे व्यभिचारः, धूमद्व्यणुकस्य स्थूलधूमजनने व्यापारतया तदितरयावत्कारणस्य प्रागभाव(४)परमाण्वेकत्वादेस्तद्-वह्निसमवधानकालीनत्वादिति वाच्यम्; यत्र(ई)वह्न्यन्तरजन्यधूमत्रसरेण्वादिसंयोग-जननद्वारा तद्वह्निना स्थूलधूम उत्पादितः, तादृशधूमस्यैव पक्षत्वात्। तथा च तद्-वयवत्रसरेण्वाद्येकत्वानां तद्वह्निसमवहिताजन्यत्वाभावात् तादृशस्थूलधूमस्य च(५) स्वजनकतायामप्रत्यासत्तितया तद्वह्नितादृशस्थूलधूमजनकतत्समवधानेतर(६) यावत्-कारणमध्यनिविष्टस्य तादृशस्थूलधूमस्य च(७) तद्वह्निसमवधानकालीनत्वाभावेन

---

(१) आदर्शविशेषे 'तत्'पदं नास्ति। (२) 'रूपस्य च' इति क्वचित् पाठः। (३) 'तद्वह्न्यजन्य' इति क्वचित् पाठः। (४) 'स्वप्रागभाव' इति क्वचित् पाठः। (५) 'एकत्र 'चकारो' नास्ति। (६) आदर्शविशेषे 'तत्'पदं नास्ति। (७) आदर्श-विशेषे 'चकारः' नास्ति।

(क्ष) 'वारणा'दिति पूर्वोक्ताप्रसिद्धेरिति शेषः। व्यापारस्य प्रत्यासत्तित्वादिति भावः।

(अ) 'तद्वह्निसमवधानत्वेने'ति तद्वह्नेस्तद्धूमावयवरूपजनने तद्धूमावयवद्वारा हेतुत्वादिति भावः।

(आ) 'तदवयवरूपस्ये'ति तद्धूमावयवस्य योऽवयवस्तद्रूपस्येत्यर्थः। समवायिगत-रूपस्य समवेतवृत्तिरूपं प्रत्यसमवायिकारणत्वादिति भावः।

(इ) अत्र तद्वह्निजन्यत्वं धूमद्व्यणुकांशे विशेषणम्। तच्च धूमद्व्यणुकस्य वक्ष्यमाण-व्यापारत्वसम्पत्तिसूचनायेति। तद्वह्न्यजन्येति पाठस्तु एकत्वांशे तद्वह्न्यजन्यत्वस्य विशेषणत्वाभिप्रायेण, तच्च प्रकृते व्यभिचारोपयुक्तप्रकृतापादकसत्त्वप्रदर्शनार्थमुपयुज्यते।

(ई) 'यत्रे'ति धूमद्व्यणुकादिकमनुत्पाद्यैवेति शेषः। तथाहि तत्र तद्वह्निजन्यधूमद्व्यणु-कस्याप्रसिद्धैयव न निरुक्तव्यभिचारः।

तादृशस्थूलधूमैकत्वादौ व्यभिचाराप्रसङ्गात् । न हि तद्वह्निना द्व्यणुकमुत्पाद्यैव स्थूल-धूम उत्पाद्यत इति नियमे प्रमाणमस्ति ।

न च यत्र तादृश(१)धूमत्रसरेणुभिस्तद्वह्निसमवधानात्(२)पूर्वं चक्षुःसंयुक्तैस्तादृशस्थूलधूमारम्भकसंयोगो जनितः, तद्द्वितीयक्षणोत्पन्नतत्प्रत्यक्षे व्यभिचारः, तत्र तादृशसंयोगस्य वह्निसमवधानत्वेन तदितरयावत्कारणानामपेक्षाबुद्ध्यात्मक-(उ)सम्बन्धितावच्छेदकप्रकारकज्ञानघटितानां(ऊ)वह्न्यसमवधानकालीनत्वादिति वाच्यम् ; तादृशत्रसरेणुक्रियया यदा धूमारम्भकसंयोगस्तदा चक्षुःसंयोगान्तरस्याप्युत्पाद-सम्भवेन(३) यावन्मध्यनिविष्टस्य तस्य वह्न्यसमवधानकालीनत्वाभावादिति ।

वस्तुतस्तु(ऋ) तद्वह्नेस्तदिन्धने यः प्राथमिकसंयोगस्तदसमवहितसामग्र्य-जन्यत्वस्य सत्यन्तार्थत्वान्न प्रागुक्तेषु व्यभिचारः । तत्संयोगजनिते तदार्द्रेन्धन-क्रियानाशे तत्संयोगस्य वह्निसमवधानतया तदितरयावत्कारणानां तत्तत्क्रिया-तदा(४)र्द्रेन्धनादिव्यक्तीनां निरुक्तवह्न्यसमवधानकालीनत्वाद् व्यभिचारः परम-वशिष्यते । सोऽपि संयोगिविशेषितस्य संयोगस्य हेतुतायाः साम्प्रदायिकत्वेन

(१) आदर्शविशेषे 'तादृश' इति नास्ति । (२) 'समवधानपूर्वम्' इति क्वचित् पाठः । (३) 'चक्षुःसंयोगान्तरस्याप्युदयसम्भवेन' इति पाठान्तरम् । (४) 'तत्तदार्द्रेन्धनादि' इति पाठान्तरम् ।

(उ) आदौ तादृशधूमत्रसरेणुभिः समं चक्षुःसंयोगः सम्बन्धितावच्छेदकप्रकारक-ज्ञानञ्च, ततो वह्निसमवधानम्, ततस्तादृशस्थूलधूमारम्भकसंयोगः, ततस्तत्प्रत्यक्षम् इत्येवं चतुःक्षणीमुपादाय प्रकृतव्यभिचारः सङ्गमनीयः । अन्यथा तादृशस्थले द्वितीये तृतीये वा क्षणे सम्बन्धितावच्छेदकप्रकारकज्ञानोपादाने तद्घटितप्रकृतयावत्कारणानां व्यभिचारसम्पादकं वह्न्यसमवधानकालीनत्वं न घटते । प्रथमक्षणेऽपि अपेक्षाबुद्ध्यनात्मकस्य तस्य परिग्रहे तादृश-ज्ञानस्य द्विक्षणमात्रस्थायितया प्रकृतप्रत्यक्षाव्यवहितपूर्ववर्त्तित्वाभावेन प्रकृतप्रत्यक्षे हेतुत्वमेव नोपपद्यत इति प्रकृतप्रत्यक्षपूर्वचतुर्थक्षणे अपेक्षाबुद्ध्यात्मकतदुपादानम् । तदुपादाने च अपेक्षा-बुद्धेस्त्रिक्षणस्थायितया न काचिदनुपपत्तिः ।

(ऊ) 'सम्बन्धितावच्छेदकप्रकारकज्ञाने'ति प्रकृतसम्बन्धितावच्छेदकत्रसरेणुत्वादि-प्रकारकज्ञानेत्यर्थः ।

(ऋ) तादृशधूमारम्भकसंयोगोत्पत्तिदशायां नियमेन चक्षुःसंयोगान्तरोत्पादे प्रमाण-विरहात् प्रकृते तदनुत्पादसन्देहेन व्यभिचारसन्देहसम्भवादाह 'वस्तुतस्त्वि'त्यादि ।

वह्निसंयोगस्य हेतुत्वे वह्नेरपि(ऋ)क्रियानाशे हेतुत्वात् तद्वह्निजन्यत्वाभावस्यापादकस्या-सत्त्वेनैव निरसनीय इति भावः।

कारणञ्च कालोपाधिदिगुपाधिभिन्नं ग्राह्यम्। तेन वह्निसमवधानानन्तरोत्पन्न-घटादेरपि कालोपाधिविधया पत्तीभूतधूमकारणस्य वह्न्यसमवधानकालीनत्वाभावेऽपि नाप्रसिद्धिः।

न च वह्नेरपि वह्निसमवधानप्रागभावकालीनतया(ऌ) वह्नितत्समवधानेतरेत्यत्र वह्निपदं व्यर्थमिति वाच्यम्; यत्र देशान्तरादानीत(१)वह्नेस्तदार्द्रेन्धनसंयोगे सति तदार्द्रेन्धनजवह्न्युत्पत्तिरनन्तरञ्च धूमोत्पत्तिरिति क्रमः, तत्र देशान्तरादानीत(२)-वह्निमादायैवान्वयव्यतिरेकग्रहात् तत्साधारणस्यैव तद्वह्नित्वस्य(ॡ) तद्वह्न्यसमवधान-कालीनेत्यत्र वक्तव्यतया तादृशधूमकारणीभूतवह्नेस्तादृशधूमप्रयोजक-वह्न्यसमवधान-कालीनत्वाभावेनाप्रसिद्धिवारणार्थत्वात्।

यदि च तादृशधूम(३)कारणीभूतवह्निव्यक्तिरेव तद्वह्नित्वेनोपादीयते, तदा वह्नितत्समधानेतरेत्यत्र(४) वह्निपदं नोपादेयमिति(५) नवीनानां पन्थाः।

यत्तु प्रतियोगितद्व्याप्येतरयावत्तदुपलम्भकरूपयोग्यानुपलब्धौ उपलम्भकता-वच्छेदके(ए) यावत्त्वविशेषण(६)वदत्रापि कारणतावच्छेदके यावत्त्वविशेषणम्। तथा च वह्नित्व(७)तत्समवधानत्वेतरवह्न्यसमवधानकालीनवृत्तियावत्कारणता-वच्छेदकको(८) न स्यादिति पर्यवसितार्थः।

(१) 'देशान्तरादानीतेतरवह्ने'रिति क्वचित् पाठः। पुस्तकविशेषे 'तदार्द्रेन्धनसंयोगे सति' इति पाठो नास्ति। (२) देशान्तरादानीतेतरवह्नि' इति पाठान्तरम्। (३) पुस्तकविशेषे 'धूम' इति नास्ति। (४) 'वह्नितत्समवधानेत्यत्र' इति क्वचित् पाठः। (५) 'न देयमिति' इति क्वचित् पाठः। (६) 'यावत्त्वस्य विशेषणत्ववत्' इति क्वचित् पाठः। क्वचिच्च 'यावत्त्वनिवेशनवत्' इति पाठः। (७) 'वह्नितत्-समवधानत्वेतरे'ति क्वचित् पाठः। (८) 'कारणतावच्छेदको' इति क्वचित् पाठः।

(ऋ) यत्र द्रव्यसंयोगः कारणं तत्र संयोगेन द्रव्यमपि कारणमिति नियमाभ्युपगमादिति भावः।

(ऌ) वह्निसमवधानं प्रति वह्नेः कारणतया तस्य तत्पूर्ववर्त्तिताया अवश्यापेक्षणीयत्वेन तत्प्रागभावकालीनत्वमक्षतमिति भावः।

(ॡ) तत्साधारणतद्वह्नित्वञ्च प्रथमवह्निचरमवह्न्यन्यतरत्वादिरूपं निर्वाच्यम्।

(ए) यावतीनामुपलम्भकव्यक्तीनां समवधानस्यैकदा असम्भवेन तत्र उपलम्भकता-वच्छेदके यावत्त्वविशेषणमुपादेयमिति भावः।

धूमावयवस्य(ऐ) च धूमं प्रति न धूमसमवायित्वेन कारणत्वम्, धूमोत्पाद-पूर्वं धूमसमवायित्वविशिष्टस्याभावात्। न च कारणतावच्छेदकावलीढसत्त्वमेव कार्य्योत्पादप्रयोजकम्, एवमपि क्वचिद्‌ धूमः क्वचिन्न इत्यत्र नियामक-स्यालाभात्(१) (ओ), किन्तु स्पर्शविशेषवत्पृथिवीत्वेन पृथिवीत्वेन(२) वा। स्पर्श-विशेषादिस्तु दध्यादौ रसविशेषादिवत् सहकारी। एवमसमवायिसंयोगस्यापि द्रव्यारम्भकतावच्छेदकजात्यैव हेतुत्वम्। न तु विशेषरूपेणापि मानाभावात्। तथा च पृथिवीत्वाक्रान्तस्य द्रव्यारम्भकतावच्छेदकजात्यवच्छिन्नसंयोगस्य(३) च वह्न्यसमवधानकालीनत्वान्नाप्रसिद्धिः। कारणतावच्छेदकञ्च अनेकव्यक्तिवृत्ति ग्राह्यम्। तेन तत्संयोगस्य तदवयवस्य वा तद्व्यक्तित्वेन हेतुत्वेऽपि न क्षतिरिति।

तन्न साधीयः; पृथिवीत्वाक्रान्ते(४) परमाण्वादौ तादृश(औ)जात्याक्रान्ते च संयोगादौ सामान्यतो वह्न्यसमवधानकालीनत्वस्यानिर्णयात्, देशान्तरे(५) वह्निसमवधानशङ्कायाः सर्वदैव सम्भवात्। मदुक्तदिशा(६) सर्वत्र वह्निपदस्य तद्वह्निपरत्वे वह्नित्वतत्समवधानत्वेतरेत्यस्य वैयर्थ्यात्। वह्नित्वादेरपि तद्वह्न्य-समवधानकालीनवृत्तित्वात्, तद्वह्नित्वादेश्च अनेकवृत्तित्वाभावादेव(क) निरासात्, नान्तरीयकवह्नौ व्यभिचाराच्च। तत्र हि पृथिवीत्वेन धूमत्वेन वा तादृशधूमरूप-विशेषं प्रति समवायिकारणता। असमवायिकारणता तु अवयववृत्तिनीलरूपत्वेन तादृश(ख)रूपत्वेन(७) वा। स्वसमवायिसमवेतत्वं तु प्रत्यासत्तिः। तथा च

(१) 'नियामकस्याभावात्' 'नियामकाभावात्' इति च पाठान्तरम्। (२) क्वचित् 'स्पर्शविशेषवत्पृथिवीत्वेन वा' इत्येव पाठस्तत्र वाकारासङ्गतिः। (३) 'संयोगस्यापि' इति क्वचित् पाठः। (४) 'क्रान्तपरमाण्वादौ' इति क्वचित् पाठः। (५) 'देशान्तरीय' इति क्वचित् पाठः। (६) 'तदुक्तदिशा' इति क्वचित् पाठः। (७) पुस्तकविशेषे 'तादृशरूपत्वेन' इत्ययमंशो नास्ति। तत्र वाकारासङ्गतिः।

(ऐ) धूमावयवगतस्य धूमसमवायित्वस्य तथा धूमावयवसंयोगगतस्य तथाविधसंयोग-त्वस्य च धूमकारणतावच्छेदकस्य यावत्कारणतावच्छेदकान्तर्गतस्य वह्न्यसमवधानकालीन-वृत्तित्वाभावादप्रसिद्धिमाशङ्क्याह 'धूमावयवस्ये'त्यादि।

(ओ) तथा नियामकाभावे घटावयवस्यापि धूमसमवायित्वप्रसक्तया ततोऽपि धूमोत्-पादप्रसङ्गः स्यादिति भावः।

(औ) तादृशेति द्रव्यारम्भकतावच्छेदकेत्यर्थः।

(क) 'कारणतावच्छेदकञ्च अनेकव्यक्तिवृत्ति ग्राह्य'मित्यनेन स्वयमेव अनेकवृत्तिकारण-तावच्छेदकस्यैव प्रकृते परिग्रहादिति भावः।

(ख) तादृशरूपत्वेनेति अवयववृत्तित्वाविशेषितेन केवलनीलरूपत्वेनेत्यर्थः।

   

पृथिवीत्व-धूमत्व-तादृशरूपविशेषत्वादीनां तद्वह्न्यसमवधानकालीनवृत्तित्वेन व्यभिचारस्य वज्रलेपत्वात्। तद्धूमत्वस्यानेकवृत्तित्वाभावादेव निरासा(A)दित्यलमधिकेन।

## दीधितिः

यत्तु नान्तरीयकवह्निके व्यभिचारवारणाय आपादककोटावेव विशेषणं सत्यन्तार्थः। स च वह्न्यघटितसामग्र्यजन्यत्वमिति; तन्न, प्राक् तदसिद्धेः।

## दीधितिप्रकाशः

'यत्तु नान्तरीयके'ति,—वह्निजन्यत्वाभावे आपादके इति शेषः। 'आपादककोटावेवे'ति,—यथाश्रुतमूलानुरोधादिति शेषः(१)। तेन आपाद्यकोटिप्रतियोगिविशेषणतया(२) व्यभिचारवारणसम्भवेऽपि न क्षतिः। यथाश्रुतेन(३) व्यभिचारावारणादाह 'स चे'ति। वह्न्यघटिताजन्यत्वं धूमेऽपि नास्ति तादृशेन्धनादिजन्यत्वादतः 'सामग्री'ति। नान्तरीयकवह्निकस्य सामग्री च न वह्निघटितेति न तत्र व्यभिचार इति भावः। 'प्राक्'—धूमे वह्निजन्यत्वनिर्णयात्(४) प्राक्। 'तदसिद्धेः' वह्न्यघटितसामग्र्यजन्यत्वस्य अनिश्चयात्। तथा च आपादकविशेषणवत्त्वेन पक्षस्य अनिश्चये नोक्तरीत्या विशिष्टाभावबुद्धेर्विशेष्याभावमात्रावलम्बितत्वमिति भावः(B)।

## दीधितिः

अत्र आद्या द्वयी शङ्का इष्टापत्तिपर्य्यवसायिनी(५)। तृतीया पुनरापाद्काद्यप्रसिद्धिपर्य्यवसायिनी। 'अवह्नेः'—वह्निशून्यात्।

## दीधितिप्रकाशः

स्वीकृततर्कानुसारितया मूलं व्याचष्टे 'अत्रे'ति(६)। 'अत्र' 'वस्तुत(७)' इत्यादिना विवक्षिते तर्के(C)। 'इष्टापत्ती'ति,—वह्न्यसमवहितजन्यत्वस्य

(१) 'भाव' इति पाठान्तरम्। (२) 'विशेषणतयापि' इति क्वचित् पाठः। (३) 'यथाश्रुते' इति क्वचित् सप्तम्यन्तः पाठः। (४) 'निश्चयात्' इति पाठान्तरम्। (५) 'पर्य्यवसिता' इति पाठान्तरम्। (६) 'अत्रेति' इति पाठः पुस्तकविशेषे नास्ति। (७) 'वस्तुतस्तु' इति क्वचित् पाठः, क्वचिच्च 'वस्तुत इत्यादिना' इत्यंशविनाकृतः पाठः।

(A) अत्र यावत्कारणतावच्छेदकान्तर्गततया तद्धूमत्वस्य परिग्रहे तस्य वह्न्यसमवधानकालीनवृत्तित्वाभावेन व्यभिचारः शक्यः परिहर्त्तुमत आह 'तद्धूमत्वस्येत्यादि।

(B) तथा च प्रकृततर्कस्य धूमे वह्निजन्यत्वनिश्चयद्वारा परम्परया पूर्वोपदर्शितदिशा वह्निधूमव्याप्तिग्रहोपयोगित्वासम्भवेन वैफल्यमर्थान्तरञ्च प्रसज्यत इति भावः।

(C) आपाद्यकोटिप्रतियोगिविशेषणतया सत्यन्तार्थघटिते 'धूमो यदि वह्निजन्यत्वाभाववान् स्यात् वह्न्यसमवहिताजन्यत्वविशिष्टस्य जन्यत्वस्याभाववान् स्यादित्याद्याकारे तर्क इत्यर्थः।

उभयत्रैव(च) कोटित्वात् वह्न्यसमवहिताजन्यत्वरूपविशेषणाभावादिति(छ) भावः(१)। 'तृतीया पुन'रिति,—तथा च असत्ख्यात्युपनीतहेतोरभावस्यैव कार्य्यसामान्ये कार्य्याव्यवहितपूर्ववर्त्तिनस्तन्नियतत्वादेरभावस्य वा शङ्का अहेतुक एव वेत्यनेन विवक्षितेत्यर्थः। 'आपादकादी'त्यादिना आपाद्यपरिग्रहः। वह्निभिन्ना(२) देवोत्पन्नस्यापि नान्तरीयकवह्निकस्य वह्न्यसमवहितजन्यत्वाभावात् अवह्निपदस्य वह्निभिन्नपरत्वे विशेषणाभावेन नेष्टापत्तिपर्य्यवसानमत आह 'वह्निशून्या'विति(ज)।

## तत्त्वचिन्तामणिः

यदि हि गृहीतान्वयव्यतिरेकं हेतुं विना कार्य्योत्पत्तिं शङ्केत, तदा स्वयमेव धूमार्थं वह्नेः, तृप्त्यर्थं भोजनस्य, परप्रतिपत्त्यर्थं(३) शब्दस्य चोपादानं नियमतः कथं कुर्य्यात्? तेन विनापि तत्सम्भवात्। तस्मात्तदुपादानमेव तादृशशङ्काप्रतिबन्धकम्(४)। शङ्कायां न नियतोपादानं, नियतोपादाने च न शङ्का। तदिदमुक्तम्;— (झ)"तदेव ह्याशङ्क्यते यस्मिन्नाशङ्क्यमाने स्वक्रियाव्याघातो न भवतीति। न हि सम्भवति स्वयं वह्न्यादिकं धूमादिकार्य्यार्थं नियमत उपादत्ते, तत्कारणं तन्नेत्याशङ्कते चे"ति। एतेन व्याघातो विरोधः, स च सहानवस्थाननियम इति, नियमश्च व्याप्तिरेवेति तत्राप्यनवस्थेति निरस्तम्,—स्वक्रियाया एव शङ्काप्रतिबन्धकत्वात्।

(१) 'कोटित्वादिति भाव' इति क्वचित् पाठः। (२) 'वह्निभिन्ने'त्यतः समारभ्य 'आहे'त्यन्तग्रन्थ आदर्शविशेषे नास्ति। स च तत्र स्खलित इति मन्यते, तेन विना 'वह्निशून्या'विति दीधितिप्रतीकधारणस्यानुपपत्तेः। एकत्र 'विशेषणाभावेन' इति नास्ति। (३) 'प्रत्ययार्थ'मिति पाठान्तरम्। (४) पुस्तकविशेषे 'तादृशे'ति नास्ति।

(च) 'उभयत्रैवे'ति—'किं धूमोऽवह्नेरेव भविष्यति, क्वचिद् वह्निं विनापि भविष्यती'ति शङ्काद्वय एवेत्यर्थः। प्रथमशङ्का धूमत्वावच्छेदेन, द्वितीयशङ्का च धूमत्वसामानाधिकरण्येन वह्न्यसमवहितजन्यत्वावगाहिनीत्येव द्वयोर्विशेषः। इत्थं पक्षे वह्न्यसमवहितजन्यत्वोपगमे सत्यन्तार्थतादृशाजन्यत्वविशिष्टजन्यत्वाभावादिरूपापाद्यस्य तत्र सम्भवित्वादिष्टापत्तिसम्भव इति।

(छ) तथा च पक्षीभूते धूमे वह्न्यसमवहिताजन्यत्वरूपविशेषणाभावप्रयुक्तस्य तादृशविशेषणविशिष्टजन्यत्वाभावस्य उपपत्तिरिति भावः। एवञ्च प्रकृततर्ककारणीभूतापाद्यव्यतिरेकनिश्चयविघटनात्तर्कविघटनमिति तात्पर्य्यम्।

(ज) न विद्यते वह्निर्यत्रेति बहुव्रीहिव्युत्पत्त्या 'अवह्ने'रित्यस्य 'वह्निशून्या'दित्यर्थलाभः।

(झ) 'तदेवे'त्यारभ्य 'तन्नेत्याशङ्कते चे'त्यन्ता प्राचीनोक्तिः।

अत एव—'व्याघातो यदि शङ्कास्ति न चेच्छङ्का ततस्तराम् ।
व्याघातावधिराशङ्का तर्कः शङ्कावधिः कुतः' ?

इति खण्डनकारमतमप्यपास्तम् । न हि व्याघातः शङ्काश्रितः(D), किन्तु स्वक्रियैव शङ्काप्रतिबन्धिकेति । न वा विशेषदर्शनात् क्वचिच्छङ्कानिवृत्तिरेवं स्यात् ।

## दीधितिः

'तदुपादान'मिति करणव्युत्पत्त्या तदीयकार्य्यप्रयोजकताज्ञानपरम्, तादृशान्वयव्यतिरेकानुविधानबोधपरं वा । अग्रेतनमपि स्वक्रियापदं तत्परमेव । कृत्यादेः शङ्काप्रतिबन्धकत्वे मानाभावात्, कारणताग्रहोत्तरकालीनत्वाच्च(E) ।

यद्यपि चैतावता धूमत्वावच्छिन्नं प्रति वह्नेर्जनकत्वं नायाति, तृणारणिमणिन्यायेन वैकल्पिककारणतायामपि तथात्वसम्भवात्, तथापि विशेषाणां कार्य्यकारणभावग्रहस्तर्केण तद्विरोधि(१)शङ्कायामपनीतायां जायमानः सामान्यव्यभिचाराानिर्णया-नुगतागुरुविशेषरूपान्तरानुपस्थिति-लाघवप्रतिसन्धानादिवशात् सामान्यत एव तं परिच्छिनत्ति । प्रामाणिकौ च तथैवान्वयव्यतिरेकौ । फलबलेन लाघवज्ञानादिशून्याया एव सामान्यव्यभिचारशङ्कायाः प्रतिबन्धकत्वं कल्प्यते ।

## दीधितिप्रकाशः

भावव्युत्पत्त्या उपादानपदार्थस्य कृतेः(२) शङ्काप्रतिबन्धकत्वाभावादाह 'करणे'ति । उपादीयते अनेनेति व्युत्पत्त्येत्यर्थः । 'तदीये'ति तत्पदं वह्न्यादिपरम् । कार्य्यं धूमादि । तथा(३) च वह्न्यादिविषयकं यद्धूमादिप्रयोजकताज्ञानं तत्परमित्यर्थः ।

---

(१) 'तद्विरोधशङ्काया'मिति क्वचित् पुस्तके पाठान्तरम् । (२) 'कृत्यादेः' इति पाठान्तरम् । (३) पुस्तकविशेषे 'तथा च' इति पाठो नास्ति ।

(D) 'व्याघातो यदी'त्यादिकारिकायाः सविस्तरः परिष्कारस्तर्कमाथुरी-तर्कगादाधर्य्यादावनुसन्धेयः । खण्डनकारः खण्डनखण्डखाद्यग्रन्थकारः श्रीहर्षः । कारिकेयं 'व्याघातावधिराशङ्का तर्कः शङ्कावधिर्मतः' इति कुसुमाञ्जलिकारिकायाः खण्डनमुद्दिश्य खण्डनखण्डखाद्ये तेन निबद्धा । 'व्याघातः शङ्काश्रित' इति प्रतिबन्धक इति शेषः ।

(E) कामिनीजिज्ञासादेरिव कृत्यादेरपि स्वातन्त्र्येण शङ्काप्रतिबन्धकत्वस्य सम्भवादू दोषान्तरमाह कारणतेत्यादिना ।

'यदि हि गृहीतान्वयव्यतिरेकं हेतु'मिति—मूलानुरोधादाह,(१)—'तादृशे'ति। वह्नेः कारणत्वस्य तन्मतासिद्धत्वात् 'प्रयोजकते'ति। प्रयोजकत्वं कारणकारणत्वादिकं, तदपि तन्मतासिद्धम्, अहेतुक एवोत्पत्स्यत इति स्वीकारादत आह 'तादृशे'तीति कश्चित्(२)। तादृशो वह्न्यादौ तत्तद्धूमादेर्यो नियतान्वयव्यतिरेकबोधः तत्परमित्यर्थः। 'अग्रेतनमपी'त्यपिना प्राक्तन(३)मपीति लभ्यम्। यथाश्रुते अनुपपत्तिमाह 'कृत्यादे'रिति। आदिना स्वक्रियापरिग्रहः। 'कारणताग्रहोत्तरे'ति,—कारणताग्रहोत्तरं कृतिस्तया च शङ्काप्रतिबन्धे(४) तर्कात् कारणताग्रह इत्यन्योन्याश्रय इत्यर्थः। वह्न्यसमवहिताजन्यत्वस्य निरुक्तजन्यत्वस्य च धूमविशेष एव(ञ) निर्णयात् धूमत्वावच्छिन्ने(ट) तदनिर्णयेन(५) तर्कप्रवृत्त्यसम्भवात् कथं तदवच्छिन्ने(ठ) कारणताग्रह(ड) इत्याशङ्कते 'यद्यपी'त्यादिना।

ननु विशेषे तादृशतर्कप्रवृत्त्यैव सामान्यतः कारणताग्रहो भविष्यतीत्यत आह,—'तृणारणी'ति। तत्र वह्निविशेषे तृणजन्यत्वग्राहकतर्कप्रवृत्तावपि वह्नित्वावच्छिन्ने तृणजन्यत्वस्याग्रहादिति भावः(६)। 'तथात्वं'—विशेषाणां तादृशान्वयव्यतिरेकानुविधायित्वम्। 'तद्विरोधिशङ्कायां'—कार्य्यकारणभावाभाव(७)शङ्कायाम्। तर्केणापनीतायां जायमानो विशेषयोः कार्य्यकारणभावग्रहः सामान्यत एव तं परिच्छिन्नत्तीत्यन्वयः। तत्र सहकारि(८) दर्शयति,—'सामान्यव्यभिचाराऽनिर्णये'ति(ढ)। अनेन द्रव्यत्वादिनिरासः। 'अनुगते'ति,—यावद्व्यक्तीनामन्वय-

(१) 'मूलानुरोधेनाह' इति पाठान्तरम्। (२) 'वह्ने'रित्यादिः 'कश्चि'दित्यन्तः पाठो न सार्वत्रिकः। (३) 'प्रागुक्ते'ति पाठान्तरम्। (४) 'शङ्काप्रतिबन्ध'इत्यत्र 'शङ्काप्रतिबन्धकतर्कोत्पत्ति-'रिति पाठः क्वचन दृश्यते। अन्यत्र च 'शङ्काप्रतिबन्धकतर्कात् कारणताग्रह' इति पाठः। (५) 'तदनिर्णयात्' इति क्वचित् पाठः। (६) 'तृणजन्यत्वस्याग्रहसम्भवादिति'इति क्वचित् पाठः। (७) 'कार्य्यत्वकारणत्वाभाव' इति पाठान्तरम्। (८) 'सहकारिणं दर्शयति' इति पाठान्तरम्।

(ञ) 'धूमविशेष एव' तत्तद्धूमत्वावच्छिन्न एव।

(ट) 'धूमत्वावच्छिन्ने' धूमत्वरूपसामान्यधर्मावच्छिन्ने।

(ठ) 'तदवच्छिन्न' इत्यत्र सप्तम्यर्थो निरूपितत्वं, तस्य कारणतायामन्वयः।

(ड) 'तदवच्छिन्नकारणते'ति पाठेऽपि तदवच्छिन्ननिरूपितकारणतेत्यर्थः।

(ढ) 'सामान्यव्यभिचारानिर्णये'त्यस्य सामान्यधर्मावच्छिन्नविशेष्यताकप्रकृतकार्य्यत्वाभावानिश्चयेत्यर्थ इति गदाधरः। तेन द्रव्यत्वावच्छिन्नविशेष्यताकवह्निजन्यत्वाभावनिर्णयसत्त्वान्न द्रव्यत्वेन वह्निजन्यत्वप्रतिपत्तिः। तदेवोक्तम्, 'अनेन द्रव्यत्वादिनिरास' इति ग्रन्थेनेति।

व्यतिरेकानुविधानं(१) निश्चितं तावद्व्यक्त्यनुगतेत्यर्थः(२)। तेन तत्तद्व्यक्तित्वादीनां(३) निरासः। 'अगुर्वि'ति,—सामान्यधर्मापेक्षया अगुर्वित्यर्थः। तेन तावद्व्यक्त्यन्यतमत्वनिरासः। 'विशेषे'ति,—अगृहीतान्वयव्यतिरेकव्यक्तिव्यावृत्तेत्यर्थः। तेन यदा(४) गृहीतान्वयव्यतिरेकमात्रवृत्तितया वै(५)जात्यादिकमगुरु उपस्थितं, तदा तदवच्छेदेनैव(ण) हेतुताग्रहो, न धूमत्वावच्छेदेनेति सूचितम्। 'रूपान्तरे'त्यन्तरपदं स्पष्टत्वार्थम्(६)।

'लाघवप्रतिसन्धानादी'ति—धूमत्ववह्नित्वयोर्जन्यत्वजनकत्वा(७) वच्छेदकत्वे लाघवमित्याकारकलाघवज्ञानादीत्यर्थः(८)। तेन यदा तादृशलाघवानवतारस्तदा तत्तद्व्यक्तित्वावच्छेदेनैव हेतुताग्रह इति सूचितम्। आदिना साधारणकारणताग्राहकान्तरपरिग्रहः। 'सामान्यतः' वह्नित्व(९) धूमत्वाद्यवच्छेदेन। 'तं' कार्य्यकारणभावम्। 'परिच्छिनत्ति' विषयीकरोति। 'अन्वयव्यतिरेका'विति,—विशेषाणामित्यनुषज्यते। 'तथैव' उक्तसहकारिवशात् सामान्यतः कारणताग्राहकत्वेनैव। 'प्रामाणिकौ' प्रमाणसिद्धौ।

ननु वह्निं विनापि धूमो भविष्यतीति व्यभिचारसन्देहदशायां कथं धूमत्वावच्छेदेन वह्निजन्यत्वग्रह इत्यत आह 'फलबलेने'ति। 'लाघवज्ञानादी'त्यादिना तर्कघटितायास्तादृशकार्य्यकारणभावग्राहकसामग्र्याः परिग्रहः। एवञ्च तर्कघटिततादृशसामग्रीविशिष्टलाघवज्ञानाभावविशिष्टव्यभिचारज्ञानं तादृशव्याप्तिज्ञाने(त)प्रतिबन्धकम्। अत एव(थ) यत्र [यदा]तर्को वा तादृशकारणताग्राहकसामग्री वा नास्ति,

(१) 'अन्वयाद्यनुविधानम्' इति पाठान्तरम्। (२) 'तावत्स्वनु' इति पाठान्तरम्। (३) 'तद्व्यक्तित्वादि' इति पाठान्तरम्। (४) क्वचित् 'यदा' इति 'उपस्थित' मित्यनन्तरमेव दृश्यते। (५) 'वैजात्यादिक'मित्यत्र 'जात्यादिकम्' इति पाठान्तरम्। (६) 'स्पष्टार्थम्' इति पाठान्तरम्। (७) 'जनकता' इति पाठान्तरम्। (८) 'ज्ञानमित्यर्थः' इति पाठान्तरम्। (९) 'यदि' इति पाठान्तरम्।

(ण) 'तदवच्छेदेनैव हेतुताग्रह' इत्यस्य तादृशवैजात्याद्यवच्छिन्नकार्य्यतानिरूपितकारणताग्रह इत्यर्थः।

(त) 'तादृशव्याप्तिज्ञान' इति निरुक्तकार्य्यकारणभावग्रहात्मकव्याप्तिज्ञान इत्यर्थः, एतच्च कार्य्यकारणभावग्रहस्यैव प्रागुक्तव्याप्तिविषयकत्वाभिप्रायेण।

(थ) 'अत एव' तादृशसामग्रीविशिष्टलाघवज्ञानस्य उत्तेजकतया निवेशेन कल्पितप्रतिबन्धकत्वादेव।

तद्रोक्तलाघवज्ञानेऽपि सामान्यव्यभिचारशङ्कातस्तादृशव्याप्तिधीप्रतिरोधः । अत एव तर्कस्य(१) न वैफल्यम् । तादृशोत्तेजक(२) सम्पादकतया व्याप्तिग्राहकत्वादिति भावः । व्यभिचारनिर्णये उक्तलाघवाद्यनु(३) सन्धानेऽपि व्याप्तेरग्रहादाह(४) 'शङ्कायां' इति ।

नन्वेवं व्यभिचारज्ञानत्वेन कथमेका(द) विरोधितेति चेत् सामान्यव्यभिचारानिर्णयघटित–तादृशसामग्रीविशिष्टलाघवज्ञानाभावविशिष्टव्यभिचारज्ञानत्वेनैव(५) संशयनिश्चयसाधारणेन विरोधित्वात् । व्यभिचारनिर्णयकाले च व्यभिचारानिर्णयरूपविशेषणाभावेन(ध) तादृशविशिष्टलाघवज्ञानाभावेन प्रतिबन्धकतावच्छेदकरूपसम्भवादिति ।

## दीधितिः

अपरे तु धूमत्वावच्छिन्नस्य वह्न्यजन्यत्वेन जन्यत्वविशिष्टस्य यथाश्रुतवह्न्यसमवहिताजन्यत्वस्य व्यतिरेक एवापादनीयः । तत्रोक्तन्यायेन तादृशवह्नियुक्तकारणकलापजन्यत्वग्रहेण तद्व्यतिरेकजन्यत्वशङ्कानिरासात् वह्निविरहेऽपि निरतिशयस्यैव तादृशसमूहस्य धूमजनकत्वसन्देहस्य च तथाविधाद्धूमानुत्पाददर्शनेनैवायोगात् तादृशस्यैव क्वचिद् वह्निं क्वचिच्चेतरदासाद्य जनकत्वसम्भावनायाश्च क्वचिद् धूमानुत्पादप्रयोजकत्वेनावधृतस्य वह्निविरहस्यैव तथाविधसमूहसत्त्वे धूमानुत्पत्तिसामान्यं प्रति लाघवात् प्रयोजकत्वनिर्णयेनापनयान्मनसैव सुग्रहम् । 'वह्नेः' वह्निसमवहितस्योपादानम् । अत्र च नियमव्यवच्छेद्यस्य वह्न्यसमवहितानुपादानस्य प्रयोजके तदजन्यत्वज्ञाने परम्परया वह्निसमवहितोपादानस्य वा प्रयोजके तत्र तात्पर्य्यम् ।

---

(१) 'न तर्कस्य' इति पाठान्तरम् । (२) 'तादृशोत्तेजकत्व' इति पाठान्तरम् । (३) लाघवानुसन्धानेऽपि' इति पाठान्तरम् । (४) 'व्याप्तेरग्रहादत आह' इति पाठान्तरम् । (५) आदर्शविशेषे 'एव' शब्दो नास्ति ।

(द) व्यभिचारनिर्णयदशायां लाघवाद्यनुसन्धाने सत्यपि व्याप्तिग्रहाभावोपपादनाय लाघवज्ञानमुत्तेजकतयानुपादाय केवलव्यभिचारनिर्णयत्वेन प्रतिबन्धकत्वान्तरस्यापि कल्पनीयत्वादिति भावः ।

(ध) एतच्च व्यभिचारनिर्णयकाले लाघवज्ञानसत्त्वदशायां, तदसत्त्वदशायान्तु विशेषणाभाववद् विशेष्याभावेनापि प्रतिबन्धकतावच्छेदकरूपसम्भवो बोध्यः ।

# दीधितिप्रकाशः

ये तु धूमत्वावच्छिन्नमेव पक्षीकृत्योक्ततर्कावतारं वर्णयन्ति, तन्मतमाह ;— 'अपरे त्वि'ति। 'वह्न्यजन्यत्वेन' आपादकेन। अग्रे 'तच्चे'त्यत्र तत्पदेन धूमत्वावच्छेदेन(१) वह्न्यसमवहिताजन्यत्वस्य परामर्शार्थं(न) तदेव विशेष्यीकृत्य दर्शयति(२) 'जन्यत्वविशिष्टस्ये'ति(प)। 'यथाश्रुते'त्यनेन(३) केषाञ्चिद् विवक्षितस्य वह्न्यघटितसामग्र्यजन्यत्व(४)रूपस्य निरासः(फ)।

'तच्च' धूमत्वावच्छिन्ने वह्न्यसमवहिताजन्यत्वञ्च। 'मनसैव सुग्रह' मित्यग्रिमेणान्वयः। 'उक्तन्यायेन' 'हुताशनरासभादिपदार्थसार्थस्ये(५)'त्याद्युक्तन्यायेन। सम्बन्धान्तरेण वह्नियुक्तकारणकलापजन्यत्व(६)ग्रहेऽपि केनापि(७) सम्बन्धेन वह्निव्यतिरेकजन्यत्व(ब)शङ्का सम्भवतीत्यतः 'तादृशवह्नियुक्ते'ति,—तेन सम्बन्धेन वह्नियुक्तेत्यर्थः। 'तद्व्यतिरेके'ति वह्निव्यतिरेकेत्यर्थः। एतावता 'अवह्नेरेव भविष्यती'ति शङ्का, 'अहेतुक एव वोत्पत्स्यत' इति शङ्का(८)च निराकृता।

क्वचिद् वह्निं विनापि भविष्यतीति शङ्का च द्वेधा भवति, वह्नेरन्यथासिद्धसन्निधिकत्व(९)शङ्कया, विकल्पेन जनकत्वशङ्कया च। आद्यां निरस्यति 'वह्निविरहेऽपी'त्यादिना। 'निरतिशयस्य' सहकार्यन्तरशून्यस्य। 'तादृशसमूहस्य' वह्निशून्या(१०)द्रिन्धनादिसमूहस्य। 'तथाविधात्' वह्निशून्यतादृशसमूहात्। 'सन्देहस्य चायोगा'दित्यन्वयः।

---

(१) आदर्शविशेषे 'धूमत्वावच्छेदेन' इति नास्ति। (२) 'निर्दिशति' इति क्वचित् पाठः। (३) 'यथाश्रुतेन' इति क्वचित् पाठः। (४) 'जन्यत्वस्य' इति पाठान्तरम्। (५) 'सार्थेत्याद्युक्त' इति क्वचित् पाठः। (६) 'प्रयोज्यत्वग्रहेऽपि' इति क्वचित् पाठः। (७) 'केनचित्' इति क्वचित् पाठः। (८) 'शङ्कापि' इति क्वचित् पाठः। (९) 'सन्निधि' इत्यत्र 'सम्बन्धि' इति क्वचित् पाठः। (१०) पुस्तकविशेषे 'वह्निशून्ये'ति नास्ति।

(न) तत्पदेन पूर्वोपस्थितिविशेष्यस्यैव परामर्शनियमादिति भावः।

(प) अनेन विशेषणेन अजन्ये व्यभिचारो वारितः।

(फ) न च प्रकृते तादृशवह्न्यसमवहिताजन्यत्वव्यतिरेकस्य आपाद्यत्वे नान्तरीयकवह्निके व्यभिचार इति वाच्यम्, एतत्कल्पेऽपि पूर्ववत् वह्न्यसमवधानकालीनयावत्कारणकत्वरूपपारिभाषिकजन्यत्वविवक्षणेन तादृशस्यैव जन्यत्वस्य विशेषणविधया उपन्यासात्।

(ब) 'वह्निव्यतिरेकजन्यस्ये'त्यस्य वह्नेर्व्यतिरेको यत्र तज्जन्यत्वमिति व्युत्. वह्न्यसमवहितजन्यत्वमित्यर्थः। उत्तरत्र 'वह्निव्यतिरेकेत्यर्थ' इत्यत्राप्येवम्। ...थ अच्प्रत्ययो वा।

द्वितीयां निरस्यति 'तादृशस्यैवे'त्यादिना(१)। 'तादृशस्यैव' आर्द्रेन्धनादिसमूहस्यैव। 'जनकत्व(२)सम्भावनायाः' धूमजनकत्वसम्भावनायाः; 'अपनया'दित्यग्रिमेणान्वयः। कारणान्तरव्यतिरेकेण धूमानुत्पत्तिमत्यपि वह्निसत्त्वेन व्यभिचाराद् वह्निविरहस्य तत्प्रयोजकत्वं न घटत इत्याह 'तथाविधसमूहसत्त्व' इति। 'लाघवा'दिति,—प्रयोजकान्तरकल्पने कारणान्तरकल्पनागौरवादिति भावः। तदुपादानपदेन वह्न्यसमवहिताजन्यत्वनिर्णयं प्रतिपादयितुं प्रथमत (३)एव तथा(भ) व्याचष्टे 'वह्नेर्वह्निसमवहितस्ये'ति। यथाश्रुते तु वह्नेर्नियमत उपादानेन वह्निभिन्नानुपादानं लभ्यते, तच्च न विवक्षितार्थप्रतिपादकं(४) बाधितञ्चेति(म) भावः। 'नियमव्यवच्छेद्यस्य' नियमाधीनव्यवच्छेदबोधविषयस्य नियमलभ्यस्येति यावत्। यथाश्रुते वह्न्यसमवहितोपादानस्यैव नियमव्यवच्छेद्यत्वादसङ्गतेः। (५)उपादानं नियमतः कथं कुर्य्यादिति-कथमित्यनेन व्यवच्छेद्यस्य नियमलभ्यस्येत्यर्थ इति तु कश्चित्। 'तदजन्यत्वज्ञाने' वह्न्यसमवहिताजन्यत्वनिश्चये।

ननु तदुपादानमेव शङ्काप्रतिबन्धकमित्यत्र उपादानपदार्थस्य शङ्काप्रतिबन्धकत्वं लभ्यते, न तु नियमपदार्थस्य, तथा च तच्छङ्कासम्बन्धोपदर्शनमप्रकृतमत आह 'परम्परये'ति। वह्न्यसमवहिताजन्यत्वनिर्णयाधीनतर्कप्रवृत्त्या वह्निजन्यत्वग्रहे सति वह्निसमवहितोपादानमिति परम्परयेत्यर्थः। 'तत्र'तदजन्यत्वनिर्णये। 'तात्पर्य्यम्'(६) तदुपादानमिति-ग्रन्थस्य तात्पर्य्यमित्यर्थः।

## दीधितिः

यत्तु अन्वयव्यतिरेकानुविधायित्वज्ञानमेव विशेषदर्शनतया शङ्काप्रतिबन्धकम्, तदेव तर्कघटकम्। तदिदमुक्तम्;—'यदि गृहीतान्वयव्यतिरेकं हेतु'मितीति। तन्न याद्दच्छिकस्य तदनुविधानस्य व्यभिचारित्वान्नियतस्य चोक्ताभेदसम्पादकत्वादिति वदन्ति। तच्चिन्त्यम्।

(१) 'तादृशस्यैवेत्यादिना' इति पाठो न सार्वत्रिकः। (२) 'तथाविधजनकत्व' इति क्वचित् पाठः। (३) 'प्रथमं तथा' इति पाठान्तरम्। (४) 'प्रापकम्' इति पाठान्तरम्। (५) 'नियमतस्तदुपादान'मिति 'नियमत उपादान'मिति च पाठान्तरम्। (६) 'तात्पर्य्यमित्यादिः 'तात्पर्य्यमित्यर्थ' इत्यन्तभागो न सार्वत्रिकः।

दिति भ. (भ) 'तथे'ति तादृशनिर्णयार्थकतयेत्यर्थः।

(४म) 'बाधितञ्चेति' धूमोद्देशेन वह्निभिन्नस्यार्द्रेन्धनादेरप्युपादानादिति भावः।

## दीधितिप्रकाशः

'विशेषदर्शनतया' वह्न्यसमवहिताजन्यत्वस्य व्याप्य(१)दर्शनतया(य)। 'शङ्काप्रतिबन्धकम्' वह्न्यसमवहिताजन्यत्व(२) शङ्काप्रतिबन्धकम्। 'तदेव' अन्वयव्यतिरेकानुविधायित्वमेव। तथा च धूमो यदि वह्निजन्यो न स्यात् वह्न्यन्वयव्यतिरेकानुविधायी न स्यादिति(३) तर्कशरीरमिति भावः।

अन्वयव्यतिरेकानुविधायित्वज्ञानस्य शङ्काप्रतिबन्धकत्वे मूलस्वरसमाह,—'तदिदमुक्त'मिति। यज्जातीये(४) क्वचित्(A)यदन्वयव्यतिरेकानुविधानं तदवच्छिन्ने तज्जन्यत्वमिति व्याप्तिः। यदवच्छेदेन(५) यदन्वयव्यतिरेकानुविधानं(६) तदवच्छिन्ने तज्जन्यत्वमिति वा(७) व्याप्तिस्तर्कमूलम्। तथा च धूमत्वं यदि वह्निजन्यतावच्छेदकं न स्यात्, वह्न्यन्वयव्यतिरेकानुविधायिवृत्ति वह्न्यन्वयव्यतिरेकानुविधायितावच्छेदकं वा न स्यादित्यर्थपर्य्यवसाने प्रथमे दोषमाह,—'यादृच्छिकस्ये'ति,—तज्जातीय-यत्किञ्चिद्व्यक्तिनिष्ठस्येत्यर्थः। 'व्यभिचारित्वात्' पृथिवीत्वाद्याक्रान्त-यत्किञ्चिद्व्यक्तावन्वयाद्यनुविधायित्वस्य सत्त्वेऽपि पृथिवीत्वादेस्तज्जन्यतावच्छेदकत्वाभावेन व्यभिचारात्। द्वितीये चान्वयांशस्य वैयर्थ्यात्। नियतव्यतिरेकमात्रोपादाने च वह्न्यसमवहिताजन्यत्व एव पर्य्यवसानाद्(८)स्मदुक्तपक्षाभेद इत्यत आह 'नियतस्ये'ति।

'तच्चिन्त्य'मिति,—चिन्तावीजन्तु वह्न्यसमवहिताजन्यत्वस्य धूमत्वावच्छेदेन निर्णये धूमो यदि वह्निव्यभिचारी स्यात् वह्न्यसमवहिताजन्यत्वे सति जन्यो न स्यादिति तर्केणैव व्यभिचारशङ्कानिराकरणे कार्य्यकारणभावग्राहकस्यैव(९) वैयर्थ्यम्। किञ्च(र)

---

(१) 'व्याप्यादिदर्शनतया' इति पाठान्तरम्। 'व्याप्त्यादिदर्शनतया' इत्यपि क्वचित् पाठः। (२) 'वह्न्यसमवहिताजन्यत्व' इति पाठान्तरम्। (३) 'स्यादित्येव' इति क्वचित् पाठः। (४) 'अत्र यज्जातीये' इति क्वचित् पाठः। (५) 'यदवच्छेदावच्छेदेन' इति क्वचित् पाठः। (६) 'यदन्वयाद्यनु' इति पाठान्तरम्। (७) क्वचित् 'यदवच्छेदेन' इत्यनन्तरमेव 'वाकारो' दृश्यते। (८) 'सानान्मदुक्त' इति क्वचित् पाठः। (९) 'निवारणे कार्य्यकारणभावग्रहस्यैव' इति पाठान्तरम्।

---

(य) 'व्याप्यदर्शनतये'ति ग्राह्याभावव्याप्यदर्शनतयेत्यर्थः। ग्राह्याभावदर्शनस्येव तद्व्याप्यदर्शनस्यापि प्रतिबन्धकत्वस्य क्लृप्तत्वादिति भावः।

(A) 'यज्जातीय' इत्यत्र यदिति जातौ विशेषणम्।

(र) कार्य्यकारणभावग्राहकस्तर्कोऽपि वह्निजन्यत्वनिश्चयं द्वारीकृत्य धूमो यदि वह्निव्यभिचारी स्यात्तदा वह्निजन्यो न स्यादिति तर्कान्तरसम्पादक इति तद्द्वारा तस्यापि व्यभिचारशङ्कानिवृत्तिं प्रत्युपयोगात् कथं वैयर्थ्यमित्याशङ्क्याह किञ्चेत्यादि।

'जन्य'इत्यस्य यथाश्रुतार्थकत्वे नान्तरीयकवह्निके व्यभिचारः। वह्न्यसमवधानकालीनेत्यादिविवक्षितार्थे च वह्निपदस्य तत्तद्वह्निपरतया तद्‌घटितस्य(ल)धूमत्वावच्छे(१) देनानिर्णयात् नोक्ततर्कप्रवृत्तिरिति।

## दीधितिः

केचित्तु कार्य्यकारणभावग्रहानन्तरं व्याप्तिग्रहाय व्यधिकरणस्य जनकत्वशङ्कानिरासार्थमयं तर्कः। तथा च धूमो यदि सामानाधिकरण्यातिरिक्तप्रत्यासत्त्या वह्न्यजन्यत्वे सति सामानाधिकरण्यप्रत्यासत्त्या वह्निजन्यो न स्यात् वह्निजन्यो न स्यात्; अप्रत्यासन्नस्याजनकत्वात्। तादृशाजन्यत्वञ्च प्रत्यासत्त्यन्तरशालिवह्निसत्त्वेऽपि धूमानुत्पादादिना ग्राह्यमिति। इदमेव च वाचोभङ्ग्या परे परिष्कुर्वन्ति,—धूमो यदि वह्न्यनधिकरणदेशानुत्पत्तिकत्वे सति वह्न्यधिकरणदेशोत्पत्तिको न स्यात् जन्यो न स्यात्। तादृशानुत्पत्तिकत्वग्रहश्च धूमानुत्पत्तिं प्रति वह्निसम्बन्धाभावस्य प्रयोजकत्वे ग्राह्ये उपस्थितत्वाल्लाघवाच्च तादृशसम्बन्धाभावस्यैव तथात्वावधारणादिति वदन्ति। तच्चिन्त्यम्।

## दीधितिप्रकाशः

'व्याप्तिग्रहाये'ति,—धूमो यदि वह्निव्यभिचारी(व) स्यात् सामानाधिकरण्यप्रत्यासत्त्या(श) वह्निजन्यो न स्यादिति-व्याप्तिग्राहकतर्कावतारायेत्यर्थः। 'व्यधिकरणस्य जनकत्वशङ्के'ति,—व्यधिकरणस्य जनकत्वपर्य्यवसायिनी या शङ्का सामानाधिकरण्यप्रत्यासत्त्या वह्निजन्यत्वाभावशङ्का तन्निरासार्थमित्यर्थः।

यथाश्रुतमूलमनुकूल्यापादक एव सत्यन्तं निक्षिप्याह 'तथा च धूमो यदी'ति। अत्रापि निष्कर्षे आपाद्यकोटिप्रतियोगिविशेषणमेव सत्यन्तं बोध्यम्। स्वव्यधिकरणवह्निजन्ये(२) वह्निरूपादौ व्यभिचारवारणाय सत्यन्तम्। धूमस्यापि सामानाधिकरण्यातिरिक्तप्रत्यासत्त्या स्वावयवजन्यत्वात् तत्राप्र(३)सिद्धिरतो वह्निपदम्। घटादौ व्यभिचारवारणाय आपाद्यकोटौ 'वह्नी'ति।

(१) 'धूमत्वावच्छिन्नेऽनिर्णयात्' इति क्वचित् पाठः। (२) 'स्वव्यधिकरणजन्ये' इति क्वचित् पाठः। (३) 'अंशासिद्धि'रिति पाठान्तरम्। क्वचित् 'तत्र वह्निपद'मित्येतन्मात्रं वर्त्तते।

(ल) 'तद्‌घटितस्ये'ति तत्तद्वह्निघटितस्य वह्न्यसमवधानकालीननिरुक्तपूर्व-यावत्-कारणकत्वस्येत्यर्थः।

(व) वह्निव्यभिचारीत्यत्र संयोगेनेति योजनीयम्।

(श) 'सामानाधिकरण्यप्रत्यासत्त्ये'ति तद्‌घटकसंयोगेनेत्यर्थः।

तर्कमूलव्याप्तावप्रयोजकत्वं निरस्यति—'अप्रत्यासन्नस्ये'ति। एते सत्यन्तस्य प्रमितावेवोक्तन्यायेन विशेष्याभाव(प)सिद्धिरिति तत् साधयति—'तादृशाजन्यत्वञ्चे'ति। 'प्रत्यासत्त्यन्तरे'ति,—संयुक्तसंयोगादिप्रत्यासत्त्या वह्निसत्त्वेऽपीत्यर्थः। तद्भूमे तादृशाजन्यत्वग्रहस्य प्रत्यक्षतः(१)सम्भवेऽपि धूमत्वावच्छेदेन तदसम्भवात् तन्निर्णयार्थमिदमुक्तमिति ध्येयम्। 'धूमानुत्पादादिने'ति,—आदिना लाघवादिपरिग्रहः। 'इदमेव चे'ति,—धूमानुत्पत्तिं प्रति वह्निसम्बन्धाभावस्येत्यादिवक्ष्यमाणग्रन्थपर्य्यालोचनेन कार्य्यकारणभावग्रहोत्तरं तर्कप्रवृत्तेरुभयत्रापि तुल्यत्वादिति भावः। 'वाचोभङ्ग्या' अशब्देन(२)। 'परिष्कुर्वन्ती'ति, तत्र वह्निजन्यत्वादेः प्रवेशे गौरवात्, अत्र तु तदप्र(३)वेशेन लाघवादिति भावः।

अत्रापि तद्भूमे वह्न्यनधिकरणदेशानुत्पत्तिकत्वग्रहस्य प्रत्यक्षतः सम्भवेऽपि धूमत्वावच्छेदेन तदसम्भवात्(स) तदर्थमाह ;—'तादृ(४)शानुत्पत्तिकत्वे'ति। 'वह्निसम्बन्धाभावस्ये'ति,—वह्नेः कारणत्वग्रहात् तत्सम्ब(ह)न्धाभावप्रयुक्ताऽवश्यं धूमानुत्पत्तिर्ग्राह्या। तत्र सम्बन्धान्तरस्य अनुपस्थितत्वात् गौरवाच्च संयोगात्मकसम्बन्धाभावस्यैव तत्प्रयोजकत्वं कल्प्यत इत्यर्थः।

'तादृशसम्बन्धाभावस्यैव' सामानाधिकरण्यघटकसंयोगात्मकतत्सम्बन्धाभावस्यैव। 'तथात्वम्' प्रयोजकत्वम्। 'तच्चिन्त्य'मिति,—चिन्ताबीजञ्च(५) ;—धूमत्वावच्छेदेन प्रथमत एव तथा(क्ष)ग्रहे धूमो यदि वह्निव्यभिचारी स्यात् सामानाधिकरण्यातिरिक्तप्रत्यासत्त्या वह्न्यजन्यत्वे सति वह्निजन्यो न स्यात्(६),

(१) 'प्रत्यक्षत्वसम्भवेऽपि' इति पाठान्तरम्। (२) स्वल्पशब्देन' इति पाठान्तरम्। क्वचिच्च 'वाचोभङ्ग्या अशब्देन' इत्यंश एव नास्ति। (३) 'तदनिवेशेन' इति पाठान्तरम्। (४) 'तादृशदेशानुत्पत्तिकत्वेति' इति पाठान्तरम्, अतो दीधितावपि तथा। (५) 'बीजन्तु' इति पाठान्तरम्। (६) क्वचित् 'वह्निजन्यो न स्या'दित्यत्र 'वह्निजन्य' इत्येतन्मात्रं, तत्रैव 'न स्यादिति वा' इत्यत्र परपृष्ठवाक्यस्थले 'वा न स्यादिति' इति पाठान्तरम्।

(प) 'विशेषणवत्त्वेनोपस्थिते विशिष्टाभावबुद्धेर्विशेष्याभावावलम्बित्वा'दिति प्रागुक्तयुक्तेरित्यर्थः।

(स) 'तदसम्भवा'दिति-तादृशानुत्पत्तिकत्वग्रहासम्भवादित्यर्थः।

(ह) कारणसम्बन्धाभावस्य कार्य्यानुत्पत्तिप्रयोजकतया तथात्वमवसेयम्।

(क्ष) 'तथा ग्रह' इति सामानाधिकरण्यातिरिक्तप्रत्यासत्त्या वह्न्यजन्यत्वस्य वह्न्यनधिकरणदेशानुत्पत्तिकत्वस्य च ग्रह इत्यर्थः।

वह्न्यनधिकरणदेशानुत्पत्तिकत्वे सति जन्यो न स्यादिति वा तर्केणैव व्याप्तिग्रहसम्भवात् सामानाधिकरण्यप्रत्यासत्त्या वह्निजन्यत्वग्रहस्य वह्न्यधिकरण-देशोत्पत्तिकत्वग्रहस्य च वैयर्थ्यम् ।

प्रथमे च धूमविशेषस्य पक्षत्वे सामान्यव्यभिचारानिर्णयादिरूपसहकारि-वशाल्लाघवप्रतिसन्धानादिवशाच्च(१) धूमत्वावच्छेदेन तादृशजन्यत्वग्रहे च यथाश्रुतमेवास्तु, किं सामानाधिकरण्यप्रत्यासत्तिनिवेशेन, सामान्यव्यभिचारशङ्कायां तर्कस्योत्तेजककोटिप्रवेशेनैव उपयोगितायाः स्वयमप्य(२)वश्याश्रयणीयत्वादिति ।

## दीधितिः

मिश्रास्तु परं प्रति व्याप्तिग्राहोपाये प्रदर्शनीये(३) व्यभिचारशङ्कानिरास-हेतुत्वेनोपदर्शिते तर्के मूलशैथिल्यादिशङ्कोद्भावकं तं प्रति व्याघातोऽयमुपदर्श्यते ; मैवं शङ्किष्ठाः । तथा सति तत्तत्कार्य्यार्थितया तत्र तत्र कारणे तवैव प्रवृत्तयो व्याहन्येरन् । यदाह ;—'नहि सम्भवति,—स्वयं वह्न्यादिकमिती'ति प्राहुः ।

## दीधितिप्रकाशः

'परं' चार्वाकम् । 'व्यभिचारशङ्कानिरासहेतुत्वेन' तर्कान्तरोत्थापनद्वारा उत्तेजकविधया वा व्यभिचारशङ्कानिरासहेतुत्वेन । 'तर्के' वह्निजन्यत्वग्राहकतर्के । 'मूले'ति,—तर्कस्य मूलं व्याप्तिः । आदिना इष्टापत्तिशङ्कापरिग्रहः । 'तं' परम्(अ) व्याघातोपदर्शनमेवाह,—'मैव'मिति । तत्र(आ)ग्रन्थस्वरसं दर्शयति,—'यदाहे'-त्यादिना । 'प्राहु'रिति,—उपादानपदस्य यथाश्रुतार्थकत्वरक्षणमेव प्रकर्षः । नन्वेवमपि प्रतिबन्धकपदस्य यथाश्रुतार्थबाधात्(इ) शङ्काप्रतिबन्धकं शङ्काविरहे लिङ्गमित्यर्थो वाच्यः, तथा च सैवा(ई)सङ्गतिरिति वाच्यम् ; 'शङ्कायां न नियतोपादानं, नियतोपादाने च न शङ्के'ति मूले प्रतिबन्धकत्वविवरणेनैव यथाश्रुतार्थत्यागस्य स्वहस्तितत्वादिति(४) ।

(१) 'सहकारिलाघवप्रतिसन्धानादिवशात्' इति पाठान्तरम् । (२) 'स्वयमप्या-श्रयणीयत्वा'दिति पाठान्तरम् । (३) 'प्रदर्श्यमाने' इति पाठान्तरम् । (४) 'स्वीकृत-त्वादिति' इति पाठान्तरम् ।

(अ) 'पर'मिति प्रागुपदर्शितं चार्वाकमित्यर्थः ।
(आ) 'तत्रे'ति शङ्कायाः सत्त्वे प्रवृत्तेरनुपपत्तावित्यर्थः ।
(इ) 'बाधा'दिति प्रवृत्तेः शङ्कां प्रति प्रतिबन्धकत्वायोगादिति भावः ।
(ई) 'सैवासङ्गति'रिति,-प्रतिबन्धकपदस्य यथाश्रुतार्थकत्वव्याघातरूपापकर्ष इत्यर्थः ।

# तत्त्वचिन्तामणिः

नचैतादृशतर्कावतारो भूयोदर्शनं विनेति(१) भूयोदर्शनादरः(उ)। न तु स(२) स्वत एव प्रयोजकः(ऊ)। अत एव(ऋ) तदाहितसंस्कारो न मानान्तरम्, तर्कस्य अप्रमात्वात्। तच्च प्रत्यक्ष(३)व्याप्तिज्ञाने हेतुः। तदभावेऽपि(४)शब्दानुमानाभ्यां तद्ग्रहात्(५)।

# दीधितिः

'तच्चे'ति,—'तत्' व्यभिचारादर्शनं, व्यभिचारज्ञानसामान्याभावः। योग्यतादिसन्देहेऽपि शब्दादिना अर्थनिश्चयात्। 'तत्' तर्कस्वरूप(६)मिति केचित्।

# दीधितिप्रकाशः

तत्पदस्य सहचारज्ञानपरामर्शकत्वे शाब्दादिव्याप्तिबोधेऽपि पदार्थोपस्थित्यादिविधया सहचारज्ञानस्य हेतुत्वात् 'तदभावेऽपी'ति ७) मूलासङ्गतिरतस्तदर्थमाह,—'व्यभिचारादर्शन'(८)मिति। दर्शनपदस्य(९) निश्चयमात्रपरत्वे तथैवा(१०)सङ्गतिरतो 'व्यभिचारज्ञानसामान्ये'ति।

व्यभिचारज्ञानसामान्याभावस्य शाब्दादावहेतुत्वं दर्शयति,—'योग्यतादी'ति। आदिना साध्यपरिग्रहः। 'शब्दादिने'त्यादिना अनुमानपरिग्रहः। नपुंसकनिर्देशार्थं

---

(१) 'विनैवेति' इति पाठान्तरम्। (२) पुस्तकविशेषे 'स' इति नास्ति। (३) 'व्याप्तिप्रत्यक्षे' इति पाठान्तरम्। (४) अत्र 'तेन विनापि' इति पाठान्तरम्। तन्मते दीधितिप्रकाशेऽपि 'तदभावेऽपी'त्यत्र 'तेन विनापी'ति पाठो बोध्यः। (५) 'व्याप्तिग्रहात्' इति पाठान्तरम्। (६) 'स्वरूपमित्यपि' इति पाठान्तरम्। (७) 'तदभावेऽपि शब्दानुमानाभ्यामिति' इति पाठान्तरम्। (८) 'व्यभिचारादर्शनेति' इति पाठान्तरम्। (९) 'व्यभिचारदर्शनपदस्य' इति पाठान्तरम्। (१०) 'सैवेति' पाठान्तरम्।

---

(उ) एतेन भूयोदर्शनस्य व्याप्तिग्राहकताप्रवादभङ्गशङ्का निरस्ता।

(ऊ) 'स' इति भूयःसहचारग्रह इत्यर्थः। स्वत एवेति तर्कमद्वारीकृत्यैवेत्यर्थः।

(ऋ) 'अत एवे'ति तर्कमद्वारीकृत्य भूयःसहचारग्रहस्य व्याप्तिग्रहप्रयोजकत्वाभावादेवेत्यर्थः। तथाहि तर्कं द्वारीकृत्यैव तस्य व्याप्तिग्रहोपयोगित्वे तज्जनितस्य संस्कारस्य व्याप्तिग्रहजनकतायां मानाभावेन न तत्र प्रमाणान्तरत्वापत्तिः, 'तदेव हि प्रमाणान्तर'मित्यादिना वक्ष्यमाणपरामर्शग्रन्थेन वक्ष्यमाणस्य यथोक्तप्रमाजनकत्वघटितस्यापादकस्य तादृशसंस्कारे विरहादिति भावः।

'स्वरूप'मिति। तर्कस्य च व्यभिचारेणाहेतुत्वमित्यस्वरसं सूचयति,(१)—'केचिदि'ति।

## तत्त्वचिन्तामणिः

ननु सहचारदर्शन-व्यभिचारादर्शनवद् व्यभिचारशङ्काविरहानु(२)कूलतर्कयोर्ज्ञानं(३) व्यभिचारिसाधारणमिति न ततोऽपि(४) व्याप्तिनिश्चय इति चेन्न, स्वरूप-(५)सतोरेव तयोर्व्याप्तिग्राहकत्वात्। सत्तर्कात् व्याप्तिप्रमा, तदा(ऋ)भासात्तदप्रमा, विशेषदर्शनसत्यत्वासत्यत्वाभ्यां पुरुषज्ञानमिव।

## दीधितिः

ननु वस्तुतो व्याप्तिसत्त्वे तर्काभासात् प्रमाभ्रमयोरुत्पादानुत्पादाभ्यां व्यभिचार इत्यत आह,—'विशेषदर्शने'ति। तथा च यथा तस्य बोध्यतदभाववद्विषयकत्वे सत्यत्वासत्यत्वे तथा तर्कस्यापीति। अत्र च सत्यत्वादिसम्पादके धर्मिणो बोध्यादिमत्त्वे बोध्यादिमद्धर्मिसन्निकर्षे वा तात्पर्य्यम् लाघवात्, तर्कस्य व्यभिचारेणाहेतुतायाः स्वयमेव दर्शितत्वाच्च।

## दीधितिप्रकाशः

'वस्तुतः' वस्तुगत्या। 'तर्काभासा'दिति,—धूमो यदि वह्निव्यभिचारी स्याद् द्रव्यं न स्यादित्याकारादित्यर्थः। 'व्यभिचार' इति,—सत्तर्कस्य प्रमायां व्यतिरेकव्यभिचारः, असत्तर्कस्य भ्रमे अन्वयव्यभिचार इत्यर्थः। 'तस्य' विशेषदर्शनस्य। 'बोध्यं' पुरुषत्वादि। तथा च पुरुषत्वविशेष(ऌ)दर्शनस्य सत्यत्वं पुरुषत्ववद्विशेष्यकत्वम्, असत्यत्वञ्च पुरुषत्वाभाववद्विशेष्यकत्वम्, तेन दण्डादौ करादिभ्रमात्मकस्य (ॡ) पुरुषत्वविशेषदर्शनस्य पुरुषत्ववद्विशेष्यकस्य सत्यत्वं यथा, तथा व्याप्तिमद्विशेष्यकत्वं तर्कस्य सत्यत्वम, तच्छून्यविशेष्यकत्वञ्चासत्यत्वमित्युक्ततर्काभासोऽपि सत्तर्क एवेति भावः।

---

(१) 'दर्शयति' इति पाठान्तरम्। (२) 'शङ्कानिवृत्त्यनु' इति पाठान्तरम्। (३) 'तर्कयोरपि ज्ञानम्' इति पाठान्तरम्। (४) 'अपि' शब्दो न सर्वत्र। (५) 'स्वरूपत एव' इति पाठान्तरम्।

(ऋ) तदाभासादित्यत्र तत्पदं तर्कमात्रपरम्। सत्तर्कस्य आभासत्वायोगात्। तेन तदाभासादित्यस्य तर्काभासादित्यर्थः। तदप्रमेति व्याप्त्यप्रमेत्यर्थः।

(ऌ) पुरुषत्वविशेषदर्शनस्य पुरुषत्वव्याप्यदर्शनस्येत्यर्थः।

(ॡ) दण्डादावित्यादिः—करत्वादिना दण्डाद्यवगाहिज्ञानात्मकस्येत्यर्थः।

'अत्र च' 'सत्तर्का'दित्यादिग्रन्थे च। 'सत्यत्वादी'त्यादिना असत्यत्वपरिग्रहः। 'बोध्यादी'त्यादिना बोध्याभावपरिग्रहः। यत्र कुत्रचिद् बोध्यसत्त्वेऽपि तच्छून्ये(ए) प्रमानुदयादाह,—'धर्मिण' इति। फलीभूतज्ञानविशेष्यस्येत्यर्थः। एवमग्रेऽपि। तथा च यत्र व्याप्तिप्रमा प्रमात्वघटकविशेष्यतासम्बन्धेन तत्र व्याप्तिः व्याप्तिमदिन्द्रियसन्निकर्षो वेत्येवं सामानाधिकरण्यप्रत्यासत्त्या हेतुत्वं ग्राह्यमिति भावः।

बोध्यस्य व्याप्त्यादेरतीतत्वादिदशायां (ऐ) तत्प्रमायां तस्य हेतुत्वासम्भवादाह, 'बोध्यादिमद्धर्मी'ति। 'लाघवात्' व्याप्तिमद्विशेष्यकतर्कत्वाद्यपेक्षया व्याप्त्यादेर्लघुत्वात्। संयोगाद्यन्यतमत्वरूपसन्निकर्षत्वस्य तर्कत्वापेक्षया न लाघवमत आह,—'तर्कस्ये'ति। 'व्यभिचारेणे'ति,—यत्र व्याघातादिना स्वतः सिद्धो(१) वा शङ्काविरहस्तत्रेत्यर्थः।

## दीधितिः

अथ विपरीतज्ञानोत्तरप्रत्यक्षे तन्निवर्त्तकत्वेन विशेषदर्शनस्य हेतुत्वम्(ओ), तच्च तर्कस्यापीति चेत्, अस्तु तावदापाततस्तथा, तथाप्यन्यत्र क्लृप्तप्रामाण्यादिप्रयोजकादेव तत्र प्रामाण्याद्युपपत्तौ न तस्यापि विशेषतः कारणत्वम्, गौरवात्। उक्तञ्च विशेषणज्ञानस्य विशिष्टज्ञानकारणत्वमते सर्वत्र विशेष्यसम्बद्धासम्बद्धविशेषणज्ञानमेव प्रमाभ्रमप्रयोजकमिति वदन्ति।

(१) 'सिद्ध एव वा' इति पाठान्तरम्।

---

(ए) 'तच्छून्ये' बोध्यशून्ये धर्मिणीत्यर्थः। 'प्रमानुदया'दिति बोध्यप्रकारकयथार्थज्ञानानुत्पत्तेरित्यर्थः। तद्वति तत्प्रकारकज्ञानस्यैव प्रमात्वादिति भावः।

(ऐ) 'अतीतत्वादी'त्यादिपदादनागतत्वपरिग्रहः। 'तत्प्रमायां' व्याप्त्यादिप्रमायाम्। 'तस्य' व्याप्त्यादेः। 'हेतुत्वासम्भवा'दिति,—अतीतानागतव्याप्त्यादेर्हेतुताघटकनियतपूर्ववर्त्तित्वाभावादिति भावः।

(ओ) विशेषदर्शनत्वेन तत्र हेतुत्वकल्पने तादृशरूपस्य व्यावर्त्तकधर्मदर्शनालोकसमवधानादिसाधारण्याभावेन तमसि घटादिसन्देहोत्तरं व्याप्यदर्शनमन्तरेणापि आलोकसंयोगसमवधानात् सम्भवतो घटादिनिर्णयस्य समुत्पादेन व्यभिचारप्रसङ्ग इति ध्येयम्।

## दीधितिप्रकाशः

'विपरीतज्ञाने'ति,—भ्रमसंशययोर्विपरीतज्ञानत्वेनानुगमः(औ)। 'तन्निवर्त्तकत्वेन' विपरीतज्ञाननिवर्त्तकत्वेन। 'तच्च' विपरीतज्ञाननिवर्त्तकत्वञ्च। व्यभिचारज्ञानोत्तरव्याप्तिप्रत्यक्षे व्यभिचारज्ञाननिवर्त्तकत्वेन व्याप्तिग्राह्यदर्शनस्य हेतुत्वं क्लृप्तमिति व्यभिचारशङ्कानिवर्त्तकत्वञ्च तर्कस्यापीति तेन रूपेण तस्यापि हेतुत्वमित्यर्थः। 'आपातत' इति,—विपरीतज्ञानाव्यवहितोत्तरत्वस्य तत्तद्व्यक्तिविश्रामेण (१)तादृशप्रत्यक्षनिर्णयत्वस्य चार्थसमाजग्रस्ततया(२) कार्य्यतानवच्छेदकत्वादिति(अ)। आलोकसंयोगादि-कुङ्कुमघृतसंयोगादिसाधारणस्य विरोधित्वस्यैकस्याभावादिति च कश्चित्(३)। 'तथा' तादृशहेतुत्वम्। 'अन्यत्र' तादृशविपरीतज्ञानानुत्तरप्रत्यक्षे। 'तत्र' विपरीतज्ञानोत्तरप्रत्यक्षे(४)। 'तस्यापि' विपरीतज्ञाननिवर्त्तकस्यापि। 'विशेषतः' विपरीतज्ञानोत्तरप्रमात्मकप्रत्यक्षं प्रति विपरीतज्ञाननिवर्त्तकसत्यत्वादिना (५)।

ननु(६) सन्निकर्षत्वं तावदन्यतमत्वरूपं(आ)गौरवाद् दुर्ज्ञेयत्वाच्च न जनकतावच्छेदकम्। तथा च अन्यत्र क्लृप्तं प्रामाण्यादिप्रयोजकं(७) किमत आह, 'उक्तञ्चे'ति। 'विशेष्यसम्बद्धे'ति,—तादृश-(क) विशेष्यतासम्बन्धेन यत्र पुरुषत्वप्रमा, तत्र स्वविषयीभूतपुरुषत्वाश्रयत्वसम्बन्धेन पुरुषत्वज्ञानम्। यत्र भ्रमत्वघटकविशेष्यतासम्बन्धेन पुरुषत्वभ्रमस्तत्र स्वविषयीभूत(ख) पुरुषत्वाभावाश्रयत्वसम्बन्धेन पुरुषत्वज्ञानमित्येवंरूपप्रत्यासत्त्या तादृशविशेषणज्ञानस्य(८) तादृशप्रमाभ्रमहेतुत्वम् ग्राह्यम्। तेन यथाश्रुते पुरुषसम्बद्धपुरुषत्वज्ञानस्य पुरुषभिन्नसम्बद्धपुरुषत्वज्ञानस्य च

---

(१) 'विश्रान्तत्वेन' इति क्वचित् पाठः। (२) 'अर्थसमाजग्रस्ततया च' इति क्वचित् पाठः। (३) 'आलोके'त्यादिः 'कश्चि'दित्यन्तः पाठो न सार्वत्रिकः। (४) 'तत्र विपरीतज्ञानोत्तरप्रत्यक्षे' इति न सार्वत्रिकम्। (५) 'निवर्त्तकत्वादिना' इति पाठान्तरम्। (६) एकत्र 'ननु' इति नास्ति। (७) 'प्रामाण्यप्रयोजकम्' इति क्वचित् पाठः। (८) 'विशेषणज्ञानस्य' इत्यनन्तरं 'कारणत्व' पदात् पूर्वपर्यन्तः पाठः पुस्तकविशेषे स्खलितो लक्ष्यते।

(औ) 'भ्रमे'ति—अयथार्थनिश्चय इत्यर्थः।

(अ) अव्यवहितोत्तरत्वसम्बन्धेन विपरीतज्ञानवत्प्रत्यक्षनिर्णयं प्रति विपरीतज्ञानविरोधित्वेन हेतुत्वमिति रीत्या सम्बन्धमुद्रयाव्यवहितोत्तरत्वस्य निवेशे अव्यवहितोत्तरत्वस्य तत्तद्व्यक्तिविश्रान्तत्वप्रयुक्तक्षतिविरहाद्दोषान्तरानुधावनम्।

(आ) प्रत्यक्षे यावन्तः सन्निकर्षास्तावदन्यतमत्वरूपमित्यर्थः।

(इ) तादृशेति प्रमात्वघटकेत्यर्थः।

(ई) अत्र स्वविषयीभूतत्वं पुरुषत्वांशे विशेषणम्।

कारणत्वपर्य्यवसाने अव्यावर्त्तकत्वादिदोषप्रसङ्गो न प्रसज्यते(उ)। स्वमते प्रमात्वंभ्रमत्वंयोरर्थवशसम्पन्नतया कार्य्यतानवच्छेदकत्वादाह,—(१) 'वदन्ती'ति।

## तत्त्वचिन्तामणिः

अपरे तु यत्र तर्के व्याप्त्यनुभवो मूलं, तत्र तर्कान्तरापेक्षा। यत्र तु व्याप्तिस्मरणं हेतुः(२), तत्र न तर्कान्तरापेक्षेति नानवस्था(ऊ)। अस्ति च जातमात्राणामिष्टानिष्टसाधनतानुमिति(३)हेतुव्याप्तिस्मरणं तदानीं व्याप्त्यनुभावकाभावात्, तन्मूलानुभवमूला च अग्रेऽपि व्याप्तिस्मरणपरम्परेति(ऋ)।

यत्तु अनादिसिद्धकार्य्यकारणभावविरो(ॠ)धादिमूलाः केचित् तर्का इति, तन्न ; तत्र(४)प्रमाणानुयोगे अनुमान एव पर्य्यवसानात्। न च व्याप्तिग्रहान्यथानुपपत्त्यैव तर्कस्य अनादिसिद्धव्याप्तिकत्वज्ञानमिति वाच्यम् ; अनुपपत्तेरप्यनुमानत्वात्।

(१) पुस्तकविशेषे 'आह' इति नास्ति। (२) 'स्मृतिर्मूलम्' इति पाठान्तरम्। (३) 'मात्रस्येष्टसाधनत्वानुमिति' इति क्वचित्। (४) 'तत्र तत्र' इति क्वचित्।

(उ) 'प्रसज्यत' इति—पदं करोतीत्यर्थः। प्रकृते सम्बद्धत्वं यदि समवायरूपसम्बन्धप्रतियोगित्वं, तच्च पुरुषत्वांशे विशेषणम्, तदा पुरुषसम्बद्धपुरुषत्वज्ञानस्य कारणताकल्पे अव्यावर्त्तकत्वम्। पुरुषभिन्नसम्बद्धपुरुषत्वज्ञानस्य कारणत्वकल्पे त्वप्रसिद्ध्यादिः। यदि च प्रमात्वभ्रमत्वघटकविशेष्यताविशेषाभ्यां यथाक्रमं सम्बद्धत्वं, तच्च ज्ञानांशे विशेषणम्, तदा समवायेन कार्य्यकारणभावाङ्गीकारे गौरवम्, प्रागुक्तसम्बन्धाभ्यां पुरुषत्वज्ञानत्वमात्रेण कारणताकल्पन एव लाघवात्। निरुक्तसम्बन्धद्वयेन पुरुषसम्बद्धपुरुषत्वज्ञानत्वावच्छिन्नकारणत्वाङ्गीकारे पुनरव्यावर्त्तकत्वं गौरवञ्चेति सूक्ष्ममीक्षणीयम्।

(ऊ) अस्मिन् मते व्याप्तेरनुभवं प्रत्येव तर्कस्य हेतुत्वम्, न तु व्याप्तेः स्मृतिं प्रत्यपि, तेन पूर्वपक्षे दर्शितस्य जातमात्रबालकीयेष्टानिष्टसाधनतानुमितिहेतुव्याप्तिज्ञानस्य स्मृतिरूपत्वात् तर्कं विनाप्युत्पत्तेर्न व्यभिचार इति भावः।

(ऋ) स्मरणपरम्परायास्तर्कजन्यतावच्छेदकानाक्रान्ततया तर्कं विनैव तादृशव्याप्तिस्मरणपरम्परा उपपन्नेति भावः।

(ॠ) कार्य्यकारणभावो धूमो यदि वह्निव्यभिचारी स्यात् वह्निजन्यो न स्यादित्यादिवह्निधूमादिव्याप्तिग्राहकतर्के मूलम्। विरोधश्च शिंशपा यदि वृक्षान्यतादात्म्या स्यात् वृक्षतादात्म्या न स्यादित्यादिरूपे तादात्म्यादिना वृक्षशिंशपादिव्याप्तिग्राहके तर्के मूलम्।

अन्ये तु विपक्षबाधकतर्कादनौपाधिकत्वग्रह एव, तदधीनो व्याप्तिग्रह इति। तदपि न, तर्कस्य अप्रमाणत्वात् (ल)। व्यभिचारादिशङ्कानिरासद्वारा प्रत्यक्षादि(१)सहकारी स इति चेन्न, अनवस्थाभयेन तर्कं विना व्याघाताद् यत्र शङ्काविरहस्तत्र व्याप्तिग्रहे तर्कस्य व्यभिचारात्।

## दीधितिः

'तत्र प्रमाणे'ति,—इदमनादिसिद्धत्वज्ञानस्य प्रयोजकत्वमभिप्रेत्य, परार्थाभिप्रायेण वा। 'अनुमानत्वात्' व्याप्तिग्रहाधीनप्रवृत्तिकत्वात्। 'व्यभिचारशङ्के'ति,—द्वारेण च द्वारिणो(२) नान्यथासिद्धिरिति भावः।

## दीधितिप्रकाशः

वस्तुगत्या अनादिसिद्धकार्य्यकारणभावस्य शङ्कापनायकत्वे तत्र(ळ) प्रमाणप्रश्नोऽसङ्गत इत्यत आह—'इद'मिति। 'इदं' तत्रेत्यादि(३)दूषणम्। 'प्रयोजकत्वं' शङ्काप्रतिबन्ध(४) प्रयोजकत्वम्। स्वार्थस्थले प्रमाणानु(५)योगस्यासम्भवात् 'तत्र प्रमाणानुयोग' इति ग्रन्थस्वरसादाह—'परार्थे'ति। तथा च तत्र शङ्काप्रतिबन्धाय अनादिसिद्धकार्य्यकारणभाव(६)ग्रहमूलकत्वेन तर्कोपन्यासे तत्र अनादिसिद्धत्वे प्रमाणानुयोगो युज्यत एवेति भावः। परमते अनुपपत्तेरर्थापत्तित्वादुभयमतसाधारण्यार्थमाह—'व्याप्तिग्रहाधीने'ति। व्याप्तिग्रहस्यापेक्षणीयतायामेवानवस्थेति भावः। ननु व्यभिचारशङ्कानिरासस्यावश्यापेक्षणीयत्वे(७) तेनैवान्यथासिद्धो विपक्षबाधकस्तर्कः कथं कारणमित्यत आह—'द्वारेण चे'ति।

---

(१) आदर्शविशेषे 'प्रत्यक्षादि' इति नास्ति। (२) 'द्वारेण द्वारिणो' इति क्वचित् पाठः। (३) 'तत्रेत्यादिना' इति क्वचित् पाठः। (४) 'प्रतिबन्धे प्रयोजकत्वम्' इति क्वचित् पाठः। (५) 'स्थले अनु' इति पाठान्तरम्। (६) पुस्तकविशेषे 'ग्रह' इति नास्ति। (७) 'वश्यमपेक्षणीयतया' इति पाठान्तरम्।

---

(ल) तथा च तर्कस्य प्रमाणविधया अनौपाधिकत्वग्रहे हेतुत्वं न सम्भवतीति भावः।

(ळ) शाभस्यैव प्रमाणसापेक्षतया कार्य्यकारणभावे ज्ञानभिन्ने प्रमाणस्यानपेक्षणात् तत्र प्रमाणप्रश्नो न सङ्गच्छत इति भावः।

## तत्त्वचिन्तामणिः

यत्तु योग्यानामुपाधीनां(१) योग्यानुपलब्ध्या(२) अभावग्रहः, अयोग्यानान्तु साध्याव्यापकत्वसाधनव्यापकत्व(ए)साधनाद्भावग्रह इत्यनौपाधिकत्वं मनसा(३) सुग्रहमिति, तत्तुच्छम्, अनुमानेन तत्साधने अनवस्थानात्, प्रमाणान्तरस्याभावात्।

ये च अनुकूलतर्कं विनैव सहचारादिदर्शनमात्रेण व्याप्तिग्रहं वदन्ति; तेषां पक्षेतरत्वस्य साध्यव्यापकत्व(४)साधनाव्यापकत्वग्रहे अनुमानमात्रमुच्छिद्येत। अनुमानमात्रोच्छेदकत्वादेव पक्षेतरत्वं(५)नोपाधिरिति चेत्, भ्रान्तोऽसि, नहि वयमुपाधित्वेन तस्य दोषत्वमाचक्ष्महे, किन्तु साध्यव्यापकत्वेन तद्व्यतिरेकात्(ऐ) पक्षे साध्यव्यावर्त्तकतया, व्यापकव्यतिरेके व्याप्यव्यतिरेकस्य वज्र(ओ)लेपायमानत्वात्(६)।

अपि च करवह्निसंयोगः शक्त्यतिरिक्तातीन्द्रियधर्मसमवायी जनकत्वादित्यत्राप्रयोजकत्वान्न साधकम्। तत्र व्याप्तस्य पक्षधर्मत्वे किमप्रयोजकं(७) नाम? तस्मात् विपक्षबाधकतर्काभावान्न तत्र व्याप्तिग्रह इत्यप्रयोजकत्वमिति।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ अनुमानखण्डे
तर्कप्रकरणं समाप्तम्।

## दीधितिः

'अनुमानमात्रे'ति,—अनिश्चितसाध्यपक्षके सर्वत्र सम्भवित्वात्, पक्षे साध्यनिर्णये अनुमान(८)वैयर्थ्यात्। 'उपाधित्वेन'स्वव्यभिचारेण(९)व्यभिचारोन्नायकत्वेन।

---

(१) 'योग्योपाधीनाम्' इति पाठान्तरम्। (२) 'योग्यानुपलम्भात्' इति पाठान्तरम्। (३) पुस्तकविशेषे 'मनसा' इति नास्ति। (४) आदर्शविशेषे 'साधनाव्यापकत्व' इत्ययमंशो नास्ति। (५) 'पक्षेतरो नोपाधिरिति' इति पाठान्तरम्। (६) 'वज्रलेपत्वाच्च' इति पाठः क्वचिद् दृश्यते। क्वचिच्च 'वज्रलेपाच्च' इति। (७) 'किमप्रयोजकत्वम्' इति पाठान्तरम्। (८) 'वैफल्यात्' इति पाठान्तरम्। (९) 'साध्यव्यभिचारेण' इति क्वचित् पाठः।

---

(ए) अत्र साध्याव्यापकत्व-साधनव्यापकत्वयोरेकतरस्य साधनादित्यर्थः। तदेकतरसाधनेनैव साध्यव्यापकत्वं सति साधनाव्यापकत्वलक्षणोपाधित्वग्रहासम्भवेन हेतावनौपाधिकत्वग्रहस्य सम्भवादुभयसाधनस्य व्यर्थत्वादिति ध्येयम्।

(ऐ) 'साध्यव्यापकत्वेन तद्व्यतिरेका'दिति साध्यव्यापकत्वेन निश्चीयमानस्य तस्य पक्षे व्यतिरेकनिश्चयादित्यर्थः।

(ओ) तथाहि साध्यव्यापकव्यतिरेकनिर्णयस्य साध्याभावव्याप्यवत्तानिश्चयविधयैव प्रकृतसाध्यबुद्ध्यनुत्पादप्रयोजकत्वमिति भावः।

अनुमानमात्रोच्छेदकताज्ञानमेव साध्यव्यापकताबुद्धिं विरुन्ध्यादित्याशङ्क्याह,—'अपि चे'ति। 'करवह्नी'ति,—परमतेनेदम्। स्वमते तु वाय्वादौ स्पर्शादिना रूपादिसाधने शक्त्यतिरिक्तविशेषणा(१)प्रक्षेपेण वा तद् बोध्यम्।

इति श्रीरघुनाथशिरोमणिकृतायां दीधितौ अनुमानखण्डे तर्कप्रकरणं समाप्तम्।

## दीधितिप्रकाशः

पक्षे साध्यनिश्चये सिषाधयिषाधीना यत्रानुमितिस्तत्र पक्षेतरत्वस्य साध्याव्यापकत्वग्रहादनुपाधिकत्वसम्भवादनुमानमात्रोच्छेदो न(२)सम्भवतीत्यत आह—'अनिश्चिते'ति। 'सम्भवित्वात्'(३) साध्यव्यापकत्वग्रहस्य सम्भवित्वात्(४)। 'वैयर्थ्यादि'ति(५),—अनिश्चितार्थनिर्णयो(६)ऽनुमानफलम्, पक्षे साध्यनिर्णये(७) च तदभावादित्यर्थः। एवञ्च मूले अनुमानपदं सफलानुमानपरमिति। उपाधित्वेनेत्यस्य यदि साध्यव्यापकत्वे सति साधनाव्यापकत्वेनेत्यर्थः क्रियते, तदा 'किंत्वित्यादिना तेनैव(८)दूषणस्योक्तत्वादसङ्गतिरत आह—'स्वव्यभिचारेणे'ति। 'व्यभिचारोन्नायकत्वेन' व्यभिचारानुमित्युपधायकत्वेन। एवञ्चानुमानमात्रोच्छेदे व्यभिचारानुमितेरप्युच्छेदाद् व्यभिचारानुमित्युपधायकव्यभिचारप्रतियोगित्वरूपेण उपाधित्वेन तस्य दोषत्वं नावक्ष्महे इति मूलार्थः(९)। मूले च साध्यव्यावर्त्तकतयेत्यस्य साध्यवत्ताज्ञानप्रतिबन्धकतया इत्यर्थः। 'विरुन्ध्यादि'(१०)ति,—प्रतिकूलतर्कविधयेति शेषः। शक्त्यप्रसिद्ध्या स्वमते एतदनुमानासम्भवादाह(औ) 'परमतेनेद'मिति। 'इदम्' अप्रयोजकमनुमानम्। स्वमतेऽपि शक्तिसाधकानुमान एवाप्रयोजकत्वमिति दर्शयति-'शक्त्यतिरिक्तविशेषणाप्रक्षेपेण(११)वे'ति। 'तत्' अप्रयोजकमनुमानम्(१२)।

इति श्रीभवानन्दीये तत्त्वचिन्तामणि-दीधितिप्रकाशे अनुमानखण्डे तर्कप्रकरणं समाप्तम्।

(१) 'विशेषणाप्रवेशेन' इति पाठान्तरम्। (२) 'ग्रहान्नोपाधित्वं सम्भवती'ति पाठान्तरम्। (३) 'ग्रहसम्भवात्' इति पाठान्तरम्। एतन्मते दीधितावपि स एव पाठः। (४) अत्रापि 'सम्भवा'दिति पाठान्तरम्। (५) 'वैफल्यादिति' इति पाठान्तरम्। (६) 'निश्चय' इति पाठान्तरम्। (७) 'निश्चये च' इति पाठान्तरम्। (८) 'दूषकत्वस्य' इति पाठान्तरम्। (९) 'मूलार्थ इति भाव' इति क्वचित् पाठः। (१०) 'निरुन्ध्यादिति' इति पाठान्तरम्। तदनुसारेण दीधितावपि तन्मते स एव पाठ उन्नेयः। (११) 'विशेषणाप्रवेशेन' इति क्वचित्। (१२) 'अप्रयोजकानुमान'मिति क्वचित्।

---

(औ) 'एतदनुमानासम्भवा'दिति—नैयायिकनये शक्तेरप्रसिद्ध्या तदतिरिक्तत्वघटितसाध्याप्रसिद्धेरिति भावः। एवञ्चात्र साध्याप्रसिद्धेरेवाप्रयोजकत्वं सुवचमिति हृदयम्।

# अथ व्याप्त्यनुगमप्रकरणम्

## तत्त्वचिन्तामणिः

उक्तव्याप्तिप्रकारेषु अन्योन्याभावगर्भैव व्याप्तिरनुमितिहेतुर्लाघवात्। अतो नाननुगमः।

## अथ व्याप्त्यनुगमप्रकरणे

## दीधितिः

'उक्तव्याप्ती'ति प्रतियोग्यसामानाधिकरण्य(१)विशेषणविरहेण लाघवात्। अथ संयोगाभावस्येव संयोगवद्भेदस्यापि हेतुसामानाधिकरण्यग्रहेऽप्यनुमितिदर्शनात् तत्रापि तदवश्यं निवेशनीयमिति क्व लाघवम्?

नन्वेवं प्रतियोगि(२)सामानाधिकरण्याद्यनुपस्थितौ हेतुसमानाधिकरणाभाव-प्रतियोगितानवच्छेदकत्वग्रहेऽप्यनुमितिर्न स्यात् (क)।

## अथ व्याप्त्यनुगमप्रकरणे

## दीधितिप्रकाशः

प्रतियोग्यसामानाधिकरण्य(३)विशेषणविरहेणेत्येव(ख)पाठः। 'तत्रापि' अनु-मितिहेतुज्ञानविषये अन्योन्याभावघटितव्याप्तावपि। अपिना अत्यन्ताभावघटितव्याप्ति-समुच्चयः। 'तत्' प्रतियोग्यसामानाधिकरण्यम्(४)।

---

(१) 'प्रतियोग्यसामानाधिकरण्यादि' इति पाठान्तरम्। (२) 'प्रतियोग्यसामानाधि' इति पाठान्तरम्। (३) 'प्रतियोग्यसमानाधिकरणत्वे'ति पाठान्तरम्। (४) 'प्रतियोग्य-समानाधिकरणत्व'मिति पाठान्तरम्।

---

(क) अभावज्ञानस्य प्रतियोगिज्ञानसाध्यतया प्रतियोगिसामानाधिकरण्यरूपप्रतियोगि-ज्ञानाभावेन प्रतियोगिसामानाधिकरण्याभावज्ञानस्यासम्भवेन कारणत्वाभिमततादृशाभाव-घटितव्याप्तिज्ञानस्य सुतरामसम्भवादिति भावः।

(ख) इतरव्यवच्छेदार्थकेन एव-शब्देन 'प्रतियोग्यसामानाधिकरण्यादी'त्यादिशब्दघटितस्य पाठस्य व्यवच्छेदः। अन्योन्याभावघटितलक्षणे अत्यन्ताभावघटितलक्षणघटकेषु तन्मात्रस्यैव विशेषणस्याभावादादिपदार्थसमन्वयासम्भवादिति भावः।

'एवं' प्रतियोग्यसामानाधिकरण्यस्य अनुमितिहेतुज्ञानविषयतानैयत्ये। 'प्रतियोगिसामानाधिकरण्यादी'ति पाठः, आदिना तदभावपरिग्रहः। 'प्रतियोग्यसामानाधिकरण्यादी'त्यप(१)पाठः। न च तत्रादिना साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्य समुच्चयः समवायाद्यवच्छिन्नवह्न्याद्यभावमादाया-(२) सम्भवितया(ग) तद्विशेषणस्यावश्यकत्वादिति। तथा धूमवति महानसादौ वर्त्तमानस्य वह्निमतो भेदस्य प्रतियोगितावच्छेदकत्वाद् वह्न्यादावव्याप्त्यापत्त्या प्रतियोगितावच्छेदकत्वे साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वविशेषणस्यावश्यकत्वात् (३)।

## दीधितिः

न च प्रतियोगिसमानाधिकरणत्वेन अज्ञायमाना यावन्तो हेतुसमानाधिकरणा अभावाः, तत्प्रतियोगितावच्छेदकत्वाभावग्रहो हेतुरिति वाच्यम्; तादृशाभावग्रहो हि न हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वत्वेन रूपेण, प्रतियोगिसमानाधिकरणतादृशाभावप्रतियोगितावच्छेदकत्वग्रहे तदसम्भवात्। नापि प्रातिस्विकरूपेण, जन्मसहस्रेणाप्यसम्भवात्। नापि रूपान्तरेण, वह्नित्वावच्छिन्नप्रतियोगिताकाभावस्य धूमसामानाधिकरण्यभ्रमेऽपि वह्नित्वानवच्छिन्नप्रतियोगिताकधूमसमानाधिकरणनिखिलाभावप्रतियोगितानवच्छेदकं वह्नित्वमिति ज्ञानादपि अनुमितिप्रसङ्गात्।

---

(१) 'सामानाधिकरण्यादीत्यपि पाठः' इति पाठान्तरम्। (२) 'असम्भवतया' इति क्वचित् पाठः। (३) 'तथा' इत्यारभ्य 'आवश्यकत्वा'दित्यन्तग्रन्थः सर्वत्र नैव दृश्यते।

(ग) 'असम्भवितये'त्यादिः, प्रकृतव्याप्तिलक्षणस्य लक्ष्यमात्रावृत्तित्वरूपासम्भवदोषग्रस्ततयेत्यर्थः। तद्विशेषणस्य साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वविशेषणस्य, व्याप्तिघटकप्रतियोगितायामिति शेषः। अथवा साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्येति प्रतियोग्यसामानाधिकरण्यांशे तादृशविशेषणस्येत्यर्थः। वृत्त्यनियामकसम्बन्धेन साध्यतास्थले तत्सम्बन्धावच्छिन्नप्रतियोगिताया अस्वीकर्त्तृमते दोषनिरासाय निष्कर्षे साध्यतावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यस्यावश्यनिवेश्यत्वात्। तद्विशेषणस्येत्यस्यापि प्रतियोग्यसामानाधिकरण्यांशे साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वविशेषणस्येत्यर्थः। 'तथे'त्यादिः—एवञ्च तद्विरहेणात्र कथं लाघवमिति भावः।

# दीधितिप्रकाशः

उपाध्यायमतं निरस्यति—'न चे'ति। तत्पुरुषीयस्य(घ) प्रतियोगिसामानाधिकरण्यग्रहस्य विशेष्यतया अभावावच्छिन्ना यावन्त(ङ)स्तादृशाभावास्तत्प्रतियोगितानवच्छेदकत्वग्रहस्तत्पुरुषीयानुमितौ हेतुरित्यर्थः।

'तादृशाभावः' हेतुसमानाधिकरणप्रतियोगिसमानाधिकरणत्वेनाज्ञायमानाभावप्रतियोगितावच्छेदकत्वाभावः। 'तदसम्भवा'दिति,—नीलघटत्वेन(१) ज्ञाने

(१) 'नीलघटत्वेन ज्ञात' इति पाठान्तरम्। क्वचिच्च 'नीलघटवत्त्वेन ज्ञाते' इति।

---

(घ) साध्याभावे प्रतियोग्यसामानाधिकरण्यग्रहदशायामपि पुरुषान्तरीयप्रतियोगिसामानाधिकरण्यग्रहस्य विशेष्यतया अभावस्य तत्रासत्त्वात् तस्य तादृशाभावावच्छिन्नाभावानन्तर्गततया निरुक्तरूपाभावप्रतियोगितानवच्छेदकं साध्यतावच्छेदकमिति ज्ञानादनुमित्यापत्तिवारणार्थं तत्पुरुषीयत्वविशेषणम्।

(ङ) वह्निमान् रासभादित्यादौ रासभादिसमानाधिकरणघटाद्यभावप्रतियोगितानवच्छेदकं वह्नित्वमित्यादिग्रहादनुमित्यापत्तिवारणाय अभावांशे यावत्त्वविशेषणम्।

'अभावावच्छिन्ना' इति,—तत्कालावच्छिन्नविशेषणताविशेषसम्बन्धेनाभावविशिष्टा इत्यर्थः। तेन संयोगाभावे प्रतियोगिसामानाधिकरण्यग्रहदशायामपि कालान्तरावच्छेदेन तत्र तादृशाभाववैशिष्ट्यसत्त्वात् संयोगत्वस्य तादृशाभावप्रतियोगितावच्छेदकत्वेन • न संयोगी द्रव्यत्वादित्याद्यनुमित्यनुपपत्तिः। प्रतियोगिसमानाधिकरणत्वेन अज्ञायमानत्वस्य उपलक्षणतया प्रवेशात् कारणतावच्छेदकाघटकत्वेन प्रतियोगिसामानाधिकरण्याद्यनुपस्थितौ न दोषतादवस्थ्यम्। तत्पुरुषीयस्येत्यादि अभावावच्छिन्ना इत्यन्तं तादृशाभावानां परिचायकमात्रं, न तु तद्रूपेणाभावानां कारणतावच्छेदकघटकतापि, तथा सति प्रतियोगिसामानाधिकरण्याद्यनुपस्थितिदशायां प्रागुक्तानुमित्यनुपपत्तिदोषतादवस्थ्यात्। तत्पुरुषीयानुमितावित्यस्य तत्पुरुषीयतत्कालीनानुमितावित्यर्थः।

उपलक्षणतया विशेषणस्य सामानाधिकरण्यमात्रं कारणतावच्छेदककोटौ निविशते, न तु तद्विषयत्वमपि। तेन प्रकृते अयं निष्कर्षो यथा;—सामानाधिकरण्यसम्बन्धेन प्रतियोगिसमानाधिकरणत्वेनाज्ञायमानत्वविशिष्टहेतुसमानाधिकरणाभावत्वव्यापिका या साध्यतावच्छेदकविषयता तन्निरूपकज्ञानत्वेन कारणत्वम्। व्यापकत्वञ्च हेतुसामानाधिकरण्यविषयतानिरूपिता या स्वनिरूपिताभावविषयतानिरूपितावच्छेदकत्वविषयतानिरूपितप्रतियोगित्वविषयतानिरूपितविषयता तद्वत्त्वसम्बन्धेन। व्यापकतावच्छेदकसम्बन्धघटकं स्वपदं साध्यतावच्छेदकविषयतापरम्।

घटत्वेन पीतघटस्याभावज्ञानासम्भववत्(च) प्रतियोगिसमानाधिकरणतादृशाभावप्रतियोगितावच्छेदकत्वग्रहे प्रतियोगिसमानाधिकरणत्वेनाज्ञायमानाभावप्रतियोगितावच्छेदकत्वानां तादृशाभावप्रतियोगितावच्छेदकत्ववत्वेनाभावज्ञानासम्भवादित्यर्थः(१)।

'प्रातिस्विकरूपेण' तत्तदभावप्रतियोगितावच्छेदकत्ववत्वेन। 'रूपान्तरेण' येन केनचिद् रूपेण(छ)। तथा च कपिसंयोगी एतद्वृक्षत्वादित्यत्र प्रतियोगिव्यधिकरणतादृशा(ज) भावप्रतियोगितावच्छेदकत्ववत्वेन तदभावज्ञानं(झ) हेतुः सम्भवत्येवेति भावः।

इष्टापत्तिवारणाय 'वह्नित्वावच्छिन्नप्रतियोगिताके'त्यादि 'भ्रमेऽपी'त्यन्तम्(२)। उक्तभ्रमकाले तादृशावच्छेदकत्वसामान्याभावस्य दुर्ग्रहत्वात्।

'वह्नित्वानवच्छिन्ने'त्यादि,—'धूमसमानाधिकरणे'ति विशेष्य–विशेषण-भावापन्न-तादृशपदार्थज्ञानार्थमुक्तम्(३)।

## दीधितिः

न च हेतुसमानाधिकरणत्वेन ज्ञायमाना इति वाच्यम्, वह्नित्वे धूमसमानाधिकरणरासभाद्यभावप्रतियोगितावच्छेदकत्वभ्रमेऽपि उक्तरूपेण तथा ग्रहसम्भवात्(ञ)। धूमाधिकरणान्तरानुपस्थितौ वह्नित्वे रासभत्वादौ च तादृशप्रमोत्पादेऽपि रास-

(१) 'ज्ञानासम्भवादिति भाव' इति पाठान्तरम्। (२) 'ज्ञानेऽपीत्यन्तम्' इति पाठान्तरम्। एतन्मते दीधितावपि तथा पाठः। (३) क्वापि 'ज्ञानरक्षार्थमुक्तम्' इति पाठान्तरम्। तत्र 'भ्रमेऽपीत्यन्त'मित्यनन्तरमेव 'धूमसमानाधिकरणेती'त्यादिः, 'उक्त'मित्यन्तः पाठो दृश्यते।

(च) सामान्यघटितविशेषवत्तानिर्णये सामान्याभाववत्ताज्ञानप्रतिबन्धकत्वस्यानुभवानुरोधेन क्लृप्तत्वादिति भावः।

(छ) 'रूपेणे'त्यत्र हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्ववत्त्वघटितेनेत्यादिः। तेन मेयत्वादिना तद्ग्रहान्नातिप्रसङ्ग इति।

(ज) 'तादृशे'ति हेतुसमानाधिकरणेत्यर्थः।

(झ) 'तदभावज्ञान'मिति तादृशाभावप्रतियोगितावच्छेदकत्वाभावज्ञानमित्यर्थः।

(ञ) 'तथा ग्रहसम्भवा'दिति-तादृशहेतुसमानाधिकरणत्वेन ज्ञायमानप्रतियोगिसमानाधिकरणत्वेनाज्ञायमानयावदभावप्रतियोगितावच्छेदकत्वाभावग्रहसम्भवादित्यर्थः, समानप्रकारकज्ञानस्यैव विरोधित्वादिति भावः। तथा च तत्र सत्यपि तादृशव्यभिचारज्ञाने निरुक्तरूपव्याप्तिज्ञानादनुमित्यापत्तिरिति ग्रन्थतात्पर्य्यम्।

भावेरिव 'वह्नेरप्यननुमानाच्च। एवं वह्नित्वावच्छेदेन शुक्लत्वाभावभ्रमदशायां शुक्लप्रतियोगिका वह्नीतरप्रतियोगिकाश्च ये धूमसमानाधिकरणाभावास्तत्प्रतियोगितानवच्छेदकं वह्नित्वमिति ग्रहेऽपि।

## दीधितिप्रकाशः

'न चेति,—तथाच वह्न्यभावस्यापि हेतुसमानाधिकरणत्वेन ज्ञायमानत्वात् वह्नित्वानवच्छिन्नप्रतियोगिताकत्वेन (१) तदपरिग्रहात् (ट) तत्प्रतियोगितावच्छेदकत्वाभावाज्ञानादेव नानुमितिरिति भावः। 'वह्नित्व' इति,—तथा च वह्न्यभावस्य धूमसमानाधिकरणत्वेनाज्ञानाद् वह्नित्वानवच्छिन्नप्रतियोगिताकत्वेन(२)तादृशनिखिलाभावपरिग्रहः सम्भवत्येवेति भावः। 'उक्तरूपेण' वह्नित्वानवच्छिन्नप्रतियोगिताकधूमसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वत्वेन।

ननु यदा धूमसमानाधिकरणरासभाभावे वह्नित्वावच्छिन्नप्रतियोगिताकत्वभ्रमः तदा ह्रदादिवृत्तिवह्न्यभावस्यापि धूमसामानाधिकरण्यभ्रमे(३) बाधकाभावान्नोक्तरूपेण तादृशाभावग्रह(ठ) इत्यतो दोषान्तरमाह,—'धूमाधिकरणान्तरे'ति। अधिकरणान्तरोपस्थितौ तद्वृत्त्यभावस्यापि(४) हेतुसमानाधिकरणत्वेन ज्ञायमानत्वसम्भवादेतदधिकरणवृत्त्यभावत्वेन तत्परिग्रहाभाव इतीदमुक्तम्(ड)। इत्थञ्च अधिकरणान्तरस्य अभावनिष्ठवृत्तित्वनिरूपकतया अनुपस्थितावित्यर्थः। अधिकरणान्तरवृत्त्यभावस्य धूमसमानाधिकरणत्वेनानुपस्थितावित्युक्ते बाधः; एकस्यैव घटाद्य(५)भावस्य अधिकरणान्तरवृत्तेरस्मिन्नधिकरणे धूमसमानाधिकरणत्वेन ज्ञानादिति इत्थमभिधानम्।

(१) 'कत्वेन च तत्परिग्रहाभावात्' इति पाठान्तरम्। (२) 'प्रतियोगित्वकत्वेन' इति पाठान्तरम्। (३) पुस्तकविशेषे 'धूमसामानाधिकरण्ये'त्यंशो नास्ति। तत्र 'तदा' इत्यतः परं 'धूमाधिकरणे' इति पाठो दृश्यते। (४) पुस्तकविशेषे 'अपि' शब्दो नास्ति। (५) 'घटात्यन्ताभावस्य' इति पाठान्तरम्।

(ट) 'तदपरिग्रहा'दिति-वह्न्यभावापरिग्रहादित्यर्थः।

(ठ) 'उक्तरूपेणे'ति-वह्नित्वानवच्छिन्नप्रतियोगिताकत्वेनेत्यर्थः। 'तादृशाभावग्रह' इति धूमसमानाधिकरणत्वेन ज्ञायमानवह्न्यभावग्रह इत्यर्थः।

(ड) अत्र तत्पदम् अधिकरणान्तरवृत्त्यभावपरम्। इदमिति 'धूमाधिकरणान्तरानुपस्थिताविति दलम्।

अनुमितेरानुभविकत्वाभावं(१) दर्शयति,—'रासभत्वाद्वे'ति । 'तादृश-प्रमोत्पादेऽपि' धूमाधिकरणेतद्(२)वृत्त्यभावप्रतियोगितानवच्छेदकत्वप्रमोत्पादेऽपि । तथा च धूमाधिकरणैतन्महानसनिष्ठाभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नसमानाधिकरणधूमवान् पर्वत इति स्मरणात्मक(३)परामर्शादनुमित्यापत्तिरित्यर्थः । एतेने(४)तदधिकरणे पक्षतासत्त्वे अनुमिताविष्टापत्तिः, अधिकरणान्तरे चानुमित्यापादने पक्षधर्मताज्ञानार्थं तदुपस्थित्यावश्यकत्वे 'अधिकरणान्तरानुपस्थिता'विति विरुद्धम् । सामान्यलक्षणया अधिकरणान्तरवृत्त्यभावस्यापि धूमसमानाधिकरणत्वेनोपस्थितिसम्भवाच्च तद्विरुद्धमित्यादि दूषणमनवकाशम् ।

ननु पर्वतादौ वह्नेः सन्देहा(५)भावदशायामेतन्महानस इवा(६)नुमिताविष्टापत्तिः, सन्देहदशायान्तु हेत्वधिकरणत्वेन ज्ञायमानधर्मिवृत्तित्वेन च वह्न्यभावस्याप्युपस्थितत्वात् तत्प्रतियोगितानवच्छेदकत्वाग्रहान्नैव नानुमितिरत आह,—'एवे'मिति । धूमवति वह्निर्नास्तीति भ्रमदशायामपि वह्न्यभावस्याप्युक्त(७)प्रतियोगिकत्वेनेतरेषान्तु वह्नित्वानवच्छिन्नप्रतियोगिताकत्वेन परिग्रहे धूमसमानाधिकरणत्वेन ज्ञायमानानां यावतामेवा(८)भावानाम् उक्तरूपेण प्रतियोगितानवच्छेदकत्वं वह्नित्वे सुग्रहमिति व्यभिचारज्ञानदशायामप्यनुमित्यापत्तिरित्यर्थः ।

वह्निः शुक्ल इति ज्ञानदशायां शुक्लप्रतियोगिकत्वेन वह्न्यभावस्यापि ज्ञानसम्भवात् तेन रूपेण प्रतियोगितानवच्छेदकत्वं वह्नित्वे दुर्ग्रहमतो 'वह्नित्वावच्छेदेने'ति । यत्किञ्चिद्वह्नौ शुक्लत्वज्ञाने(९) तथैव दोष इत्यवच्छेदकानुसरणम् ।

वह्नौ शुक्लत्वज्ञानदशायामपि वह्नित्वं शुक्लप्रतियोगिकाभावप्रतियोगितावच्छेदकं न वेति संशयसामग्रीसम्भवात्, तत्सत्त्वे च तादृशानवच्छेदकत्वनिर्णया(ढ)सम्भवात् तत्सामग्रीविघटनाय शुक्लत्वाभावभ्रम(ण)पर्यन्तानुधावनम् ।

---

(१) 'भावदर्शनाय' इति पाठान्तरम् । (२) 'धूमसमानाधिकरणैतद्' इति पाठान्तरम् । (३) 'स्मरणात्मकात्' इति पाठान्तरम् । (४) 'एतेन तदधि' इति पाठान्तरम् । (५) 'सन्देहदशाया'मिति क्वचित् पाठः, स च न सङ्गच्छते । (६) 'एवे'ति क्वचित् पाठः, सोऽपि तथैवासङ्गतः । (७) 'भावस्य शुक्लप्रति' इति पाठान्तरम् । (८) आदर्शविशेषे 'एवे'ति नास्ति । (९) 'ज्ञानसत्त्वेऽपि' इति क्वचित् पाठः ।

---

(ढ) 'वह्ना'विति वह्नित्वावच्छिन्न इत्यर्थः । शुक्लत्वज्ञानदशायां शुक्लत्वसन्देहदशायाम् । तत्सत्त्वे संशयसामग्रीसत्त्वे । 'निर्णयासम्भवा'दिति सन्देहसामग्र्याः प्रतिबन्धकत्वादिति भावः ।

(ण) संशयस्यापि भ्रमरूपतया दोषतावच्छेदकतो भ्रमपदमत्र भ्रमभिन्नपरं बोध्यम् ।

'प्रत्येऽपि' वह्नेरनुमानाचेत्यन्वयः। तादृशावच्छेदकत्वानां विशिष्टाभावद्वित्या-वच्छिन्नाभावज्ञानमादायानुमित्यापत्तिर्नोक्ता ; प्रतियोगितावच्छेदकत्वत्वातिरिक्तान-वच्छेद्यप्रतियोगिताकतादृशावच्छेदकत्वाभावज्ञानहेतुत्वोक्तौ तत्परीहारसम्भवात् ; विशिष्टाभावादिस्थले च विशिष्टत्वादेरेव तादृशावच्छेदकत्वादिति।

## दीधितिः

नैवम् ; प्रतियोग्यसमानाधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेद-कत्वग्रहविरोधिग्रहविषयत्वेन तेषाम्, तादृशावच्छेदकत्वग्रहविरोधित्वेन तद्-बुद्धीनां(१) वा अनुगमात्। विरुणद्धि च सामान्याभावबोधोऽपि सामान्यघटित-विशेषवत्ताबुद्धिम्। सत्यां हि घटो नास्तीति बुद्धौ(२) जात्वपि नीलो घटोऽस्तीति बोधानुदयात्। तत् कस्य हेतोः ? तद्विशिष्टप्रतियोगिमत्ता(३)बुद्धिं प्रति तदवच्छिन्न-प्रतियोगिताकाभाव(४)बुद्धेर्विरोधित्वात्। अवगाहते च नीलघटवत्ताबुद्धिरपि घटत्व-विशिष्टतद्वत्ताम्। अत एव अवच्छेदक-तत्त्वयोरन्योन्यात्यन्ताभावयो(५)रुपसंग्रहः। हेत्वाभासे च वक्ष्यमाणा रीति(६)रिहाप्यनुसन्धेया।

## दीधितिप्रकाशः

'तेषाम्' उपदर्शित-द्विविधाभावानाम् (त)। ननु विषयाननुगमस्य तद्विषयक-ज्ञानत्वेन हेतुत्वोक्तौ प्रमेयत्वेन तज्ज्ञानमादायातिप्रसङ्ग(थ) इत्यतो ज्ञानमेवानुगमयति 'तद्बुद्धीनां वे'ति। ननु यदि तादृशावच्छेदकत्वग्रहत्वावच्छिन्नं प्रति(द) विरो-धित्वमुच्यते, तदा हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वबुद्धे(ध)रसंग्रहः,

---

(१) 'तत्तद्बुद्धीनां वा' इति पाठान्तरम्। (२) 'विशिष्टबुद्धौ' इति पाठान्तरम्।
(३) 'मत्त्व' इति पाठान्तरम्। (४) 'तदवच्छिन्नाभाव' इति पाठान्तरम्।
(५) 'भावबोधयो'रिति पाठान्तरम्। (६) वक्ष्यमाणरीतीति पाठान्तरम्।

---

(त) प्रतियोगितानवच्छेदकत्वस्यात्यन्तान्योन्याभावभेदेनाभावस्य द्वैविध्येऽपि प्रत्येकं पुनः प्रतियोग्यसामानाधिकरण्यघटितावटितभेदेन द्वैविध्यात् सम्भूय बहुत्वोपपत्तिः।

(थ) प्रमेयवत् साध्यतावच्छेदकमिति ज्ञानादनुमित्यापत्तिरित्यर्थः।

(द) 'तादृशावच्छेदकत्वग्रहत्वावच्छिन्नं प्रती'त्यस्य प्रतियोग्यसमानाधिकरणहेतु-समानाधिकरणाभावप्रतियोगितावच्छेदकत्वत्वावच्छिन्नप्रकारकग्रहत्वावच्छिन्नं प्रतीत्यर्थः।

(ध) 'हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वबुद्धे'रिति,—अभावांशे प्रतियोग्य-सामानाधिकरण्याविषयकतादृशज्ञानस्येत्यर्थः।

प्रतियोग्यसामानाधिकरण्यघटिततादृशग्रहत्वस्य तत्प्रतिबध्यतानवच्छेदकत्वात् (न)। अथ यत्किञ्चिद्रूपावच्छिन्न-तादृशग्रहं(१) प्रति विरोधित्वम् (प), तदा वह्नित्वं तादृशावच्छेदकं घटत्वञ्चेति समूहालम्बनविरोधिनि घटाभाववद् वह्नित्वमिति ज्ञाने अतिप्रसङ्ग इति चेत्, मैवम्; वह्नित्वविशेष्यकतादृशावच्छेदकत्वप्रकारकग्रहत्व-घटकीभूत-(फ)विषयितावच्छिन्नप्रतिबध्यतानिरूपितविरोधित्वस्योक्तत्वात्। भवति हि प्रतियोग्यसमानाधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारक-वह्नित्वविशेष्यकग्रहत्वघटकं हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारक-वह्नित्वविशेष्यकग्रहत्वं, न तु घटप्रकारकवह्नित्वविशेष्यकत्वमिति नोक्तदोषः(ब)।

(१) आदर्शविशेषे 'तादृशग्रह' इत्यंशो नास्ति। तत्र 'च्छिन्न'मिति पाठः।

(न) 'तत्प्रतिबध्यतानवच्छेदकत्वा'दित्यस्य अभावांशे प्रतियोग्यसामानाधिकरण्या-विषयकतादृशानवच्छेदकत्वबुद्धिप्रतिबध्यतानवच्छेदकत्वादित्यर्थः। प्रतियोग्यसामानाधिकरण्य-घटिततादृशग्रहत्वस्य तादृशबुद्धिप्रतिबध्यतावच्छेदकत्वस्वीकारे हेतुसमानाधिकरणाभाव-प्रतियोगितानवच्छेदकं साध्यतावच्छेदकमिति ज्ञानदशायां बाधकाभावेन प्रतियोग्य-सामाधिकरण्यमविषयीकृत्य तादृशाभावप्रतियोगितावच्छेदकं साध्यतावच्छेदकमिति व्यभिचार-ज्ञानसम्भवात् तत्सत्त्वेऽपि प्रकृतसाध्यानुमित्यापत्तिरिति भावः।

(प) 'विरोधित्व'मित्यन्तस्य प्रतियोग्यसमानाधिकरणहेतुसमानाधिकरणाभावप्रतियोगि-तावच्छेदकत्वप्रकारनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकत्वमित्यर्थः, अवच्छेदकतया यत्किञ्चिद्रूप-प्रवेशस्य प्रकृतेऽनुपयोगात्।

(फ) 'विषयितावच्छिन्ने'त्यस्य तादृशविषयिताशालिग्रहत्वपर्य्याप्तावच्छेदकताकेत्यर्थः। तेन धूमसमानाधिकरणवह्न्यभावेतराभावप्रतियोगितावच्छेदकत्वविषयकग्रहत्वाद्यवच्छिन्नप्रति-बध्यतामादाय नातिप्रसङ्गः। न च अनाहार्य्यत्वादेरप्यधिकस्य प्रतिबध्यतावच्छेदककोटिप्रविष्ट-तया तादृशप्रतिबध्यताया अप्रसिद्धिरिति वाच्यम्; अनाहार्य्यत्वादिविशेषणविशिष्ट-तादृश-ग्रहत्वपर्य्याप्तेरेव निवेश्यत्वात्।

(ब) प्रतियोग्यसमानाधिकरण-हेतुसमानाधिकरणाभाव-प्रतियोगितावच्छेदकत्वप्रकारक-वह्नित्व-विशेष्यकग्रहत्वस्य हेतुसमानाधिकरणाभाव-प्रतियोगितावच्छेदकत्वप्रकारक-ग्रहत्वा-विषयकप्रतीत्यविषयत्वेन तत्र स्वाविषयकप्रतीत्यविषयतत्त्वकत्वलक्षणस्य तद्घटकत्वस्य सुसमन्वयादिति। घटप्रकारकवह्नित्वविशेष्यकत्वमविषयीकृत्यापि निरुक्तग्रहत्वस्य प्रतीतेः न तत्र तद्घटकत्वमिति भावः। 'नोक्तदोष' इति—न घटाभाववद्वह्नित्वमिति ज्ञाने अतिप्रसङ्ग-रूपदोष इत्यर्थः।

द्रव्यं नास्तीति ज्ञानेऽपि नीलघटवदिति ज्ञानोदयादाह,—'सामान्यघटिते'ति। सामान्यघटिता या विशेषवत्ता तद्बुद्धिमित्यर्थः(१)। सामान्यस्य घटकत्वं(२) प्रतियोगितया(भ), तेन द्रव्यं नास्तीति ज्ञानेऽपि द्रव्यवृत्तित्वविशिष्टघटोऽस्तीति बोधे नानुपपत्तिः(म)। तदेवानुभवेन द्रढयति :—'सत्यां ही'ति। नीलो घटोऽस्तीति ज्ञाने नीलो नास्ति घटो नास्ति नीलघटो नास्तीति(३) त्रितयमपि ग्राह्याभावावगाहितया विरोधीति(य) भावः।

पृच्छति,—'तत् कस्ये'ति। उत्तरयति,—'तद्विशिष्टे'ति। प्रतियोगितावच्छेदकता(र)घटकसम्बन्धेन तद्विशिष्टत्वं प्रापयितुं(४) 'प्रतियोगी'ति। 'अत एव' तादृशग्रहविरोधित्वेन हेतुत्वादेव। 'अन्योन्ये'ति,—न चैवमवच्छेदकत्वाभावादिव्याप्यबोधस्याप्युपसंग्रह इति वाच्यम्; तादृशावच्छेदकत्वप्रकारकग्रहत्वघटकीभूतविषयितानिरूपकधर्मावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन यत्किञ्चित्प्रकारतानिरूपिताभावप्रकारतानिरूपितसाध्यतावच्छेदकनिष्ठविशेष्यताशालिग्रहत्वेन प्रतिबन्धकत्वस्य विवक्षणात्। भवति हि तादृशविषयितानिरूपको धर्मस्तादृशावच्छेदकत्वं(५)

(१) 'तद्बुद्धिरित्यर्थः' इति क्वचित् पाठः। (२) 'सामान्यघटितत्वञ्च' इति क्वचित् पाठः। (३) 'नीलं नास्ति नीलो घटो नास्ति घटो नास्तीति' इति पाठान्तरम्। (४) 'प्रत्माययितुम्' इति पाठान्तरम्। (५) क्वचित् 'तादृशावच्छेदकत्वत्वं तादृशावच्छेदकत्वञ्चेति' इति व्युत्क्रमेण पाठो दृश्यते।

(भ) प्रतियोगितयेत्यस्य वैशिष्ट्यप्रतियोगितयेत्यर्थः।

(म) षष्ठीसप्तम्यारर्थं प्रति भेदो नास्तीति न्यायेन 'बोधे' इत्यस्य बोधस्येत्यर्थः। नानुपपत्तिरिति,—द्रव्यवृत्तित्वविशिष्टघटवत्तायां वैशिष्ट्यप्रतियोगितया द्रव्यत्वावच्छिन्नरूपसामान्यस्य घटकत्वाभावेन निरुक्तद्रव्यत्वावच्छिन्नसामान्याभाववत्ताबुद्धिप्रतिबन्धकतानिरूपितप्रतिबध्यत्वाभावादिति भावः।

(य) नीलो नास्ति घटो नास्ति नीलघटो नास्तीत्यादिबुद्धीनां प्रतिबध्यतावच्छेदककोटौ प्रकारतावच्छेदकताया इतरवारकपर्याप्तिर्न निवेश्यते। तथा च नीलो नास्तीति बुद्धेः नीलत्वावच्छिन्नप्रकारकबुद्धिं प्रति घटो नास्तीति बुद्धेः घटत्वावच्छिन्नप्रकारकबुद्धिं प्रति नीलघटो नास्तीति बुद्धेश्च नीलघटत्वावच्छिन्नप्रकारकबुद्धिं प्रति क्लृप्तप्रतिबन्धकत्वेन नीलघटवत्ताबुद्धेस्तादृशतादृशबुद्धिषु विरोधित्वाभिधानं सङ्गच्छते।

(र) प्रतिबध्यतावच्छेदककोटौ तादृशसम्बन्धेन वैशिष्ट्यानिवेशे समवायसम्बन्धेन घटत्ववतः संयोगेनाभावनिश्चयदशायां कालिकेन घटत्ववतोऽपि संयोगेन ज्ञानानुपपत्तिः। एवमन्यत्राप्यूह्यम्।

तादृशावच्छेदकत्वत्वञ्चेति तदवच्छिन्नान्योन्याभावात्यन्ताभावबोधग्रहः(१)। व्याप्य-वत्त्वदर्शनस्थले(ल) तु(२) तादृशाभावप्रकारतानिरूपिता न साध्यतावच्छेदकनिष्ठा(३) विशेष्यता, किन्तु तद्व्याप्यप्रकारतानिरूपितेति नातिप्रसङ्गः(व)।

यत्तु साध्यतावच्छेदकनिष्ठविशेष्यतानिरूपितं यदभावप्रकारकत्वं(श)प्रतियोगि-तान्यसम्बन्धेन यत्किञ्चित्प्रकारकत्वानवच्छिन्नतदवच्छिन्नप्रतिबन्धकत्वविवक्षणात् तदभावव्याप्यनिरासः(ष)। तत्र हि प्रतियोगितान्यसम्बन्धेन व्याप्तिप्रकारकत्वा-वच्छिन्नस्यैव व्याप्यप्रकारकत्वस्य(४) साध्यतावच्छेदकनिष्ठविशेष्यतानिरूपितस्य प्रति-बन्धकतावच्छेदकत्वादिति। तदसत्; तादृशावच्छेदकत्वव्यापकाभाववद् वह्नित्व-मिति ग्रहे(५) अतिप्रसङ्गादिति(A)।

ननु प्रतियोग्यसमानाधिकरणधूमसमानाधिकरणाभावप्रतियोगितानवच्छेदक-वह्नित्वेन साध्यतायां तादृशसाध्यतावच्छेदकविशेष्यकप्रतियोग्यसमानाधिकरणहेतु-समानाधिकरणाभावप्रतियोगितावच्छेदकत्वभ्रमा(६)प्रसिद्ध्या(स) कथं तद्विरोधित्वेन

---

(१) क्वचित् 'तदवच्छिन्नात्यन्ताभावान्योन्याभावे'ति व्युत्क्रमेण निर्देशः, 'बोधग्रह'.इति च पाठः। (२) 'स्थले च' इति पाठान्तरम्। (३) 'निष्ठविशेष्यता' इति पाठान्तरम्। (४) आदर्शविशेषे 'व्याप्य' इति नास्ति। (५) 'ग्रहातिप्रसङ्गादिति' 'ग्रहादतिप्रसङ्गादि'ति च पाठान्तरे। (६) 'भ्रमासिद्ध्या' इति पाठान्तरम्।

(ल) 'व्याप्यवत्त्वदर्शनस्थले' इति—तादृशावच्छेदकत्वाभावव्याप्यवत् साध्यतावच्छेदक-मित्यादिज्ञानस्थल इत्यर्थः।

(व) 'नातिप्रसङ्ग' इति —न तादृशव्याप्यदर्शनादनुमितिप्रसङ्ग इत्यर्थः।

(श) अत्र 'अभावे'ति प्रकृताभिप्रायमात्रेण, न तु तस्य विवक्षितत्वमपि, व्याप्य-प्रकारकज्ञानस्य प्रतियोगितान्यसम्बन्धेनेत्याद्युत्तरांशेनैव वारणात्।

(ष) 'तदभावव्याप्यनिरास' इति, तादृशव्याप्यवत्त्वबोधनिरास इत्यर्थः।

(A) अत्राभावप्रकारकत्वस्य प्रतियोगितासम्बन्धेनैव व्यापकत्वावच्छिन्नप्रकारकत्वा-वच्छिन्नस्य तथाविधस्य प्रतिबन्धकतावच्छेदकत्वादिति भावः।

(स) 'भ्रमाप्रसिद्ध्ये'ति,—अनाहार्यभ्रमात्मकनिश्चयाप्रसिद्ध्येत्यर्थः। आहार्यतादृश-भ्रमस्य प्रसिद्धत्वेऽपि तस्य प्रकृतविरोधित्वाभावेनाकिञ्चित्करत्वादिति भावः।

तादृशज्ञानद्वयानुगमं(ह) इत्यत आह,—हेत्वाभासे चे'ति। (१)तादृशाहार्यज्ञानस्य प्रसिद्धत्वात् २) तद्विषयविषयकग्रहविरोधित्वेनानुगम इति भावः।

न च वह्नित्वं तादृशप्रतियोगितावच्छेदकमिति ज्ञानं तद्विषयविषयकम्, तद्विरोधि च वह्नित्वं तादृशप्रतियोगितानवच्छेदकमित्यपि ज्ञानम् भवतीति(३) ततोऽपि तादृशप्रतियोगितानवच्छेदकवह्नित्ववत्वानि(४)त्यनुमित्यापत्तिरिति वाच्यम्; तादृशसाध्यतावच्छेदकविशेष्यकं(क्ष) यद्विरोधिज्ञानं तत्त्वेन हेतुत्वविवक्षणात्(५)।

## दीधितिः

यदि च साध्यतावच्छेदकस्य अभावप्रतियोगितानवच्छेदकत्वादिग्रहान्नानुमितिः, तदा तादृशावच्छेदकत्वग्रहाविरोधित्वेन विशेषणीयम्। अन्योन्याभावस्य अव्याप्यवृत्तितापक्षे तु सुतरां विशेषणदानमिति सत्यम्, तथापि अन्योन्याभावे प्रतियोग्यवृत्तित्वस्यैव विशेषणत्वम्, न च प्रतियोगितावच्छेदकसम्बन्धभेदानुधावनमतो लाघवमिति यथाश्रुतग्रन्थानुरोधिनः।

## दीधितिप्रकाशः

नन्वेवं(अ) वह्नित्वमभावप्रतियोगितानवच्छेदकमित्यादिग्रहस्यापि तादृशग्रहविरोधित्वात् ततोऽप्यनुमितिः स्यादत(६) आह,—'यदि चे'ति। आदिना समानाधिकरणाभावप्रतियोगितानवच्छेदकमित्यादिज्ञान(७) संग्रहः।

(१) 'तादृशस्य' इति पाठान्तरम्। (२) 'ज्ञानस्य सिद्धत्वात्' इति पाठान्तरम्। (३) 'सम्भवतीति' इति पाठान्तरम्। (४) 'वह्नित्वावच्छिन्नवान्' इति पाठान्तरम्। (५) 'हेतुत्वस्य' इति पाठान्तरम्। (६) 'स्यादिति अत' इति पाठान्तरम्। (७) 'च्छेदकत्वसंग्रह' इति पाठान्तरम्।

---

(ह) 'तादृशज्ञानद्वये'ति अभावांशे प्रतियोगिसामानाधिकरण्यघटितप्रकृतप्रतियोगितानवच्छेदकत्वप्रकारकसाध्यतावच्छेदकधर्मिकग्रहस्य तथा अभावांशे तदघटितप्रकृतप्रतियोगितानवच्छेदकत्वप्रकारकसाध्यतावच्छेदकधर्मिकग्रहस्येत्यर्थः।

(क्ष) 'तादृशसाध्यतावच्छेदकविशेष्यक'मिति,-साध्यतावच्छेदकतापर्याप्त्यधिकरणपर्याप्तविशेष्यताकमित्यर्थः। यथाश्रुते विशिष्टस्य केवलादनतिरिक्तत्वेन निरुक्तज्ञानादनुमित्यापत्तेः प्रतिकर्त्तुमशक्यत्वादिति भावः।

(अ) 'एव'मिति,—निरुक्तरूपेणानुगतस्य ज्ञानस्यानुमितिहेतुत्वे।

वस्तुतस्तादृशग्रहादनुमितिर्भवत्येव। अत एव केवलान्वयि-(१) सम्बन्ध-(आ), ज्ञानादेवानुमितिरेकदेशिनां सम्मतेत्याशयेन 'यदि चे'त्युक्तम्। 'तादृशावच्छेदकत्वे'ति,—समानाधिकरणाभावप्रतियोगितावच्छेदकत्वग्रहाविरोधित्वमित्यर्थः। तेन अभावप्रतियोगितानवच्छेदकत्व — वृत्तिमदभावप्रतियोगितानवच्छेदकत्वादीनामपि ग्रहस्य(२) निरासः(इ)।

न चैवं वह्नित्वमभावप्रतियोगितानवच्छेदकं धूमसमानाधिकरणाभावप्रतियोगितानवच्छेदकञ्चेति समूहालम्बनात्मक-ग्रहस्यासंग्रह इति वाच्यम्; समानाधिकरणाभावप्रतियोगितावच्छेदकत्वग्रहविरोधितानवच्छेदकं सत् यत् प्रतियोग्यसमानाधिकरणतादृशाभाव-प्रतियोगितावच्छेदकत्वग्रहविरोधितावच्छेदकं तदवच्छिन्न-(त्व)स्योक्तसमूहालम्बनसाधारण्यात्।

नन्वेवमपि वह्नित्वं धूमसमानाधिकरणाभावप्रतियोगितानवच्छेदकं वह्निसमानाधिकरणधूमवानिति समूहालम्बनज्ञानादप्यनुमितिः स्यादिति वाच्यम्; तादृशविरोधितावच्छेदकीभूता या वह्नित्वस्य विषयता(३), तन्निरूप्या या वह्निविषयता,

(१) 'केवलान्वयिनि' इति पाठान्तरम्। (२) पुस्तकविशेषे 'ग्रहस्य' इति नास्ति। (३) कुत्रचित् 'विषयता' इति स्थाने त्रिष्वेव स्थलेषु 'विषयिता' इति पाठो दृश्यते।

(आ) 'केवलान्वयी'त्यादिकस्य अभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यज्ञानादेवेत्यर्थः।

(इ) 'निरास' इति,—सर्वस्यैव निरुक्तज्ञानस्य समानाधिकरणाभावप्रतियोगितावच्छेदकत्वग्रहविरोधित्वात्। सामान्यघटितविशेषवत्ताबुद्धौ सामान्याभावबुद्धेः प्रतिबन्धकत्वस्य प्रागेव दर्शितत्वात्।

नन्वत्र कल्पे धूमसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वादिग्रहस्य कथं संग्रहः, तस्य समानाधिकरणाभावप्रतियोगितावच्छेदकत्वग्रहात्मक-धूमघटिततादृशप्रतियोगितावच्छेदकत्वग्रहविरोधित्वात्। न च समानाधिकरणाभावप्रतियोगितावच्छेदकत्वत्वपर्याप्तावच्छेदकताकप्रकारत्वावच्छिन्नप्रतिबध्यतानिवेशे निस्तारः, तथा सति अभावप्रतियोगितानवच्छेदकत्वादिबुद्धीनां वारणासम्भवात् तादृशतादृशबुद्धिप्रतिबध्यतायाः सामानाधिकरण्याद्यविषयकज्ञानसाधारणतया तादृशावच्छेदकत्वत्वपर्याप्तावच्छेदकताकप्रकारत्वानवच्छिन्नत्वादिति चेत्, सत्यं अधिकरणांशे प्रकृतहेतुत्वप्रकारकत्वस्य प्रतिबध्यग्रहविशेषणत्वेन दोषनिरासात्।

तन्निरूपिता या सामानाधिकरण्यविषयता, तन्निरूपितं यत् पक्षे हेतुमत्त्वावगाहित्वम्, तेन रूपेण हेतुत्वस्योक्तत्वात्(ई)। समूहालम्बने तु(१)तादृशानवच्छेदकवह्नित्वविषयता-निरूपिता(२) न वह्नेः सामानाधिकरण्यप्रतियोगित्वेन(३) विषयतेति नातिप्रसङ्गः।

'सुतरा'मिति,—अन्योन्याभावस्य व्याप्यवृत्तित्वे कारणीभूतज्ञानानुगमाय तद्(उ) विषयतावच्छेदक एव विशेषणम्, न तु व्याप्तिलक्षणे(४) अव्यावर्त्तकत्वात्। अव्याप्यवृत्तित्वे तु अव्याप्तिवारणाय व्याप्तिलक्षणेऽपि तद् विशेषणमिति भावः। 'तथापि' तादृशान्योन्याभावे विशेषणान्तरप्रक्षेपेऽपि(५)। 'प्रतियोग्यवृत्तित्वस्यैवे'ति,-अत्यन्ताभावे तु प्रतियोगितावच्छेदकावच्छिन्नान(६)धिकरणवृत्तित्वं विशेषणमिति। तत्राधिकरणांशस्य अवच्छेदकांशस्य च(७) प्रवेशाद् गौरवमिति भावः(८)।

लाघवान्तरमाह 'न चे'ति। साध्यवतः सम्बन्धान्तरेण हेतुमन्निष्ठान्योन्या-भावप्रतियोगित्वाभावादन्योन्याभावस्य तादात्म्यातिरिक्तसम्बन्धावच्छिन्नप्रतियोगिता-कत्वाभावादिति भावः।

न च(ऊ)समवायेन वह्निमद्भेदस्य धूमसमानाधिकरणत्वात् साध्यतावच्छेदक-सम्बन्धेन प्रतियोगितावच्छेदकत्वस्य अभावविवक्षावश्यकत्वे कथमेतदिति

(१) क्वचित् 'तु' इत्यत्र 'च' इति पाठः। (२) पुस्तकविशेषे 'निरूपिते'ति नास्ति। (३) 'प्रतियोगितया' इति पाठान्तरम्। (४) पुस्तकविशेषे 'व्याप्ति' इति नास्ति। (५) 'प्रवेशेऽपि' इति क्वचित् पाठः। (६) 'च्छिन्नाधिकरणावृत्तित्वम्' इति क्वचित् पाठः। (७) 'तत्रावच्छेदकांशस्याधिकरणांशस्य च' इति क्वचित् पाठः। (८) 'मित्यर्थ' इति क्वचित् पाठः।

(ई) तथा हि प्रकृतसमूहालम्बनज्ञाने वह्नित्वस्य विषयताद्वयी, तत्र एका तादृशप्रतियोगिता-नवच्छेदकत्वप्रकारतानिरूपितविशेष्यतारूपा, अपरा च वह्निप्रकारतानिरूपितावच्छेदकतारूपा, तयोश्च या विशेष्यतारूपा, सैव प्रकृते विरोधितावच्छेदिका, नहि तया समं निरुक्तसमूहालम्बन-ज्ञाने सामानाधिकरण्यविषयतानिरूपितवह्निविषयताया निरूप्यनिरूपकभाव इति न प्रकृत-समूहालम्बनस्य निरुक्तकारणतावच्छेदकधर्माक्रान्तत्वमिति भावः। तदेव स्वयमग्रतः समासेनाह भवानन्दः 'समूहालम्बने त्वि'त्यादिना।

(उ) 'तदि'ति प्रतियोगिवैयधिकरण्यमित्यर्थः। उत्तरत्रापि तदित्यस्य स एवार्थः।

(ऊ) 'न चे'त्यादिसन्दर्भे समवायेनेत्यादौ सर्वत्र सम्बन्धवाचकपदोत्तरतृतीयाया अव-च्छिन्नत्वमर्थः। तस्य समवायेनेत्यत्र वह्निमद्भेदपदोपस्थाप्यवह्निनिष्ठप्रतियोगितावच्छेदकतायां साध्यतावच्छेदकसम्बन्धेनेत्यत्र च प्रतियोगितावच्छेदकत्वपदोपस्थाप्यप्रतियोगितावच्छेदकताया-मन्वयः।

वाच्यम्; तथापि विषयित्यादिना वह्नित्वस्यापि तादृशात्यन्ताभावप्रतियोगितावच्छेदकतया साध्यतावच्छेदकताघटकसम्बन्धेन तादृशावच्छेदकत्वस्याभावविवक्षावश्यकत्वे(१), साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्यापि प्रतियोगितायां(ऋ) निवेशेन(२) गौरवादिति। 'यथाश्रुते'ति,—अत्यन्ताभावगर्भायामपि निष्कृष्टायां विशेषणताविशेषादिगर्भायां प्रतियोगिव्यधिकरणत्वादेरप्रवेशात्(३) कुतो लाघवमिति।

## दीधितिः

अपरे तु अन्योन्यात्यन्ताभावगर्भव्याप्त्योरेकतराग्रहेऽपि अन्यतरज्ञानादनुमितेरानुभविकत्वात् तदुभयज्ञानमेव हेतुः, इन्द्रियसंयोगादिवच्च(ऌ) विशिष्यैव कार्य्यकारणभावान्न व्यभिचारः।

---

(१) क्वचित् 'कत्वेन' इति पाठः। (२) 'विशेषणेन' इति क्वचित् पाठः, क्वचिच्च 'निवेशने' इति। (३) 'रनिवेशात्' इति पाठान्तरम्।

---

(ऋ) न च साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नस्य तादृशावच्छेदकत्वस्य अभावविवक्षायां वह्नित्वप्रतियोगिकसमवायादिसम्बन्धेन वह्नित्वादि-साध्यतावच्छेदककस्थले अप्रसिद्धिरिति वाच्यम्, साध्यतावच्छेदकताविशिष्टान्य-तादृशावच्छेदकताया अभावे तात्पर्य्यात्। वैशिष्ट्यञ्च स्वानवच्छेदकसम्बन्धावच्छिन्नत्व-स्वसामानाधिकरण्यैतदुभयसम्बन्धेन। अथवा साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकत्वीय - स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकस्तादृशावच्छेदकत्वाभावो विवक्षित इति न दोषः।

वृत्त्यनियामकसम्बन्धावच्छिन्न-प्रतियोगिताया अस्वीकर्त्तृमते वृत्त्यनियामकसम्बन्धेन साध्यतास्थले प्रतियोगितायाः साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वाप्रसिद्धिनिबन्धनो दोषस्तु निष्कर्षे प्रतियोगितायां सम्बन्धावच्छिन्नत्वमनिवेश्य साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यसम्बन्धित्वस्य हेत्वधिकरणे निवेशेन वार्य्यते, तथा निवेशेनैव प्रतियोगितायां साध्यताघटकसम्बन्धावच्छिन्नत्वनिवेशवार्य्यस्य दोषस्य निरासात्।

(ऌ) 'इन्द्रिये'त्यादि,—तथा हि यथा द्रव्यप्रत्यक्षत्वावच्छिन्नं प्रति चक्षुःसंयोगादेर्व्यभिचारे सत्यपि द्रव्यचाक्षुषत्वावच्छिन्नं प्रति व्यभिचाराभावात् द्रव्यचाक्षुषत्वाद्यवच्छिन्नं प्रति चक्षुःसंयोगत्वादिना कारणत्वम्, तथैव अनुमितित्वावच्छिन्नं प्रति अत्यन्तान्योन्याभावघटितैकैकव्याप्तिज्ञानस्य व्यभिचारे सत्यपि अत्यन्ताभावघटितव्याप्तिज्ञानाव्यवहितोत्तरानुमितित्वावच्छिन्नं प्रति तत्तद्व्यक्तित्वावच्छिन्नं प्रति वा अत्यन्ताभावघटितव्याप्तिज्ञानस्य, तथा अन्योन्याभावघटितव्याप्तिज्ञानाव्यवहितोत्तरानुमितित्वावच्छिन्नं प्रति तत्तद्व्यक्तित्वावच्छिन्नं प्रति वा अन्योन्याभावघटितव्याप्तिज्ञानस्य कार्य्यतावच्छेदकसङ्कोचेन व्यभिचाराभावात् कारणत्वं निराबाधम् इति भावः। तदेवाह प्रकाशकारः 'अव्यवहितोत्तरत्वघटित' मित्यादिना।

## दीधितिप्रकाशः

'अपरे त्वि'त्यारभ्य 'वदन्ती'त्यन्तमेकं मतम्। 'आनुभविकत्वा'दिति,—तथा च प्रामाणिकं गौरवं न दोषायेति भावः। 'इन्द्रिये'ति,—अव्यवहितोत्तरत्वघटितं तत्तद्व्यक्तित्वमेव(ल) वा कार्य्यतावच्छेदकमिति भावः।

## दीधितिः

यत्तु यद्रूपावच्छिन्नप्रतियोगिताकत्वेनोपस्थितोऽभावो धर्म्मिणि गृह्यमाणः साध्यवत्ताबुद्धिं विरुणद्धि, तद्रूपावच्छिन्नप्रतियोगिताकाभावसामानाधिकरण्याव-गाहिनो ग्रहस्य विरोधित्वेन व्याप्तिबुद्ध्योऽनुगमनीयाः। प्रतिबध्नीतश्च साध्यतद्व(१)-दत्यन्तान्योन्याभावग्रहौ साध्यवत्ताबुद्धिम्। केवलान्वयिस्थले च भ्रमरूपस्यैव तद्ग्रहस्य कथञ्चित् प्रसिद्धिरिति। तच्चिन्त्यम्।

साध्यतावच्छेदके साधनसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेद-कत्वावगाही साध्यतावच्छेदकावच्छिन्नसाध्यवत्त्वे च साधनसमानाधिकरणान्यो-न्याभावप्रतियोगितावच्छेदकत्वावगाही यो ग्रहस्तद्विरोधित्वम्, साध्याभाववद्-वृत्तित्व—साध्यवदन्यवृत्तित्वोभयावगाहिग्रहविरोधित्वादिकं वा अनुगमकं वाच्यम्। केवलान्वयिस्थले(२) प्रसिद्धिः पूर्ववत्।

## दीधितिप्रकाशः

'यत्तु यद्रूपावच्छिन्ने'ति पाठः, अग्रे च 'विरोधित्वेने'त्यनन्तरं वाकारशून्य-पाठः। 'यद्रूपम्' साध्यतावच्छेदकं तदवच्छिन्नसाध्यवत्त्वञ्च। तेन साध्यतावच्छे-दकावच्छिन्नसाध्यात्यन्ताभाव-तादृशसाध्यवदन्योन्याभावयोरुपसंग्रहः।

'व्याप्तिबुद्ध्यः' अन्योन्यात्यन्ता(३)भावघटितव्याप्तिबुद्ध्यः। 'साध्ये'ति साध्य-तद्वतोर्यथासंख्यमन्वयः(व)। 'तद्ग्रहस्य' तादृशसामानाधिकरण्यावगाहिग्रहस्य। 'कथञ्चिदि'ति,-अत्यन्ताभावे अन्योन्याभावे च साध्यस्य साध्यवतस्तादृशप्रतियोगिता-

(१) 'तद्वतोरत्यन्ते'ति क्वचित् पाठः। (२) पुस्तकविशेषे 'केवलान्वयिस्थले' इति नास्ति। क्वचित् 'केवलान्वयिनि' इति। (३) 'अत्यन्तान्योन्याभाव' इति पाठान्तरम्।

(ल) स्वत्वघटितस्याव्यवहितोत्तरत्वस्य तत्तद्व्यक्तित्वस्य च तुल्यतया, अननुगतत्वेऽपि लघुशरीरमननुगतं कार्य्यतावच्छेदकमभिप्रेत्याह 'तत्तद्व्यक्तित्वमेव वे'ति।

(व) 'अन्वय' इति—अत्यन्तान्योन्याभावयोरिति शेषः।

सम्बन्धेनारोपेणेत्यर्थः। व्यतिरेकिणि तादृशसाध्या(१)भावसामानाधिकरण्यावगाहि ज्ञानं(ऐ) प्रमारूपमपि प्रसिद्धमस्त्येव, प्रकृते हेतौ परं तद्भ्रमः। केवलान्वयिनि तु तादृशसामानाधिकरण्यावगाहि ज्ञानमपि प्रमारूपं(२) न सम्भवतीति(ओ) इदमुक्तमिति भावः। 'तच्चिन्त्य'मिति,—चिन्ताबीजञ्च;—यत्त्वतत्त्वयोरननुगमा-न्नोक्तरूपेण उभयोरनुगमः। एवञ्च साध्यभेद-साध्यवदत्यन्ताभावासामानाधि-करण्यग्रहे अतिप्रसङ्गः(औ)।

न च साध्यवत्त्वग्रहविरोधिग्रहविषयतावच्छेदकरूपेण सामानाधि(३)करण्याव-गाहि यज्ज्ञानं तद्विरोधित्वं वक्तव्यम्। प्रागुक्तरीत्या च व्याप्त्यादिव्यावृत्तं(४) विरो-धित्वादिकं(क) निर्वाच्यमिति(५) वाच्यम्; एवमपि(६) हेतुसमानाधिकरणात्यन्ता-भावप्रतियोगितानवच्छेदकत्वादिग्रहस्य भिन्नप्रकारकतया साध्यात्यन्ताभाववद्-वृत्तित्वादिग्रहं प्रति विरोधित्वासम्भवान्नोक्तानुगमः सम्यगिति। अत एव विषयानुगमपूर्वकं ज्ञानानुगमं परित्यज्य तादृश-व्यभिचारज्ञानमेवानुगमय्य व्याप्ति-ज्ञानमनुगमयति,–'साध्यतावच्छेदक' इत्यादिना। 'यो ग्रह' इति,–तथा च तादृश-समूहालम्बनरूपग्रहविरोधित्वेनानुगम इति भावः।

अत्यन्ताभावघटितानां मध्ये साध्यात्यन्ताभाववदवृत्तित्वज्ञानस्यैव अन्योन्या-भावघटितानां मध्ये च साध्यवदन्यावृत्तित्वज्ञानस्यैव लाघवाद्धेतुत्वमिति केवलान्वयिखण्डने स्वयंवक्ष्यमाणमतमनुसृत्याह(७),—'साध्याभाववदवृत्तित्वे'ति।

(१) 'साध्याद्यभाव' इति पाठान्तरम्। (२) 'प्रमात्मकम्' इति क्वचित् पाठः। (३) 'तत्सामानाधि'इति क्वचित् पाठः। (४) 'व्याप्त्यादिव्यावृत्तं विरोधित्वादिकञ्च' इति क्वचित्। (५) 'निर्वचनीयम्' इति क्वचित्, क्वचिच्च 'इति वाच्यम्' इति नास्ति। (६) क्वचित् 'अपि' शब्दशून्यः पाठः। (७) 'स्मृत्याह' इति पाठान्तरम्।

(ऐ) 'ज्ञान'मिति—साध्याभावसमानाधिकरणपदार्थधर्मिकमिति शेषः।

(ओ) 'न सम्भवती'ति—तादृशसामानाधिकरण्यरूपप्रकारघटकसाध्याभावस्यैवाप्रसिद्धे-रिति भावः।

(औ) 'अतिप्रसङ्ग' इति —साध्यभेदस्य साध्यवदत्यन्ताभावस्य च निरुक्तसाध्यवत्ताग्रह-विरोधितावच्छेदकरूपावच्छिन्नाभावत्वसम्भवात् तत्सामानाधिकरण्यग्रहविरोधिनः साध्यभेदा-सामानाधिकरण्य-साध्यवदत्यन्ताभावासामानाधिकरण्यस्य वा ज्ञानादनुमित्यापत्तिरिति भावः।

(क) अन्यथा तादृशतादृशसामानाधिकरण्याभावव्याप्यवत्त्वादिज्ञानादप्यनुमित्यापत्ते-रिति भावः।

केवलत्वघटिते साध्याभावाद्य(१)प्रसिद्ध्या कथं तद्ग्रह इत्यतः 'प्रसिद्धि'रिति। 'पूर्ववत्',—खण्डशः प्रसिद्ध्या।

## दीधितिः

अधिकं हेत्वाभासे वक्ष्यमाणरीत्या(२) बोध्यम्। ग्रन्थस्तूपलक्षणपरोऽनौपाधिकत्वमात्रव्यवच्छेदाय। यद्वक्ष्यति;—'अनौपाधिकत्वन्तु तल्लक्षणम्'(ख) इति, इति वदन्ति।

## दीधितिप्रकाशः

ननु धूमव्यापकवह्निमान् धूमादित्यत्र साध्यतावच्छेदके तादृशग्रहाप्रसिद्धेः कथमनुगम इत्यत आह,—'अधिक'मिति। प्रागेव(ग) व्याख्यातञ्चैतत्।

नन्वेवम्(३)'अन्योन्याभावगर्भैवे'ति ग्रन्थोऽसङ्गत(४) इत्यत आह,—'ग्रन्थस्त्वि'ति। 'उपलक्षणपरः' अजहत्स्वार्थलक्षणया(घ) अन्योन्याभावात्यन्ता(५)-भावगर्भव्याप्तिप्रतिपादकः। उपलक्षणपरत्वे वीजं दर्शयति,—'यद्वक्ष्यती'ति। विशेषनिषेधस्य शेषाभ्यनुज्ञाफलकत्वादिति भावः।

'वदन्ती'त्यस्वरसः। तद्वीजन्तु;—अन्योन्या(६)त्यन्ताभावघटितव्यापकतयोर्ज्ञानादनुमितिर्नानुभविकी, येन इन्द्रियसन्निकर्षादिवद्विशिष्य कार्य्यकारणभावः कल्प्येत(७)। अनुभवस्य सन्देहे तु साध्याभाववदवृत्तित्वादिज्ञानस्यैवातिलघुनो हेतुत्वकल्पनमुचितम्। समूहालम्बनात्मक-व्यभिचारधीविरोधिधीत्वेन(८) हेतुत्व-

(१) 'साध्याभावाप्रसिद्ध्या' इति क्वचित् पाठः। (२) 'हेत्वाभासलक्षणरीत्ये'ति क्वचित् पाठः। (३) 'नन्वेवं व्याख्याने' इति क्वचित् पाठः। (४) 'ग्रन्थासङ्गतिः' इति पाठान्तरम्। (५) 'अन्योन्यात्यन्ते'ति क्वचित्। (६) 'अत्यन्तान्योन्ये'ति पाठान्तरम्। (७) 'कल्प्यते' इति पाठान्तरम्। (८) 'विरोधित्वेन' इति पाठान्तरम्।

---

(ख) तल्लक्षणमित्यस्य अनुमित्यौपयिकव्याप्त्यनुमापकमित्यर्थः। अत्यन्ताभावगर्भव्याप्तेरनुमित्यौपयिकत्वविरहे मूले अनौपाधिकत्ववत् तस्या अपि अनुमित्यौपयिकव्याप्त्यनुमापकत्व-कथनं युक्तं स्यादिति भावः।

(ग) 'प्रागेवे'ति 'हेत्वाभासे च वक्ष्यमाणा रीतिरिहाप्यनुसन्धेये'ति दीधितिव्याख्यानावसर इत्यर्थः। तथा हि तत्रैवात्रापि तद्विषयविषयकग्रहविरोधित्वं निवेश्य एकदेशविषयकज्ञान-विरोधित्वमादाय उपपत्तिः करणीयेति भावः।

(घ) वाक्ये लक्षणाभावाद् वाक्यघटकयत्किञ्चित्पदे लक्षणा पदान्तराणाञ्च तात्पर्य्य-ग्राहकत्वमिति बोध्यम्।

कल्पनेऽपि घटविषयक-तादृशसमूहालम्बनग्रहविरोधी घटाभावग्रहोऽपीति तस्यापि हेतुतापत्तिः।

न च(१) तावन्मात्र(ङ)विषयकसमूहालम्बनं धर्त्तव्यम्, तथापि 'अभावो न हेतुसमानाधिकरण' इत्यादिग्रहस्यापि साध्यतावच्छेदकादौ तादृशप्रतियोगितावच्छेदकत्वादिग्रहविरोधित्वात् तस्यापि हेतुताप्रसङ्गः। तादृश(च)ग्रहत्वावच्छिन्नविरोधित्वस्य निवेशे(२) पुनरप्रसिद्धिः।

न च साध्यतावच्छेदके साध्यतावच्छेदकावच्छिन्नसाध्यवत्त्वे च यत् तादृशात्यन्ताभावान्योन्याभाव(३)प्रतियोगितावच्छेदकत्वावगाहित्वम्, तदन्यतरावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकताशालित्वेनानुगमे नोक्तदोष इति वाच्यम्; तथा सति समूहालम्बनपर्य्यन्तानुसरणस्य वैयर्थ्यात्, लाघवात् तादृशव्याप्तिज्ञानद्वयान्यतरत्वादिनैव हेतुत्वकल्पनस्योचितत्वाच्च।

न च तदपि; अन्यतरत्वघटकभेदयोः(छ) परस्परं विशेष्यविशेषण(४)भावे विनिगमनाविरहेण गौरवेण च तादृशान्यतरत्वघटकप्रातिस्विकरूपेणैव(ज) लाघवात् प्रथमोपस्थितत्वाच्च हेतुत्वकल्पनस्योचितत्वात्, विभिन्न(५)लिङ्गसम्बन्धक(६)व्याप्तिज्ञानजन्यानुमित्यनुरोधेन कार्य्यतावच्छेदकसङ्कोचस्य(झ) सर्वसम्मतत्वादिति।

(१) 'ननु तन्मात्रे'ति पाठान्तरम्। (२) 'निवेशान्न' इति क्वचित्। (३) क्वचित् 'तादृशात्यंतान्योन्याभावे'ति पाठः। (४) 'विशेषणविशेष्य' इति क्वचित् पाठः। (५) एकत्र 'वि'शब्दो नास्ति। (६) 'सम्बन्धव्याप्ति' इति पाठान्तरम्।

(ङ) 'तावन्मात्रे'ति—तादृशविभिन्ननिखिलव्यभिचारमात्रविषयकेत्यर्थः।

(च) 'तादृशग्रहत्वावच्छिन्ने'ति तादृशसमूहालम्बनग्रहत्वावच्छिन्नेत्यर्थः। तादृशसमूहालम्बनग्रहत्वस्य कस्यापि प्रतिबध्यतानवच्छेदकत्वादप्रसिद्धिरिति भावः।

(छ) 'भेदयो'रिति,—अन्यतरत्वस्य भेदद्वयावच्छिन्नप्रतियोगिताकभेदात्मकत्वेन तत्प्रतियोगितावच्छेदकलक्षणस्य भेदद्वयस्येत्यर्थः।

(ज) 'प्रातिस्विकरूपेणैवे'ति—निरुक्तरूपात्यन्ताभावादिघटितप्रत्येकव्याप्तिज्ञानत्वेनेत्यर्थः।

(झ) 'विभिन्ने'त्यादि,—अन्यथा एकलिङ्गसम्बन्धक-व्याप्तिज्ञानजन्यानुमितिस्थले अपरलिङ्गसम्बन्धकव्याप्तिज्ञानाभावेन व्यभिचारप्रसङ्गः। कार्य्यतावच्छेदके अव्यवहितोत्तरत्वनिवेशेन कार्य्यतावच्छेदकसङ्कोचस्य करणे तु एकविधव्याप्तिज्ञानोत्तरं जायमानायामनुमितौ न व्याप्त्यन्तरज्ञानाभावप्रयुक्तो निरुक्तव्यभिचार इति भावः।

## तत्त्वचिन्तामणिः

अनौपाधिकत्वं तल्लक्षणम्। नन्वेवमुपाधिरसिद्धुपजीव्यत्वेन व्यभिचारवद्धेत्वाभासान्तरं स्यात्, न तु व्याप्त्यभावत्वेनासिद्धिरिति चेत्(१); तज्ज्ञानमुपजीव्यमपि न स्वतो दूषकम्। नान्यस्य साध्यव्यापकत्वसाधनाव्यापकत्वज्ञानमन्यस्य साध्यव्याप्यत्वज्ञाने प्रतिबन्धकमतिप्रसक्तेः। व्यभिचाराज्ञानस्य तद्धेतुत्वात्(२) तद्धीस्तथा। न चानौपाधिकत्वज्ञानं व्याप्तिज्ञाने हेतुरित्युक्तम्(A)। तथा च व्यभिचारज्ञानद्वारा(३) स दूषकः। एवञ्च परमुखनिरीक्षकतया सिद्धसाधनवन्न पृथग् हेत्वाभासान्तरम्(४)।

नन्वेवमव्यभिचारस्य व्याप्तित्वे व्यभिचारस्तदभावत्वेनासिद्धिः स्यादिति वाच्यम्; साध्याभाववद्वृत्तित्वं हि व्यभिचारः, तदभावश्च नाव्यभिचारः, केवलान्वयिन्यभावात्, किन्तु स्वसमानाधिकरणात्यन्ताभावाप्रतियोगिसामानाधिकरण्यम्। न चानयोः परस्परविरहत्व(५)मिति।

इति श्रीमद्गङ्गेशोपाध्यायकृते तत्त्वचिन्तामणौ अनुमानखण्डे
व्याप्त्यनुगमप्रकरणं समाप्तम्।

## दीधितिः

व्यभिचाराज्ञानस्य व्याप्तिधीहेतुत्वाद् व्याप्तिग्रहप्रतिबन्धकग्रहविषयत्वेन व्यभिचारस्याभासत्वम्। सोपाधित्वज्ञानन्तु न साक्षाद् व्याप्तिधीविरोधि; विरोध्यविषयकत्वात्, किन्तु व्यभिचारधीद्वारा। वक्ष्यते(B) चानुमितेस्तत्कारणज्ञानस्य वा(६) साक्षाद्विरोधिन एवाभासत्वम्। निरुपाधिकत्वस्य(७) ज्ञानन्तु न व्याप्तिधीहेतुः; मानाभावात्, तथात्वेऽप्युपाधेराभासत्वायोगाच्चेति।

---

(१) 'चेन्न, न हि तज्ज्ञानमुपजीव्यमपि स्वतो दूषकतायोग्यम्' इति पाठान्तरम्। तत्र 'दूषकतायोग्य'मित्यत्र 'दूषक'मिति क्वचित्। (२) 'हेतुत्वात्त' इति पाठान्तरम्। (३) 'ज्ञानजननद्वारा' इति पाठान्तरम्। (४) एकत्र 'हेत्वाभासान्तरम्' इत्ययमंशो नास्ति। (५) 'विरहरूपत्व'मिति पाठान्तरम्। (६) आदर्शविशेषे 'वा' शब्दो नास्ति। (७) 'निरुपाधित्वस्य' इति क्वचित् पाठः।

(A) 'उक्त'मिति—'नन्वनौपाधिकत्वज्ञानं व्याप्तिज्ञाने हेतु'रित्यादिव्याप्तिग्रहोपायसन्दर्भे इति शेषः।

(B) 'वक्ष्यत' इति हेत्वाभाससामान्यनिरुक्तिप्रकरणादाविति शेषः।

## दीधितिप्रकाशः

'नन्वेवमुपाधिरसिद्ध्युपजीव्यत्वेने'त्यादि-मूलग्रन्थस्य समाधानग्रन्थमधृत्वैव तत्तात्पर्यार्थमाह(१) 'व्यभिचाराज्ञानस्ये'त्यादिना । 'साक्षात्' किञ्चिदुन्नयनमद्वारीकृत्य । 'विरोध्यविषयकत्वात्' ग्राह्याभाव-तद्व्याप्याविषयकत्वादित्यर्थः ।

ननु व्यभिचाराद्युन्नयनद्वारा विरोधित्वेऽपि हेत्वाभासत्वं कुतो(२) नेत्यत आह 'वक्ष्यते चे'ति । 'साक्षात्' ग्राह्याभाव-तद्व्याप्यान्यतरावगाहितया । तेन सिद्धसाधनव्युदासः(अ) । अनौपाधिकत्वज्ञानं(३) न व्याप्तिधीहेतुरिति मूलस्य विवक्षितार्थं वक्तुं यथाश्रुतार्थमनुवदति(४) 'निरुपाधिकत्वस्य ज्ञानन्त्वि'ति । 'तथात्वेऽपि' निरुपाधित्वज्ञानस्य व्याप्तिधीहेतुत्वेऽपि(५) । 'उपाधे'रिति,—अनुमितेस्तत्कारणज्ञानस्य वा साक्षादविरोधित्वादिति भावः ।

## दीधितिः

इदं पुनरिहावधेयम्(६),—यदन्योन्याभावस्याव्याप्यवृत्तित्वे प्रतियोग्यवृत्तित्वविशेषिततद्घटितलक्षणस्य संयोग(७)साध्यकव्यभिचारिण्यतिव्याप्तिः, संयोग्यन्योन्याभावस्य केवलान्वयित्वात् ।

## दीधितिप्रकाशः

'इदं पुन'रित्यादि ; इदं किं ? तत्राह 'यदि'ति वक्ष्यमाणवाक्यार्थपरामर्शकम् ; वक्ष्यमाणं यत् तदवधेयमित्यर्थः । तदेवाह 'अन्योन्याभावस्ये'त्यादिना । 'तद्घटितलक्षणस्य' अन्योन्याभावघटितलक्षणस्य । 'अतिव्याप्ति'रिति, संयोगी सत्त्वादित्यादौ

---

(१) 'त्वैव तात्पर्यार्थमाह' इति पाठान्तरम् । (२) 'न कुत इत्यत' इति पाठान्तरम् । (३) अनेन 'न चानौपाधिकत्वे'त्यादिमूलस्थले निरुक्तपाठान्तरं सम्भाव्यते, 'इति मूलस्ये'त्यस्य 'इत्यर्थकमूलस्येति वार्थः, इतीत्यस्य विवक्षितार्थांशे वा अन्वयः । (४) 'यथाश्रुतार्थमनुरुध्याह' इति पाठान्तरम् । (५) 'निरुपाधिज्ञानस्य हेतुत्वेऽपि' इति क्वचित् । (६) 'पुनरवधेयम्' इति क्वचित् । (७) 'संयोगादिसाध्यके'ति क्वचित् पाठः, तत्र 'संयोग्यन्योन्याभावस्ये'त्युक्तग्रन्थस्थ-संयोगिपदमुपलक्षणं वेदितव्यम् ।

---

(अ) 'सिद्धसाधनव्युदास' इति,—सिद्धसाधनस्थले साध्यनिश्चयत्वावच्छिन्नप्रतिबन्धकताया ग्राह्याभाव-तद्व्याप्यान्यतरावगाहित्वानवच्छिन्नत्वात्, 'साक्षादविरोधिन' इत्यस्य 'ग्राह्याभाव-तद्व्याप्यान्यतरावगाहित्वावच्छिन्नप्रतिबन्धकतावत' इत्यर्थकत्वात् ।

संयोगिभेदस्य प्रागुक्तरीत्या(ट) गुणाद्यवच्छेदेनापि(१) संयोगिरूपप्रतियोग्यवृत्तित्वा-भावात् तादृश(ठ)घटादिभेदप्रतियोगितानवच्छेदकं संयोगित्व(२)मित्यतिव्याप्तिरित्यर्थः।

प्रतियोगिभिन्नं यद्धेत्वधिकरणं तद्वृत्त्यन्योन्याभावेत्युक्तौ(३) च संयोगि द्रव्यत्वादित्यत्राव्याप्तिः ; तत्र हेत्वधिकरणस्य(४) संयोगिरूपप्रतियोगिभिन्नत्वात्(ड)।

न च गुरुधर्मावच्छिन्नसाध्यके व्यभिचारिण्यति(५)व्याप्तिवारणाय प्रतियोग्यवृत्तिहेतुसमानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकं यद्धर्मविशिष्टसम्बन्धिनिष्ठतादृशा(ढ)न्योन्याभावप्रतियोगितानवच्छेदकं तद्धर्मभिन्नं यत् साध्यतावच्छेदकमित्येतावत्पर्य्यन्तस्यावश्यविवक्षणीयत्वेन (६)तथाविधद्रव्यभेदमादायैव संयोगि सत्त्वादित्यत्र नातिव्याप्ति(ण)रिति वाच्यम्(७) ; अत्र अवच्छेदकत्वं यदि(८) साध्यतावच्छेदकसम्बन्धेन, तदा संयोगेन साध्यतायामव्याप्तिः, प्रतियोग्यवृत्ते-

(१) 'गुणावच्छेदेनापि'इति क्वचित् पाठः। (२) 'संयोगवत्त्व'मिति पाठान्तरम्। (३) क्वचिद् वाक्यादौ 'न चे'ति 'भावेत्युक्तौ चे'त्यत्र च 'भावेति वाच्य'मिति पाठः। (४) 'द्रव्यस्ये'त्यपि क्वचित्। (५) 'अतिप्रसङ्गे'ति क्वचित् पाठः। (६) 'त्येतत्पर्य्यन्तस्यावश्यविवक्षणीयत्वे' इति क्वापि। (७) आदर्शविशेषे 'इति वाच्यम्'इत्यंशो नास्ति। (८) 'अत्र च यदि अवच्छेदकत्वम्'इति क्वचित् पाठः।

(ट) 'प्रागुक्तरीत्ये'ति—सिद्धान्तलक्षणप्रदर्शितक्रमेणेत्यर्थः। तथाहि संयोगिभेदे गुणे न संयोगिवृत्तित्वमिति प्रतीतेः गुणादौ संयोगिभेदनिष्ठसंयोगिवृत्तित्वाद्यवच्छेदकत्वाभाव एव विषयः, न तु गुणाद्यवच्छेदेन संयोगिभेदे संयोगिवृत्तित्वाद्यभाव इति भावः।

(ठ) 'तादृशे'ति—प्रतियोग्यवृत्तीत्यर्थः।

(ड) 'संयोगिरूपे'ति—वस्तुगत्या यः संयोगिरूपः प्रतियोगी तद्भिन्नत्वादित्यर्थः।

(ढ) 'तादृशे'ति—प्रतियोग्यवृत्तीत्यर्थः।

(ण) 'नातिव्याप्ति'रिति–द्रव्यभेदप्रतियोगिद्रव्यावृत्ति-सत्त्वसमानाधिकरणद्रव्यभेदरूपान्योन्याभावप्रतियोगितावच्छेदकस्य द्रव्यत्वस्य संयोगत्वविशिष्टसंयोगसम्बन्धिद्रव्यनिष्ठप्रतियोग्यवृत्तित्वविशेषितान्योन्याभावप्रतियोगितानवच्छेदकत्वेन पारिभाषिकावच्छेदकत्वादिति भावः।

न्योन्याभावस्य संयोगेन प्रतियोगितावच्छेदकस्याप्रसिद्धेः(त), प्रतियोग्यवृत्तिपद(१)(थ)वैयर्थ्याच्च(२)।

अथैकेन(३) सम्बन्धेन विशेषणताविशेषेण वा, तदा सुतरां प्रतियोग्यवृत्तिपदवैयर्थ्यमिति। तस्माल्लघुगुरुसाधारणं स्वरूपसम्बन्धरूपमवच्छेदकत्वमादृत्यै-(४) वायं विचार(द) इति।

## दीधितिः

अथ व्याप्यवृत्तिसाध्यके स्वव्यापकसाध्यसामानाधिकरण्यमेव(A)व्याप्तिः। अव्याप्यवृत्तिसंयोगादिसाध्यके तु स्वव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकात्यन्ताभावेन तादृशरूपविशिष्टावच्छिन्नप्रतियोगिताकान्योन्याभावेन वा सममसामानाधिकरण्यमिति चेत्, स्मृति-संस्कार-जन्यज्ञानविषयत्वादिकेवलान्वयिसाध्यकेषु का गतिः?

## दीधितिप्रकाशः

'व्याप्यवृत्तौ'ति,—तत्र प्रतियोग्यवृत्तित्वादेरप्रवेशादिति भावः। 'स्वव्यापके'ति; स्वं हेतुः, तद्व्यापकं यत् साध्यम्, तत्सामानाधिकरण्यमित्यर्थः।

(१) 'वृत्तित्व'इति क्वचित्। (२) 'वैयर्थ्यञ्च'इति क्वचित्। (३) 'अथैकसम्बन्धेन' इति क्वचित् पाठः। (४) 'कत्वमिति मतेनैवायम्' इति पाठान्तरम्।

(त) 'अप्रसिद्धे'रिति—संयोगसम्बन्धेन वस्तुमात्रस्याव्याप्यवृत्तित्वेन संयोगसम्बन्धेन तद्वतो भेदस्याप्यव्याप्यवृत्तित्वात् प्रतियोग्यवृत्ति-तादृशान्योन्याभावाप्रसिद्धिप्रयुक्ताप्रसिद्धेरित्यर्थः। तदनभ्युपगमे द्वितीयदोषः।

(थ) 'वैयर्थ्याच्चे'ति,—संयोगादिसाध्यकव्यभिचारिणि अतिप्रसङ्गस्य निरुक्तरीत्या द्रव्यभेदमादाय संयोगत्वे पारिभाषिकावच्छेदकत्वसम्पत्त्यैव निरसितुं शक्यत्वादिति भावः।

(द) 'तस्मा'दित्यादि—तथाहि लघुरूपसमनियतगुरुरूपेण साध्यतायां व्यभिचारिणि स्वरूपसम्बन्धरूपावच्छेदकत्वसत्त्वेनैवातिप्रसङ्गाभावात् पारिभाषिकावच्छेदकत्वस्यानुसरणीयतया न तेन निरुक्तातिव्याप्तिर्वारयितुं शक्यत इति भावः।

(A) व्याप्यवृत्ति केवलान्वयिसाध्यके वक्ष्यमाणलक्षणाप्रसिद्ध्या पृथगेतल्लक्षणानुसरणमिति ध्येयम्।

अत्र(१) अन्योन्याभावघटितव्यापकत्वमुभयत्र निर्वाच्यम्, प्रतियोगितावच्छेदक-सम्बन्धाप्रवेशेन लाघवादिति भावः।

'स्वव्यापकतावच्छेदके'ति ;—स्वं साध्यम्। संयोगी सत्त्वादित्यादौ(२) तु संयोगव्यापकतावच्छेदक-द्रव्यत्वत्वावच्छिन्नाभावेन समं सत्तायाः सामानाधिकरण्यान्नातिव्याप्तिरिति भावः।

ननु स्वसमानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकतानवच्छेदकरूपावच्छिन्नात्यन्ताभावेन सममसामानाधिकरण्यमित्यपेक्ष्य स्वसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकावच्छिन्नप्रतियोगिताकान्योन्याभावेन सममसामानाधिकरण्यं लघुतरमित्यतस्तथैवाह ;—'तादृशरूपविशिष्टे'[रूपावच्छिन्ने]ति(A)।

'तादृशं' स्वव्यापकतावच्छेदकम्। इदं वस्तुकथनम्(ध), न तु लक्षणे तेन रूपेण(न) प्रवेशः। लक्षणन्तु उक्त(प)मेव(३) धर्त्तव्यमिति ध्येयम्। अन्योन्याभावस्य दैशिकमव्याप्यवृत्तित्वमनभ्युपगच्छताम् पाकरक्ते इदानीं न श्याम इति धीबलात् कालिकमव्याप्यवृत्तित्वमभ्युपगच्छतां मणिकारादीनां मते संयोगाभावसाध्यके, स्वव्यापकसाध्यसामानाधिकरण्यरूप(४)लक्षणमक्षतमतस्तदुपेक्ष्य अन्यत्राव्याप्तिमाह 'स्मृती'त्यादि। इदं स्मृतिविषयः संस्कारविषयः जन्यज्ञानविषयो वा वाच्यत्वादित्यादावव्याप्तिरित्यर्थः(५)।

(१) आदर्शविशेषे 'अत्रे'ति पाठो नास्ति। (२) 'सत्त्वादित्यत्र' इति पाठान्तरम्। (३) 'उक्तं स्मर्त्तव्यमिति' इति पाठान्तरम्। (४) 'रूपं लक्षणमक्षुण्णम्' इति पाठान्तरम्। (५) 'वाच्यत्वादित्यादावित्यर्थ' इति पाठान्तरम्।

(A) प्रकृतदीधितौ 'तादृशरूपावच्छिन्ने'तिप्रतीकस्य क्वाप्यदर्शनात् प्रकाशे तादृशप्रतीकधारणमसङ्गतमतस्तत्र 'तादृशरूपविशिष्टे'त्येव पाठो युक्तः प्रतिभाति। अथवा अर्थपरोऽयं निर्देशः, स च अवच्छिन्नपदस्य विशिष्टरूपार्थपरत्वान्नासङ्गतः। न चार्थपरत्वेऽपि तादृशरूपपदं व्यापकतावच्छेदकरूपविशिष्टपरमिति वाच्यम्, अग्रे स्वयमन्यथा व्याख्यानादिति ध्येयम्।

(ध) 'इद'मिति—व्यापकरूपस्य व्यापकतावच्छेदकरूपविशिष्टत्ववर्णनम्।

(न) 'तेन रूपेणे'ति—व्यापकतावच्छेदकरूपविशिष्टत्वेनेत्यर्थः।

(प) 'उक्तमेवे'ति—निरुक्तव्यापकरूपघटितमेवेत्यर्थः।

तत्र, स्मृतेरुद्बोधकाधीनत्वेन संस्कारस्यापि(१) उपेक्षणीयविषये असत्त्वेन सार्वत्रिकत्वानियमात्(क) जन्यज्ञानेति। नित्यज्ञानविषयतायाः सर्वदैव(२)सत्त्वात् जन्येति। अस्य च प्रलयकालावच्छेदेन व्योमा(ब)द्यावभावस्य सत्त्वात् प्रतियोगि-वैयधिकरण्याघटितं न स्वव्यापकत्वम्। तद्(भ)व्यापकव्याप्यवृत्तिकेवलान्वय्यन्तरस्या-भावाप्रसिद्ध्या उत्तरलक्षणमपि तत्राव्याप्तमिति भावः।

न च तद्व्यापकस्य आकाशाभावस्य अभावे आकाशे हेतुसामानाधिकरण्या-भावसत्त्वान्नाव्याप्तिरिति वाच्यम्, आकाशाभावस्य केवलान्वयित्वेन तदभावा-सम्भवस्य[म]स्वयमेव व्यवस्थापनीयत्वादिति।

## दीधितिः

अथ स्वाधिकरणयत्किञ्चिद्व्यक्तिवृत्तिधर्मानवच्छिन्नप्रतियोगिताकान्योन्या-भावप्रतियोगितानवच्छेदकसाध्यवत्त्वकत्वं यद्धर्मविशिष्टयत्किञ्चिदधिकरणवृत्तिधर्मान-वच्छिन्नप्रतियोगिताकान्योन्याभावप्रतियोगितानवच्छेदकसाध्यवत्त्वकत्वे सति तद्धर्म-विशिष्टत्वं वा सेति चेत्, अत्र किं यथाकथञ्चित्सम्बन्धेन तदधिकरणवृत्तित्वं विवक्षितम्? साध्यतावच्छेदकसम्बन्धेन वा? आद्ये गुणः स्पन्दत्वादित्यत्रातिव्याप्तिः।

(१) 'संस्कारविशेषस्यापि' इति पाठान्तरम्। (२) 'सर्वत्रैवे'ति क्वचित्

(क) 'सार्वत्रिकत्वानियमा'दिति—तथा च स्मृतिविषयत्वस्य संस्कारविषयत्वस्य च केवलान्वयित्वमसम्भवीति तत्परिहारेण साध्यतया जन्यज्ञानविषयत्वस्योपन्यासः। जन्यज्ञाना-विषयस्य कस्यचिदप्रामाणिकत्वेन प्रकृतं साध्यं केवलान्वयीति भावः।

(ब) 'व्योमाद्या'वित्यादिपदेन परमाण्वादिपरिग्रहः।

(भ) 'तद्व्यापके'ति—जन्यज्ञानविषयत्वव्यापकेत्यर्थः। स्वस्वरूपस्याव्याप्यवृत्तिकेवला-न्वयिपदार्थस्य स्वव्यापकत्वासम्भवेनाह 'व्याप्यवृत्ति-केवलान्वय्यन्तरस्ये'ति तादृशप्रमेयत्वादे-रित्यर्थः।

(म) इदञ्च व्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकात्यन्ताभावासामानाधिकरण्य-रूपप्रथमलक्षणाभिप्रायेण। तत्रैव स्वव्यापकीभूतगगनाभावादेरभावस्य उपयोगित्वात्। द्वितीय-लक्षणे तु व्यापकतावच्छेदकरूपावच्छिन्नो यो गगनाभावादिः, तद्वदन्योन्याभावस्या-प्रसिद्धिमूला अव्याप्तिर्बोध्या। 'तदभावासम्भवस्ये'ति—आकाशाभावाभावासम्भवस्येत्यर्थः। 'व्यवस्थापनीयत्वा'दिति—वक्ष्यमाणकेवलान्वयिप्रकरण इति शेषः।

गुणत्वस्य स्वरूपसम्बन्धेन स्पन्दवृत्तितया तद्गुत्वस्य स्पन्दनिष्ठतादृशान्योन्याभावप्रतियोगितानवच्छेदकत्वात् ।

द्वितीये समवायेन जातेः साध्यत्वे मेयत्वादावतिव्याप्तिः । जातिमन्मेयव्यक्तिनिष्ठतादृशान्योन्याभावप्रतियोगितायाः जातिमत्त्वेनानवच्छेदाज्जातिशून्यमेयव्यक्तौ समवायेन वर्त्तमानस्याप्रसिद्धत्वात् । एतेन ग्रहोऽपि व्याख्यातः ।

## दीधितिप्रकाशः

सर्वसाधारणं लक्षणान्तरमाशङ्कते 'अथे'ति । स्वं हेतुः । धूमवान् वह्नेरित्यादौ धूमवद्भेदस्यापि वह्न्यधिकरणवृत्तिधर्मावच्छिन्नप्रतियोगिताकत्वादतिव्याप्तिरतो 'यत्किञ्चि'दिति । स्वाधिकरणीभूतयत्किञ्चिद्व्यक्त्यवृत्तिधर्मावच्छिन्नेत्यपपाठः, वह्निमान् धूमादित्यत्र हेत्वधिकरणीभूतपर्वताद्यवृत्तिर्महानसीयवह्निः तदवच्छिन्नप्रतियोगिताको वह्निमद्-भेदोऽपीत्यव्याप्तेः । स्वाधिकरणीभूतयत्-किञ्चिद्-व्यक्तिवृत्तितानवच्छेदकविशिष्टावच्छिन्नप्रतियोगिताकेति कृते अनयैव न्याय इति स्मर्त्तव्यम् (१) ।

ननु इदं संयोगि गुणकर्मान्यत्वे सति सत्त्वादित्यत्राव्याप्तिः, विशिष्टस्या(२)नतिरिक्तत्वा(य)दत आह 'यद्धर्मे'ति । यद्धर्मः हेतुतावच्छेदक(३)धर्मः । रासभादिसाधारण्यवारणाय 'तद्धर्मविशिष्टत्व'मिति । कालो(४) घटवान् कालपरिमाणादित्यादौ(५)वृत्त्यनियामकसंयोगेन गगनादिमद्भेद एव तादृशः प्रसिद्ध इति नाव्याप्तिः । 'गुण' इति—अनित्यस्य यत्किञ्चित्स्पन्दा(र)वृत्तित्वात् गुणत्वपर्य्यन्तानुधावनम् ।

(१) 'त्व्याप्ते'रित्युत्तरं 'स्मर्त्तव्य'मित्यन्तः पाठो न सार्वत्रिकः । (२) 'विशिष्टस्यानतिरेकादत' इति पाठान्तरम् । (३) 'हेतुतावच्छेदको' इति पाठान्तरम् । आदर्शविशेषे 'धर्म' इति नास्ति । तत्र 'हेतुतावच्छेदक' इत्येव पाठः । (४) 'महाकाल' इति पाठान्तरम् । (५) 'दित्यादौ च' इति पाठान्तरम् ।

(य) प्रकृते स्वाधिकरणतया गुणस्य कर्मणो वापि धर्त्तुं शक्यत्वादिति भावः ।

(र) 'यत्किञ्चित्स्पन्दावृत्तित्वादि'ति—साध्यत्वाभिमतानित्यवस्त्वसमानकालीनस्पन्दावृत्तित्वादित्यर्थः, समानकालीनजन्यवस्तुनि तथा महाकाल एव पदार्थान्तरस्य कालिकविशेषणतया वृत्तेरिति भावः । गुणत्वस्य जातेर्नित्यतया न तदसमानकालीनः कोऽपि स्पन्द इति न गुणत्वस्य किञ्चित्स्पन्दावृत्तित्वमिति ध्येयम् ।

'स्वरूपसम्बन्धः' कालिकविशेषणताविशेषः । 'तादृशे'ति,—न च तादृशभेदा-प्रसिद्धिः, अतीत(A)तत्तद्व्यक्तिमद्भेदस्यैव तादृशस्य प्रसिद्धत्वात् । 'जातिमदि'ति,-मेयत्वाधिकरणीभूतयत्किञ्चिद्व्यक्तिसमवेतधर्मानवच्छिन्न(B)प्रतियोगिताको न जाति-मद्भेदः, किन्तु घटादिमद्भेदः(१) ; तत्प्रतियोगिता च न जातिमत्त्वेनावच्छिद्यते । जातिशून्यमेयव्यक्तौ च समवेत(२)स्याप्रसिद्ध्या जातिमत्त्वाव(३)च्छिन्नाभावस्या-संग्रहादिति भावः ।

न च स्वाधिकरणयत्किञ्चिद्व्यक्तौ येन येन सम्बन्धेन धर्मस्य वर्त्तमानत्वं, तेन तेन सम्बन्धेन तद्(४)व्यक्तिवृत्तिधर्मानवच्छिन्नप्रतियोगिताकेत्युक्तौ दोषद्वय-स्यापि(ल) नावसरः(५) । समवायेन गुणत्ववद्भेदस्य स्वरूपसम्बन्धेन(C) जाति-मद्भेदस्य च स्वाधिकरणीभूतस्पन्दसामान्यादिवृत्तितानियामकसम्बन्धेन(६)तदन-वच्छिन्नप्रतियोगिताकत्वादिति वाच्यम् ; अयमात्मा ज्ञानादित्यत्र कालिकसम्बन्धेन आत्मत्ववद्भेदस्यापि तादृशतया तत्प्रतियोगितावच्छेदकत्वेनात्मत्वस्याव्याप्तेः । साध्यतावच्छेदकसम्बन्धेन तत्प्रतियोगितावच्छेदकं यत् तदन्यत्वस्य विवक्षणे च कालो घटवान् कालपरिमाणादित्यादावप्रसिद्धिरिति ।

'एतेन'ग्रहविषयस्य अनिर्वचनेन । 'ग्रहोऽपी'ति व्याप्तिग्रह इत्यर्थः । 'व्याख्यातः' दुर्वचतया व्याख्यातः, असम्भवीत्यर्थः(७)* ।

)A) 'अनित्ये'ति पाठान्तरम् । (B) 'स्वाधिकरणीभूत-यत्किञ्चिद्व्यक्त्यसमवेत-धर्मावच्छिन्ने'ति पाठान्तरम् । (१) 'घटादेर्भेद' इति पाठान्तरम् । (२) 'समवेतत्वस्य' इति पाठान्तरम् । (३) 'जातिमत्त्वावच्छिन्नस्य' इति पाठान्तरम् । (४) 'तत्तद्व्यक्ति' इति पाठान्तरम् । (५) 'नावतार' इति पाठान्तरम् । (C) स्वरूपसम्बन्धेने'ति न सार्वत्रिकम् । (६) 'सम्बन्धेन' इत्यनन्तरं 'यो धर्म' इत्यधिकः पाठः क्वचिद् दृश्यते । (७) 'न सम्भवतीत्यर्थ' इति क्वचित् पाठः ।

---

[ल] 'दोषद्वयस्यापी'ति - गुणत्वसाध्यकस्पन्दत्वहेतौ जातिसाध्यकमेयत्वहेतौ च प्रागुप-दर्शितस्यातिप्रसङ्गद्वयस्येत्यर्थः ।

* अत्र 'व्याख्यातो दूष्यत्वेन । तथा च ग्राह्याप्रसिद्ध्या ग्रहस्य प्रमात्वं कुत्रापि न स्यादिति भावः ।' इति जगदीशः । गदाधरस्तु 'एतेनेति—ग्राह्यव्याप्तेरप्रसङ्गातिप्रसङ्गकथने-नेत्यर्थः । ग्रहः—अनुमितिजनकीभूतो ग्रहः । व्याख्यातः—अप्रसङ्गातिप्रसङ्गग्रस्ततया व्याख्यात' इति व्याख्यातवान् ।

# दीधितिः

एवं तथात्वे अत्यन्ताभावगर्भमपि दुर्वचम्(१)। तथाहि प्रतियोग्यनधिकरणीभूतहेत्वधिकरणनिष्ठात्यन्ताभावेत्यादिगर्भमव्यापकमेव संयोगादिसाध्यकद्रव्यत्वादौ, स्वाधिकरणीभूत-यत्किञ्चिद्व्यक्त्यवृत्तिप्रतियोगिकात्यन्ताभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसमानाधिकरणहेतुत्वमित्यत्रापि पूर्ववद् गुणः स्पन्दत्वाज् जातिमान् मेयत्वादित्यत्रातिव्याप्तिः।

एवं स्वप्रतियोगिनिष्ठाधेयत्वानिरूपकहेत्वधिकरणवृत्त्य(२)त्यन्ताभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदका(३)वच्छिन्नसमानाधिकरणहेतुत्वमित्यत्रापि उत्पत्तिकालावच्छेदेन जन्यानां द्रव्याणामजन्यानाञ्च प्रलयावच्छेदेन वा संयोगनिष्ठाधेयत्वानिरूपकत्वोपगमे संयोगसाध्यकद्रव्यत्वे कालपरिमाणे च हेतावव्याप्तिरिति कृतं पल्लवितेन(४)।

# दीधितिप्रकाशः

'एवं तथात्वे' अन्योन्याभावस्याव्याप्यवृत्तित्वे। 'अव्यापकमेवे'ति,—संयोगानधिकरणत्वस्य प्रलय(५)कालाद्यवच्छेदेन द्रव्येऽपि सत्त्वादिति भावः। 'स्वाधिकरणीभूतयत्किञ्चिद्व्यक्त्यवृत्ती'ति,—न च स्वाधिकरणीभूतयत्किञ्चिद्व्यक्तिपर्वतावृत्तिमहानसीयवह्निप्रतियोगिकस्य वह्नित्वावच्छिन्नाभावस्य प्रतियोगितावच्छेदकत्वाद् वह्नित्वस्य वह्निमान् धूमादित्यादावव्याप्तिरिति वाच्यम्; स्वाधिकरणयत्किञ्चिद्व्यक्तिवृत्तितानवच्छेदकरूपावच्छिन्नप्रतियोगिताकेत्यस्य तदर्थत्वात्(च)।

(१) 'एव'मित्यादि-'दुर्वच'मित्यन्तग्रन्थस्थले 'एवमत्यन्ताभावगर्भमपि लक्षणं तथात्वे दुर्वच'मिति पाठः क्वचिद् दृश्यते। (२) 'वृत्त्यभाव' इति पाठान्तरम्। (३) 'प्रतियोगितानवच्छेदकावच्छिन्न'इति पाठान्तरम्। (४) 'रिति दिगिति' इति पाठः क्वचित्। क्वचिच्च 'हेतावव्याप्तिः, कृतं' इति पाठः। (५) 'प्रलयाद्यवच्छेदेन'इति पाठान्तरम्।

(च) 'तदर्थत्वा'दिति – 'स्वाधिकरणीभूते'त्यादि-'प्रतियोगिका'न्तदलार्थत्वादित्यर्थः। तथा च वह्नित्वावच्छिन्नाभावस्य स्वाधिकरणपर्वतावृत्तिमहानसीयवह्निप्रतियोगिकत्वेऽपि तादृशपर्वतवृत्तितानवच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वाभावान्न दोष इति भावः।

अत एव(श) गुणा(१)न्यत्वविशिष्टसत्तावान् जातेरित्यादावपि नातिव्याप्तिः। अत्र(२) स्वाधिकरणीभूतयत्किञ्चिद्व्यक्तिवृत्त्यप्रतियोगिकेति च नोक्तम्, वह्निमान् धूमादित्यादौ घटाद्यभावस्यापि घटमेयत्वान्यतरा(३)भावाभिन्नतया तादृशा(ष)भावाप्रसिद्धेरिति।

'पूर्ववदि'ति यथाकथञ्चित्(४) सम्बन्धेन साध्यतावच्छेदकसम्बन्धेन वा वृत्तित्वविवक्षण इत्यर्थः। 'गुण' इति; इदन्तु(५) स्वाधिकरणीभूतयत्किञ्चिद्व्यक्तिवृत्त्यप्रतियोगिकेति—पाठाभिप्रायेणैव सङ्गच्छते; अन्यथा यथाकथञ्चित्सम्बन्धेन स्पन्दावृत्तितया गुणत्वस्य तत्प्रतियोगिकाभावसंग्रहे उक्तदोषासङ्गतेः। न चाप्रसिद्धिः, तादृशवृत्तितावच्छेदकानवच्छिन्नप्रतियोगिताकाभावस्यैव(६) विवक्षितत्वात्। 'गुणः स्पन्दत्वा'दिति,—साध्यसमानाधिकरणहेतुत्वमित्यत्र साध्यतावच्छेदकसम्बन्धविवक्षायां व्यापकतादलस्य केवलस्यातिव्याप्तिः। इतरथा(A) तु गुणैतत्स्पन्दान्यतरत्ववान् स्पन्दत्वादित्यत्रातिव्याप्तिर्बोध्या। यथाश्रुते तु स्पन्दत्वे गुणत्वरूपसाध्यसामानाधिकरण्याभावादेव नातिव्याप्तिरिति भावः।

(१) 'कर्मान्यत्वविशिष्टसत्तावान्' इति पाठान्तरम्। (२) 'अत्र' इति पाठः पुस्तकविशेषे नास्ति। (३) मेयान्यतरेति क्वचित् पाठः, स च नोपपन्नार्थः। (४) 'यत्किञ्चित्सम्बन्धेन' इति क्वचित् पाठः। (५) 'इदन्तु' इत्यारभ्य 'विवक्षितत्वा'दित्यन्तः पाठः पुस्तकविशेषे नास्ति। तथा 'यथाश्रुते तु' इत्यारभ्य 'भाव' इत्यन्तः परवर्त्ती पाठोऽपि। (६) तादृशावच्छेदकानवच्छिन्नाभावस्यैवेति क्वचित् पाठः।

---

(श) 'अत एवे'ति—वृत्तितानवच्छेदकरूपघटिततादृशार्थवशादेवेत्यर्थः। अन्यथा गुणान्यत्वविशिष्टसत्तावान् जातेरित्यादौ गुणान्यत्वविशिष्टसत्ता नास्तीत्याद्यभावस्य गुणादिनिष्ठस्य गुणाद्यवृत्तिप्रतियोगिकत्वाभावेन तदन्याभावमादायातिप्रसङ्गस्य लब्धपदत्वात्। प्रकृतनिवेशे कृते तु विशिष्टस्यानतिरिक्ततया विशिष्टसत्ताया गुणवृत्तित्वेऽपि विशिष्टसत्तात्वस्य गुणवृत्तितानवच्छेदकत्वेन विशिष्टसत्ताभावोऽपि प्रकृतलक्षणघटकीभूतोऽभाव एवेति नातिप्रसङ्गः। एवमन्यत्राप्यूह्यम्।

(ष) 'तादृशाभावाप्रसिद्धे'रिति सर्वस्यैव घटाद्यभावस्य निरुक्तरीत्या लक्षणोक्तयत्किञ्चिद्व्यक्तिवृत्तिमेयत्वादिप्रतियोगिकत्वेन तादृशयत्किञ्चिद्व्यक्तिवृत्त्यप्रतियोगिकाभावाप्रसिद्धेरित्यर्थः।

(A) 'इतरथे'ति—व्याप्तिलक्षणातिव्याप्तेरप्युपपिपादयिषायामित्यर्थः।

'स्वप्रतियोगिनिष्ठाधेयत्वे'ति,—साध्यतावच्छेदकसम्बन्धेन स्वप्रतियोगितावच्छेदकावच्छिन्ननिष्ठ(१)माधेयत्वं बोध्यम्। तेन(स) गुणः स्पन्दत्वात्, गुणान्यत्वविशिष्टसत्तावान् जातेरित्यादौ च नातिव्याप्तिः। तादृशनिरूपकत्वम् अव्याप्यवृत्ति व्याप्यवृत्ति वा? आद्ये दोषमाह— उत्पत्ती'ति। उत्पत्तिकाले घटो न संयोगनिष्ठाधेयत्वनिरूपकः। प्रलये परमाण्वादि न संयोगनिष्ठाधेयत्वनिरूपकमिति प्रतीतेर्विवादग्रस्तत्वादाह—'उपगमे' इति। अन्त्ये दोषमाह—'कालपरिमाणे चे'ति। कालिकसम्बन्धेन घटादौ साध्य इति शेषः। साध्यतावच्छेदकसम्बन्धेन स्वप्रतियोगिनिष्ठाधेयत्वानिरूपकहेत्वधिकरणवृत्त्यभावस्याप्रसिद्धत्वात् वृत्तिमन्मात्रस्यैव महाकालाधेयत्वादवृत्तेश्चाधेयत्वाभावादिति।

यत्तु आधेयत्वनिरूपकस्यापि कालस्य अन्यावच्छेदेन(ह) आधेयत्वानिरूपकत्वादव्याप्तिरिति व्याख्यानम्(२), तदसत्, 'उत्पत्तिकाले'त्यादिना तत्कल्पे(क्ष) दोषदानेन पृथक् शङ्कानुत्थानादिति।

## दीधितिः

अत्र वदन्ति;—साध्यसमानाधिकरण-(३)तत्सम्बन्धावच्छिन्नाभाव-प्रतियोगितानवच्छेदकत्वव्यापक-स्वसमानाधिकरणतत्सम्बन्धावच्छिन्नाभाव-प्रतियोगितानवच्छेदकत्वकत्वम्,. स्वसमानाधिकरण(४)तत्सम्बन्धावच्छिन्नाभावप्रतियोगितावच्छेदकत्वव्यापकसाध्यसमानाधिकरणतत्सम्बन्धावच्छिन्नाभाव-प्रतियोगितावच्छेदकत्वकत्वं वा, स्वसमानाधिकरणाः सर्वे यद्धर्मावच्छिन्नसमानाधिकरणास्तद्धर्मावलीढसामानाधिकरण्यम्, साध्यसामानाधिकरण्याभावव्यापकतावच्छेदक-स्वसामानाधिकरण्यसामान्याभावत्वकत्वं वा व्याप्तिः। अत्र च साध्यतावच्छेदकसम्बन्धेन

(१) 'निष्ठाधेयत्वम्' इति पाठान्तरम्। तत्र 'बोध्य'मित्यपि नास्ति। (२) 'व्याख्यातम्' इति पाठान्तरम्। (३) 'यत्सम्बन्धे'ति पाठान्तरम्। (४) 'यत्सम्बन्धे'ति पाठान्तरम्।

(स) 'तेने'ति—साध्यतावच्छेदकसम्बन्धेनेति—स्वप्रतियोगितावच्छेदकावच्छिन्नेति-दलद्वयघटितताहशाधेयत्वनिवेशेनेत्यर्थः। गुणः स्पन्दत्वादित्यत्र साध्यतावच्छेदकसम्बन्धेनेत्यस्य, गुणान्यत्वविशिष्टसत्तावान् जातेरित्यत्र च स्वप्रतियोगितावच्छेदकावच्छिन्नेत्यस्य व्यावृत्तिर्बोध्या।

(ह) 'अन्यावच्छेदेने'ति—प्रतियोग्यनधिकरणदेशावच्छेदेनेत्यर्थः।

(क्ष) 'तत्कल्प' इति—आधेयत्वानिरूपकत्वस्याव्याप्यवृत्तित्वाभिप्रायकनिरुक्तव्याख्यानकल्प इत्यर्थः।

साध्याधिकरणं, हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणं, तद्वृत्तिद्वयञ्च एकेन सम्बन्धेन विशेषणताविशेषेण वा बोध्यमिति ।

इति श्रीमद्रघुनाथशिरोमणिकृतायां दीधितौ अनुमानखण्डे व्याप्त्यनुगम-प्रकरणं समाप्तम् ।

## दीधितिप्रकाशः

यावत्साध्यव्यापकव्यापककत्वं यावत्साधनाव्यापकाव्यापकसाध्यकत्वं वा अनौपाधिकत्वं क्रमेण सिद्धान्तयति 'साध्ये'त्यादिना । प्रथमे(क) अभावद्वयप्रवेशे गौरवादाह 'स्वसमाने'ति । स्वं हेतुः । अनयोश्च पदव्यावृत्तिः पूर्वमेव(ख)व्याख्याता(१) । लाघवादन्यदाह—'स्वसमानाधिकरणा' इति । स्वं हेतुः । इदं गुणकर्मान्यत्वविशिष्टसत्तावज्जातेरित्यादावव्याप्तेराह—'यद्धर्मावच्छिन्ने'ति । साध्यतावच्छेदकावच्छिन्नेत्यर्थः । सर्वत्वस्य व्यापकत्वादन्यस्य दुर्वचत्वाद् व्याप्तेर्विशिष्टैकार्थरूपत्वं वानुरुध्याह—'साध्यसामानाधिकरण्ये'ति । यद्यपि स्वसामानाधिकरण्यव्यापकतावच्छेदकसाध्यसामानाधिकरण्यत्वकत्वमेव वक्तुमर्हति, तथापि हेतौ तादृशसाध्यसामानाधिकरण्यत्वस्य सम्बन्धः स्ववृत्त्यवच्छेदकत्वप्रतियोगिव्यापकताप्रतियोगिसामानाधिकरण्यप्रतियोगित्वरूपः(ग)प्रकृते वाच्यः, तथा च अतिगौरवम् । तादृश-

(१) क्वचित् 'व्याख्याते' त्यनन्तरं 'इदं गुणे'त्यादिवक्ष्यमाणपाठ एव दृश्यते ।

(क) 'प्रथम' इत्यादि;—तथा हि दीधितौ यत् साध्यसमानाधिकरणतत्सम्बन्धावच्छिन्नाभावप्रतियोगितानवच्छेदकत्वव्यापक-स्वसमानाधिकरण-तत्सम्बन्धावच्छिन्नाभावप्रतियोगितानवच्छेदकत्वकत्वलक्षणं व्याप्तिस्वरूपमुक्तं, तदेव यावत्साध्यव्यापकव्यापककत्वरूपं प्रथममनौपाधिकत्वम् । यच्च स्वसमानाधिकरणतत्सम्बन्धावच्छिन्नाभावप्रतियोगितावच्छेदकत्वव्यापक-साध्यसमानाधिकरण-तत्सम्बन्धावच्छिन्नाभावप्रतियोगितावच्छेदकत्वकत्वरूपं व्याप्तिस्वरूपमुक्तं, तद् द्वितीयम् यावत्साधनाव्यापकाव्यापकसाध्यकत्वरूपमनौपाधिकत्वम् । तत्र प्रथमे तादृशतादृशप्रतियोगितानवच्छेदकत्वरूपाभावद्वयप्रवेशः, द्वितीये च न तथेति स्पष्टमेव ।

(ख) 'पूर्वमेवे'ति—विशेषव्याप्तिप्रकरणव्याख्यानावसर इत्यर्थः ।

(ग) स्वसामानाधिकरण्येत्यादिसम्भावितलक्षणे बहुव्रीहिणा स्वपदार्थे हेतौ स्वसामानाधिकरण्यव्यापकतावच्छेदकसाध्यसामानाधिकरण्यत्वस्य सम्बन्धित्वं प्रत्याय्यते । तद्घटकः सम्बन्ध एव, प्रकृतग्रन्थोक्तसम्बन्धपदार्थः । स्ववृत्त्यवच्छेदकत्वेत्यादिप्रकृतसम्बन्धस्वरूपबोधकवाक्यघटक-स्वपदं हेतुसामानाधिकरण्यव्यापकतावच्छेदकसाध्यसामानाधिकरण्यत्वपरम् ।

सामानाधिकरण्याभावत्वकत्वमित्यत्र तादृशाभावत्वस्य हेतौ सम्बन्धः स्व(१)निरूपक-सामानाधिकरण्यप्रतियोगित्वमिति(घ) लाघवम् ।

एवं व्यापकत्वं तत्समानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकत्वम्, तच्च सामानाधिकरण्यव्यक्तीनां भेदान्न(२) सम्भवतीत्यतस्तत्र तत्सामानाधिकरण्यत्वे तत्समानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकत्वादिरूपं तद् वाच्यम् । तथा च सामानाधिकरण्यत्वत्वादिप्रवेशादति(३)गौरवम्, अतोऽभावस्याखण्डत्वादन्योन्याभावप्रतियोगितानवच्छेदकत्वमेव व्यापकत्वमक्षुण्णमित्यतोऽप्येवमभिधानमिति मन्तव्यम् । तादृशव्यापकतावच्छेदक-स्वसामानाधिकरण्यसामान्याभावत्वकत्वमित्यत्यन्ताभावघटितव्यापकत्वाभिप्रायेण, अन्योन्याभावघटित(४)तन्निवेशे तादृशव्यापक-स्वसामानाधिकरण्यसामान्याभावकत्वं तद् बोध्यमिति ।

'साध्यतावच्छेदके'त्यादि,—समवायेन साध्यतायां वह्निमान् धूमादित्यादावतिव्याप्तिवारणाय 'साध्यतावच्छेदकसम्बन्धेने'ति । वह्निमान् धूमादित्यत्र सद्धेतौ साध्य(५)सामानाधिकरण्याभाववतो धूमावयवरूपस्य धूमसामानाधिकरण्यसत्त्वादव्याप्ति(६)वारणाय 'हेतुतावच्छेदकसम्बन्धेने'ति । द्रव्यं सत्त्वा(७)दित्यादावतिव्याप्तिवारणाय 'एकेने'त्यादि । एकत्वस्याननुगतत्वादाह—'विशेषणताविशेषेण वे'ति ।

इति श्रीमद्भवानन्दीये तत्त्वचिन्तामणिदीधितिप्रकाशे अनुमानखण्डे व्याप्त्यनुगमप्रकरणव्याख्या समाप्ता ।

(१) आदर्शविशेषे 'स्वाश्रयनिरूपके'ति । (२) 'भेदे न' इति पाठान्तरम् । (३) 'प्रवेशादपि' इति पाठान्तरम् । (४) 'घटितव्यापकत्वप्रवेशे तु' इति पाठान्तरम् । (५) आदर्शविशेषे 'साध्ये'ति नास्ति । (६) 'त्तदव्याप्ति' इति पाठान्तरम् । (७) 'द्रव्यं सत्त्वादित्यत्र साध्याधिकरणे सम्बन्धसामान्येनावृत्तौ गगनादौ हेत्वसामानाधिकरण्यसत्त्वादतिव्याप्तिवारणाय' इति क्वचित् पाठः ।

स्ववृत्त्यवच्छेदकत्वं साध्यसामानाधिकरण्यत्वनिष्ठं हेतुसामानाधिकरण्यव्यापकतावच्छेदकत्वम्, तत्प्रतियोगिनी (तन्निरूपिका) या व्यापकता, तत्प्रतियोगि यत् सामानाधिकरण्यं, तत्प्रतियोगित्वरूपपरम्परासम्बन्धवत्त्वं प्रकृतहेताविति समन्वयः ।

(घ) अत्र सम्बन्धघटकस्वपदार्थः-स्व-(हेतु)सामानाधिकरण्याभावत्वं, तन्निरूपकं सामानाधिकरण्यं, तत्प्रतियोगित्वं ( तन्निरूपकत्वम् ) हेताविति । लाघवन्तु स्पष्टमेव ।

# अथ सामान्यलक्षणाप्रकरण

## तत्त्वचिन्तामणिः

व्याप्तिग्रहश्च सामान्यलक्षणाप्रत्यासत्त्या सकलधूमादिविषयकः। कथमन्यथा पर्वतीयधूमे व्याप्त्यग्रहे तस्मादनुमितिः? सा च इन्द्रियसम्बद्धविशेषणता, अतिरिक्तैव वा। तद्विशेष्यकप्रत्यक्षे तदिन्द्रियसन्निकर्षस्य हेतुत्वेन अनागतादौ संयोगादेरभावादिति वदन्ति।

## दीधितिः

प्रसङ्गात् सामान्यलक्षणां व्यवस्थापयितुमाह(अ) 'व्याप्तिग्रहश्चे'ति। केचित्तु समानाधिकरणयोरेव व्याप्तिरिति पक्षे पर्वतीय(१)धूमे वह्निव्याप्तिविशिष्टधीर्न पर्वतीयवह्निव्याप्तिग्रहं विना, स च न सामान्यलक्षणां विनेति(२) कथितव्याप्तिविशिष्टेत्यादिलक्षणोपोद्घातोऽपीत्याहुः।

## दीधितिप्रकाशः

'प्रसङ्गा'दिति,—कार्य्येण व्याप्तिग्रहेण(३) स्मृतायाः कारणीभूतसामान्यलक्षणाया अनुपेक्षणीयत्वादित्यर्थः(आ)। 'समानाधिकरणयो'रिति(४),—अन्यथा तादृशवह्निसमानाधिकरणवृत्तिधूमत्वरूपाया व्याप्तेर्महानसीयधूमवह्निसन्निकर्षकाल एव गृहीतायाः स्मरणसम्भवेन पर्वतीयवह्नेरग्रहेऽपि पर्वतीयधूमे विशिष्टज्ञानसम्भवादिति भावः। 'स च' पर्वतीयवह्निव्याप्तिग्रहश्च। 'लक्षणे'ति, - अनुमितिलक्षणेत्यर्थः। 'उपोद्घातोऽपी'त्यपिना प्रसङ्गसङ्गतिः समुच्चीयते। केचिदित्यस्वरसबीजन्तु पर्वतीयवह्निव्याप्तिग्रहं विनापि द्रव्यत्व-पृथिवीत्वव्याप्तिग्रहाधीनानुमितिं महानसीय-

---

(१) 'पर्वतीये' इति पाठान्तरम्। (२) 'स च सामान्यलक्षणां विना नेति' इति पाठभेदः। (३) 'व्याप्तिग्रहात्मककार्य्यज्ञानेन' इति पाठान्तरम्। (४) 'समानाधिकरणयोरेवे'ति पाठान्तरम्।

---

(अ) व्यवस्थापयितुमित्यत्र सन्निकर्षत्वेनेति योजनीयम्। अन्यथा सामान्यज्ञानरूपाया ज्ञातसामान्यरूपाया वा सामान्यलक्षणायाः प्रत्यासत्तेः स्वरूपतः सर्वसम्मतत्वेन तद्व्यवस्थापनस्यासङ्गत्वापत्तेः।

(आ) स्मृतत्वे सति उपेक्षानर्हत्वस्य प्रसङ्गरूपत्वादिति भावः।

वह्निधूमव्याप्तिप्रत्यक्षाधीनां सिषाधयिषाधीनां वह्न्यनुमितिं वादाय जाति(क)घटितलक्षणस्य पर्वतो वह्निमानित्यनुमितावपि सत्त्वान्नोपोद्घातावसर इति ।

## दीधितिः

अत्र च सामान्यं लक्षणं स्वरूपं यस्या इत्यर्थे सामान्यमेव प्रत्यासत्तिः । सामान्यं लक्षणं निरूपकं यस्या इत्यर्थे तु तज्ज्ञानम् । तत्राद्यमाह 'सा चेन्द्रिये'ति । इन्द्रियेण सम्बद्धं धूमादि, तस्य विशेषणं तद्विशेष्यकज्ञानप्रकारीभूतो(१) धूमत्वादिरित्यर्थः । विशेषणतेत्यत्र भावार्थो न विवक्षितः(ख) । तत्र विशेषणत्वं यस्या इति बहुव्रीहिर्वा ; सम्बद्धपदस्यैव वा परम्परासम्बद्धस्तत्सम्बद्धविशेष्यकज्ञानप्रकारोऽर्थः । तथा च सैव विशेषणतेत्यर्थः ।

## दीधितिप्रकाशः

सा चेत्यनेन परामृष्टायां सामान्यलक्षणप्रत्यासत्तौ इन्द्रियसम्बद्धविशेषणतेत्यस्य अतिरिक्तैवेत्यस्य चाभेदेनान्वयरक्षार्थं उभयत्रैव सामान्यलक्षणप्रत्यासत्तिशब्दस्य सत्त्वं(२)प्रदर्शयति 'अत्र चे'ति । 'तज्ज्ञान'मिति, सामान्यज्ञानस्य सामान्यनिरूप्यत्वादिति भावः ।

नन्वेवं धूली(३)पटले धूमत्वभ्रमे तदुत्तरं सकलधूमगोचर(४) व्याप्तिग्रहो न स्यात् , धूमत्वस्य धूलीपटलेऽविशेषणत्वादतो विशेषणशब्दार्थमाह– 'तद्विशेष्यके'ति, इन्द्रियसम्बद्धविशेष्यकेत्यर्थः । भावार्थं विवक्षित्वाह(५) 'तत्रे'ति । 'तत्र' इन्द्रियसम्बद्धे । सप्तम्यर्थश्च विशेष्यतासम्बन्धेनावच्छेदकत्वम् । 'विशेषणत्वं' प्रकारत्वम् ।

(१) 'प्रकारो धूमत्वे'ति पाठान्तरम् । (२) 'सत्त्वं दर्शयति' इति पाठान्तरम् । (३) 'धूलि' इति पाठान्तरम् । (४) ''गोचरव्याप्तिग्रह' इति पाठान्तरम् । (५) 'विवक्षयित्वाह' इति पाठान्तरम् ।

(क) जातिघटितलक्षणञ्च 'यां काञ्चिदनुमितिव्यक्तिमादाय तद्व्यक्तिसमवेतानुभवत्वान्यानुभवान्यासमवेतधर्मसमवायित्वम्,' 'व्याप्तिज्ञानत्वावच्छिन्नकारणताप्रतियोगिककार्य्यतावच्छेदकावच्छिन्ना या विशिष्टपरामर्शत्वावच्छिन्नकारणताप्रतियोगिककार्य्यता तत्समानाधिकरणानुभवत्वव्याप्यजातिमत्त्व'मिति च अनुमितिप्रकरणे दीधितिकारेण समुल्लिखितम् ।

(ख) तथा हि विशेषणमेव विशेषणतेति देवताशब्दवत् स्वार्थे तल्प्रत्यय इति भावः । देवशब्दादिव विशेषणशब्दात् स्वार्थे तल्प्रत्ययस्यानुशासनाभावेनासाधुत्वापत्तिशङ्कया द्वितीयप्रकारानुसरणम् । द्वितीयकल्पेऽपि व्यधिकरणबहुव्रीहेः शिष्टानुमत-चक्रपाणिप्रभृतिस्थलातिरिक्तस्थलेष्वसाधुत्वेन तृतीयप्रकाराश्रयणम् ।

नन्वेवं व्यधिकरणबहुव्रीह्यापत्तिरतः प्रकारान्तरमाह—'सम्बद्धपदस्यैवे'ति। परम्परासम्बन्धमेवाह(१) 'तत्सम्बद्धे'ति। 'सैवे'ति,—तान्त्रिकैस्तथैव परिभाषितत्वादिति भावः।

## दीधितिः

अत्र च (ग) बहिरिन्द्रियस्य लौकिकः सम्बन्धो ज्ञानस्य तदिन्द्रियजन्यत्वञ्च नियामकम्(घ)। एवञ्च अणुत्वेन यत्किञ्चिदणूपस्थितावपि सकलाणुगोचरो मानसो बोध इति वदन्ति। एतेन धूलिपटले धूमत्वभ्रमे(२) तत्र च वह्निव्याप्तिग्रहे तत्रासता धूमत्वेन धूमेषु व्याप्त्यग्रहाद् धूमदर्शनाद् वह्न्यनुमितिर्न स्यात् हेत्वभावेन परामर्शानुत्पादात्। किञ्च धर्मिणि दोषवशान्नयनेनागृह्यमाणेन स्मरणप्रकारीभवता सामान्येन गृह्यमाणेन वा लौकिकसन्निकर्षविगमेऽपि चाक्षुषज्ञानापत्तिरिति परास्तम्।

## दीधितिप्रकाशः

'अत्र चे'ति,—इन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारत्व(३) इत्यर्थः। बहिरिन्द्रियस्येत्यत्र बहिःपदस्य फलमाह—'एवञ्चे'ति। ज्ञानलक्षणानिरासार्थं 'यत्(ङ)किञ्चि'दिति। 'वदन्ती'त्यस्वरसः; तद्बीजन्तु सौदामिनीसम्पातस्थले वक्ष्यमाणातिप्रसङ्गवारणाय तदिन्द्रियकरणकतद्धर्मवत्त्वबोधसामग्र्या अपेक्षणीयत्वस्यावश्यं वाच्यत्वेनैवातिप्रसङ्गभङ्गे किमिन्द्रियजन्यत्वादिविशेषणेनेति।

(१) 'सम्बन्धं दर्शयति' इति पाठान्तरम्। (२) 'धूमभ्रम' इति क्वचित् पाठः। (३) 'प्रकारत्वे चेत्यर्थः' इति पाठभेदः।

(ग) 'अत्र चे'त्यत्र घटकत्वं सप्तम्यर्थः। 'अत्र चे'त्यस्य सामान्यलक्षणप्रत्यासत्तिहेतुतायामित्यर्थ इति गदाधरः। एवञ्चेत्यस्य बहिरिन्द्रियेण ज्ञाने जननीये तयोर्नियामकत्वादेवेत्यर्थः।

(घ) नियामकमिति कारणतावच्छेदकतया प्रयोजकमित्यर्थः। तथा च तत्पुरुषीयचक्षुरादिसन्निकर्षविशिष्ट-विशेष्यतानिरूपिता या तत्पुरुषीय-चाक्षुषादिरूप-विजातीय-ज्ञानप्रकारता तद्विशिष्टधूमत्वत्वादिना कारणता तत्पुरुषीय-धूमत्वप्रकारकधूमादिचाक्षुषत्वादिना कार्य्यतेति भावः; चक्षुरादिजन्यज्ञानत्वस्य कारणतावच्छेदकत्वे गौरवात् तत्तदिन्द्रियजन्यत्वमित्यस्य तत्तदिन्द्रियप्रयोज्यं चाक्षुषत्वादिवैजात्यमित्यर्थाभ्युपगमात्। निरुक्तकार्य्यकारणभावे कार्य्यस्यालौकिकं मुख्यविशेष्यत्वं, कारणस्य च समवायः सम्बन्धः। तेन प्राथमिकधूमत्वविशिष्टलौकिकचाक्षुषे धूमकालीनोऽयं घट इत्यादिधूमोपनीतचाक्षुषे वा न व्यभिचार इति जगदीशाद्यनुमतं तत्त्वम्।

(ङ) अन्यथा तु प्रथमं सकलाणूनामुपस्थितौ ज्ञानलक्षणयैवोपपत्तिः स्यादिति भावः।

विशेषणशब्दस्य ज्ञानप्रकारार्थकरणे वीजं दर्शयति—'एतेने'त्यादिना। 'धूलीपटल' इति सावधारणम्। तेन धूलीपटल एव वह्निसहचारग्रहात् प्रथमतो वह्निव्याप्तिग्रह इत्यर्थः। अन्यथा पूर्वं धूमेऽपि व्याप्तिग्रहसम्भवे तत्रैव सामान्यलक्षणया सकलधूमगोचरव्याप्तिग्रहसम्भवे तन्मूलकस्मृत्या परामर्शसम्भवादिति भावः। 'हेत्वभावेने'ति,—धूमीयव्याप्तिग्रह(१)रूपहेत्वभावेनेत्यर्थः। चरमोक्तविशेषणशब्दस्य अन्यार्थकरणे वीजम् उत्कटशिष्यजिज्ञासाविषयतया प्रथमतः प्रदर्श्य चरमोक्तक्रमेणैव विशेषणान्तरयोरपि(च) फलं दर्शयति 'किञ्चे'त्यादिना। तत्र 'ज्ञानस्य तदिन्द्रिय-जन्यत्व'मित्यस्य फलमाह—'धर्मिणी'ति। लौकिकसन्निकर्षकाले तद्ग्रह-सम्भवादाह(२)—'दोषवशा'दिति। ज्ञानप्रकारत्वरक्षणार्थमाह—'स्मरणे'ति। सामा-न्येन चाक्षुषज्ञानापत्तिरिति योजना। 'लौकिकः सम्बन्ध' इत्यस्य फलमाह—'गृह्य-माणेन वे'ति। 'नयनेने'त्यस्य अनुषङ्गेणान्वयः।

'विगमेऽपी'ति,—न च क्षणमात्रं सामान्यलक्षणाजन्यज्ञानोत्पत्तौ का क्षतिरिति वाच्यम्; तादृशसामान्य(३)ज्ञानमूलकसामान्यजन्यज्ञानधाराया एव सामग्रीसम्भवेना-पादनात्। न च तदनुभवसिद्धमिति भावः।

## दीधितिः

सामान्यञ्च सखण्डाखण्डभेदेन द्वेधा। सखण्डे त्वखण्डमेव परम्परासम्बद्ध प्रत्यासत्तिः। येन सम्बन्धेन चेन्द्रियसम्बद्धे सामान्यं ज्ञायते, तेन सम्बन्धेनाधि-करणानां सा(४) प्रत्यासत्तिरिति।

## दीधितिप्रकाशः

ननु धूमत्ववह्नित्वप्रत्यासत्त्या निखिलधूमवह्निग्रह(५)सम्भवेऽपि निखिल-वह्निमतां वह्निमत्त्वात्मकसामान्याभावेनाग्रहात्(६) वह्निसंयोगिसंयोगित्वलक्षण(छ) सामानाधिकरण्यग्रहासम्भवः। न च वह्निसंयोगित्वेन सामान्येन सर्वेषां वह्निमतां ग्रह इति वाच्यम्, वह्निसंयोगित्वस्य वह्निसंयोगात्मकतया(७) नानात्वादतो व्याप्ते-

(१) 'व्याप्तिज्ञान' इति पाठान्तरम्। (२) 'तद्ग्रहासम्भवादाहे'ति पाठान्तरम्। (३) 'सामान्यजन्यज्ञाने'ति पाठान्तरम्। (४) 'सा' इति न सार्वत्रिकम्। (५) 'वह्निव्याप्तिग्रह' इति पाठान्तरम्। (६) वह्निमतामेकसामान्याभावेनाग्रहात्' इति पाठान्तरम्। (७) 'संयोगात्मकत्वेन' इति पाठान्तरम्।

(च) 'विशेषणान्तरयोरपी'ति—लौकिकत्वतदिन्द्रियजन्यत्वयोरपीत्यर्थः।

(छ) वह्निसंयोगिसंयोगित्वलक्षणेत्यस्य संयोगसम्बन्धेन वह्निमति संयोगसम्बन्धावच्छिन्न-वृत्तित्वलक्षणेत्यर्थः। तेन व्याप्तौ वह्निसंयोगस्य धूमसंयोगस्य च संसर्गतया प्रवेशोऽपि न क्षतिरिति भावः।

र्नानात्वाभिप्रायकं 'व्याप्तिग्रहश्च सामान्यप्रत्यासत्त्ये'ति मूलमनुपपन्नमत आह—'सामान्यञ्चे'ति। 'सखण्डं' प्रत्येकमनेकावृत्तित्वे सति(१) अनेकवृत्तितावच्छेदकानुगत(झ)रूपावच्छिन्नं वह्निमत्त्वादिकम्। 'अखण्डम्' अनेकवृत्त्येकं(ञ) घटत्वादिकम्(ञ)। 'सखण्डे' वह्निमत्त्वादौ। 'अखण्डम्' वह्नित्वादिकम्। 'परम्परासम्बद्धम्' स्वाश्रयद्वारकसम्बन्धेन प्रत्यासन्नम्।

ननु समवायेन पुरोवर्त्तिनि घटत्वप्रकारकज्ञाने घटत्वसामान्यलक्षणया कालादेरपि भानं स्यात्, तत्रापि कालिकतया घटत्वाश्रयत्वादत आह—'येने'ति(२)। इत्थञ्च वह्निमत्त्वदण्डित्वादौ परम्परासम्बन्धेन वह्निर्दण्ड इत्याकारकज्ञानानन्तरमेव सामान्यजज्ञानमिति ध्येयम्। वस्तुतस्तु(ट) सामान्यभेदेन कार्य्यकारणभावस्यापि भिन्नतया वह्नित्वरूपेण वह्निप्रकारकज्ञानस्यैव(ठ) वह्निसामान्याश्रयप्रत्यक्षत्वं कार्य्यतावच्छेदकं कल्प्यते।

न च परम्परासम्बन्धेन वह्नित्वप्रकारकज्ञानस्य तेन सम्बन्धेन वह्नित्वाश्रयप्रत्यक्षं प्रति कारणत्वस्यावश्यकल्पनेनैव(३)यावद्वह्निमत्प्रत्यक्षोपपत्तौ न कार्य्यकारणभावान्तरकल्पन(४)मिति वाच्यम्, परम्परासम्बन्धेन वह्नित्वानवगाहि-वह्निमानिति-बोधानन्तरं निखिलवह्निमत्प्रत्यक्षस्य सर्वानुभवसिद्धतया तदुपपत्तये तथा कल्पनादिति।

(१) ग्रन्थविशेषे 'प्रत्येकमनेकावृत्तित्वे सती'ति पाठो नास्ति। (२) 'येन चेति' इति पाठान्तरम्। (३) 'कल्पने तेनैव' इति क्वचित् पाठः। (४) 'भावान्तरं कल्प्यत इति' इति पाठान्तरम्।

---

(झ) जगदीशस्तु 'सखण्डं स्वरूपतो ज्ञानप्रकारीभूतभिन्नम्। अखण्डं स्वरूपतो ज्ञानप्रकारीभूतम्' इति व्याचष्ट।

(ञ) अखण्डधर्मे वह्नित्वादावतिप्रसङ्गभङ्गाय सत्यन्तम्। अनुगतभिन्नत्वाद्यवच्छिन्ने रूपभिन्नत्वादावतिव्याप्तिवारणाय 'अनेकवृत्तितावच्छेदके'ति।

(ञ) एकव्यक्तिमात्रे तत्तद्रूपादावतिप्रसङ्गवारणाय वृत्त्यन्तम्। वह्निमत्त्वादौ तद्वारणाय एकमिति।

(ट) परम्परासम्बन्धेन स्वरूपतो वह्नित्वादिप्रकारकस्य वह्निर्दण्ड इत्यादिज्ञानस्याप्रामाणिकत्वादाह वस्तुतस्त्विति। परे तु परम्परासम्बन्धेन वह्नित्वमनवगाह्य वह्निमानितिज्ञानोत्तरं सकलवह्निमतां प्रत्यक्षानुपपत्तिमाशङ्क्य वस्तुतस्तु-कल्प इति स्वयमेवाग्रे वक्ष्यमाणतया तदेवास्य बीजमिति प्राहुः।

(ठ) एतच्च सामान्यज्ञानस्य कारणत्वमभिप्रेत्योक्तम्। उत्तरत्रापि तथा।

## दीधितिः

ननु यत्र नानाधिकरणप्रत्यासन्न(१) एकव्यक्तिर्घटादिस्तत्(२)प्रागभावादिर्वा अनित्यः प्रत्यासत्तिः, तत्र तदभावदशायां तया प्रत्यासत्त्या तज्(३)ज्ञानानुदयप्रसङ्ग इति चेन्न ; तत्रापि तत्तद्व्यक्तिद्वारा(४) प्रत्यासन्नस्य घटत्वादेरेव प्रत्यासत्तित्वात्। एतदस्वरसेनैव वा द्वितीयं पक्षमाह, 'अतिरिक्तैव वे'ति। 'अतिरिक्ता' इन्द्रियसम्बद्धे(५)तादृशसामान्यज्ञानात्मिका। अतीताद्यनुरोधात् सामान्यज्ञानं प्रत्यासत्तिः।

## दीधितिप्रकाशः

अखण्ड एवाशङ्कते 'नन्वि'ति। सामान्यत्वलाभायोक्तं,—'नानाधिकरणे'ति। अखण्डत्वलाभायोक्तम् 'एकव्यक्ति'रिति। सखण्डत्वे तु तत्तत्(६)परम्परासम्बन्धेन घटत्वादेरेव आसत्तितया(७)उक्तत्वेनाशङ्काया एवानवतारादिति भावः। परम्परासम्बन्धघटक(८)बाहुल्य(ड)प्रदर्शनाय(९) 'तत्प्रागभावादि'रिति। आदिपद-(१०) ग्राह्येषु नित्यं व्यावर्त्तयति 'अनित्य' इति। 'तत्र' कपालादौ। 'तदभावदशायां' घटादिनाश इत्यर्थः। 'तत्रापि' तादृशकपालादावपि। 'तत्तद्(११)व्यक्तिद्वारा' तत्तद्(१२)घटव्यक्तिद्वारा, प्रागभावव्यक्तिद्वारा वा।

नन्वेवं तद्व्यक्तित्वेन घटव्यक्तिभाने तत्प्रत्यासत्तिजं ज्ञानं न स्यात्, तद्व्यक्तित्वस्य तद्(१३)वृत्तिरूपाद्यात्मकतया अतीतत्वात्। किञ्च(ढ)तादृशपरम्परासम्बन्धेन घटत्वादेरज्ञाने कथं तस्या(१४)सत्तित्वमत आह 'एतदस्वरसेनैव वे'ति।

---

(१) 'सम्बद्ध' इति पाठान्तरम्। (२) 'घटादिस्तत्तत्' इति पाठान्तरम्। (३) पुस्तकविशेषे 'तत्'पदं नास्ति, 'तये'त्यत्र च 'तथे'ति पाठान्तरम्। (४) 'तद्व्यक्तिद्वारा' इति पाठभेदः। (५) 'सम्बद्धतादृशे'ति पाठान्तरम्। (६) पुस्तकविशेषे 'तत्तत्' इति नास्ति। (७) 'घटत्वादेरासत्तितया' इति पाठान्तरम्। (८) 'सिद्धान्ते परम्पराघटक' इति पाठान्तरम्। (९) पुस्तकविशेषे 'प्र'शब्दो नास्ति। (१०) 'आदिना ग्राह्येषु' इति पाठान्तरम्। (११) 'तद्व्यक्तिद्वारा' इति पाठान्तरम्। (१२) 'तद्घट' इति पाठान्तरम्। (१३) 'तद्व्यक्तिरूपे'ति पाठान्तरम्। (१४) 'तस्य प्रत्यासत्तित्व' इति पाठान्तरम्।

---

(ड) अत्र परम्परासम्बन्धः स्वाश्रयप्रतियोगिकप्रागभाववत्त्वादिः। स्वाश्रयघटवत्त्वरूपसम्बन्धघटकापेक्षया निरुक्तसम्बन्धघटकपदार्थानां बाहुल्यं बोध्यम्। तादृशबाहुल्यप्रदर्शनञ्च अतिपरम्परया प्रत्यासन्नस्यापि प्रत्यासत्तित्वमिति व्युत्पादयितुम्।

(ढ) तत्र तद्व्यक्तित्वस्य तद्वृत्तिरूपाद्यात्मकतयातीतत्वेऽपि घटत्वादेरेव नित्यस्य परम्परया प्रत्यासत्तित्वसम्भवाददोष इत्यत आह किञ्चेति।

क्लृप्तपदार्थातिरिक्त(१)स्यानभ्युपगमादन्यथा व्याचष्टे 'अतिरिक्ते'ति। तादृशं तदिन्द्रियजन्यं यत् सामान्यज्ञानं तदात्मिकेत्यर्थः। अत्र कल्पे(२)इन्द्रियभेदेन पुरुषभेदेन च गुरुतरानन्तकार्यकारणभावप्रसङ्गाल्लौकिकसन्निकर्षस्य संयोगसंयुक्तसमवायादिरूपतया अननुगतस्य सर्वसाधारणस्य लौकिकसन्निकर्षत्वस्यैकस्याभावान्नवीनमतमाह,—'अतीते'ति(३)। आदिना अनागतपरिग्रहः। 'सामान्यज्ञानं' सामान्यज्ञानमात्रम्। न तु तदिन्द्रियजन्यत्वं तदिन्द्रियसम्बद्धे सामान्यप्रकारकत्वं वा विवक्षितमित्यर्थः। एवञ्च(४)स्मरणात्मकं निर्विकल्पकात्मकञ्च(ण)सामान्यज्ञानमप्यत्र कल्पे प्रत्यासत्तिरिति ध्येयम्।

## दीधितिः

अपेक्षणीयञ्च तदिन्द्रियकरणकतद्धर्मवत्त्वबोधसामग्र्यन्तरम्। अत एवान्धतमसे सौदामनी(५)सम्पातजनितेऽपि द्रव्यप्रत्यक्षे चरमे(६) न चाक्षुषो निखिलद्रव्यसाक्षात्कारसन्तान इति तु नव्याः।

## दीधितिप्रकाशः

पूर्वोक्ता(त)तिप्रसङ्गवारणायाह—'अपेक्षणीयञ्चे'ति। 'तदिन्द्रियकरणके'ति स्वरूपकथनमात्रम्(थ); त्वाचादिसामग्र्याश्चाक्षुषादिकं प्रति सामान्यत एव विरोधित्वेनैवानतिप्रसङ्गात्। वस्तुतस्तु सामग्रीपदमसाधारणकारणपरम्, न तु

(१) 'पदार्थातिरेकित्वस्य' इति पाठान्तरम्। (२) 'अत्र कल्पे' इत्यारभ्य 'एकस्याभावा'दित्यन्तग्रन्थः पुस्तकविशेषे न दृश्यते। (३) 'अतीताद्येती'ति पाठान्तरम्। (४) 'इत्थञ्च स्मरणात्मकं निर्विकल्पकात्मकं वा' इति पाठान्तरम्। (५) 'सौदामिनी' इति क्वचित्। (६) 'चरमम्' इति पाठभेदः।

(ण) ज्ञानस्य तदिन्द्रियजन्यत्वाविवक्षया स्मरणात्मकस्य सामान्यप्रकारकत्वाविवक्षया च निर्विकल्पकस्य प्रत्यासत्त्वोपपत्तिरिति बोध्यम्।

(त) 'पूर्वोक्ते'ति—धर्मिणि दोषवशादित्यादिना सन्दर्भेण दीधितिकारेण सूचितपूर्वेत्यर्थः।

(थ) मात्रपदेन तादृशरूपेण निवेशव्यवच्छेदः। अथैवं यत्र घटस्य त्वाचादिसामग्री, तत्र तस्या अपि घटरूपधर्मबोधकसामग्रीतया घटचाक्षुषापत्तिरित्यत आह त्वाचादीत्यादि। स्वरूपकथनमात्रे अपरितोषादाह वस्तुतस्त्विवति।

फलोपधायक(द)परम् ; अत एवाह—'अन्तर'मिति-सामान्यज्ञानातिरिक्तमित्यर्थः। तथा च तादृशचाक्षुषादिहेतूनामालोकादीनां समवधानमपेक्षितम्। तेषां(ध) हेतुत्वञ्च तेन तेन रूपेण चाक्षुषादिज्ञानं फलमित्याशयेनैव 'तदिन्द्रियकरणके'त्युक्तमिति मन्तव्यम्। अत्र च सुरभि चन्दनं घटाभाववद् भूतलमित्यादिचाक्षुषे सौरभत्वेन घटत्वेन च निखिलानां सौरभाणां घटानाञ्च(१)यदि विषयता अनुभवविरुद्धा, तदा तद्धर्मप्रकारक-लौकिकचाक्षुषादिसामग्री तद्धर्माश्रय-चाक्षुषादिहेतुत्वेन वाच्या।

लौकिकत्वञ्च तद्धर्मप्रकारतानिरूपितविशेष्यता यदंशे तदंशे बोध्यम्। तेन यत्किञ्चिद्विशेष्यांशे लौकिकस्य सामान्यांशे अलौकिकस्यापि प्रत्यक्षस्य निखिल-सामान्याश्रयविषयकत्व-(२)मुपपन्नम्।

वस्तुतस्तु बहिरिन्द्रियस्य स्वयोग्यमुख्यविशेष्यकज्ञानजनकत्वरक्षणाय सौर-भत्वेनोपनीतसौरभमुख्यविशेष्यकचाक्षुषज्ञानवारणाय(च) सौरभत्वेन सौरभ(न)-मुख्यविशेष्यकचाक्षुषं प्रति सौरभत्वविशिष्टलौकिकचाक्षुषसामग्रीत्वेन हेतुता वाच्या। तथा चैतावतैवानतिप्रसङ्गे(प)सामान्यलक्षणा(३)जन्यज्ञानं प्रति तद्धर्मप्रकारकबोध-सामग्र्या हेतुतायां न लौकिकत्वस्य निवेशः। सुरभि चन्दनमिति चाक्षुषे पूर्वानु-पस्थितसौरभाणां विशेषणत्वासम्भवात्, सौरभत्वसामान्यजज्ञाने(४)मुख्यविशेष्यत्व-स्यैव सम्भवात्, सौरभत्वविशिष्टलौकिकचाक्षुषसामग्री चन्दने सौरभमिति चाक्षुष-भ्रमदशायामेव प्रसिद्धा(५)।

(१) 'घटानां सौरभाणाञ्च' इति पाठभेदः। (२) 'विषयकप्रत्यक्षजनकत्व' इति पाठान्तरम्। (३) 'सामान्यजज्ञानं प्रति' इति पाठान्तरम्। (४) 'सामान्यजन्यज्ञान-मुख्य' इति पाठान्तरम्। (५) 'सुप्रसिद्धा' इति पाठान्तरम्।

(द) फलोपधायकपरत्वे सामान्यज्ञानघटितस्यैव कारणकलापस्य फलोपधायकत्वेन तत्र सामान्यज्ञानातिरिक्तस्वरूपान्तरपदार्थासङ्गतिः व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकैकदेशा-भेदस्यानभ्युपगमादिति भावः।

(ध) 'तेषा'मिति—आलोकादीनामित्यर्थः। 'तेन तेन रूपेणे'ति-आलोकत्वादिरूपेणेत्यर्थः।

(न) अत्र सौरभपदं सौरभत्वविशिष्टपरम्, वैशिष्ट्यञ्च वैज्ञानिकमुपादेयम्। तेन न तादृशचाक्षुषस्याप्रसिद्धिः। उत्तरत्र सौरभत्वविशिष्टेत्यत्रापि तथैव वैज्ञानिकवैशिष्ट्योपादानाच्च तादृशसामग्र्यप्रसिद्धिः।

(प) 'अनतिप्रसङ्ग' इत्यस्य सुरभि चन्दनमिति चाक्षुषज्ञानस्य सकलसौरभविषयकत्वा-पत्तिविरह इत्यर्थः।

न च येनातीन्द्रियमात्रवृत्ति(१)धर्मेण कदापि न तादृशो(२) भ्रमस्तत्राप्रसिद्धया(क) तादृशकार्य्यकारणभावस्याकल्पनादुपनीततद्धर्मवद्(३)विशेष्यकालौकिकचाक्षुषस्य कथं वारणमिति वाच्यम्, तत्र तेन रूपेण तद्धर्माश्रयविशेष्यक-चाक्षुषस्यापाद्यस्या(४) प्रसिद्धेरिति दिक्। 'अत एव' उक्तसामग्र्या अपेक्षणीयत्वादेव। 'सौदामनी'ति,—(५) आलोकस्य उत्तरकालासत्त्वप्रतिपत्तये तदिन्द्रियजन्यत्वसम्पादनाय च उक्तम्। 'चरमे'(६) सौदामनीसम्पातजनितचक्षुर्जन्यद्रव्यत्वप्रकारकज्ञानोत्तरम्। आलोकापेक्षयैव च यत्किञ्चिद्द्रव्ये चक्षुर्लौकिकसन्निकर्षस्यापि सत्त्वमादर्शितम्(७)।

'निखिलद्रव्ये'ति द्रव्यत्वसामान्यलक्षणामधिकृत्य। ननु व्यवसीयमानस्य द्वित्रि(:) साक्षात्कारस्य स्वीकारे बलवत्तर(८) बाधकाभावादाह 'सन्तान' इति। सौदामनी(९) सम्पातजनितप्रत्यक्षमूलकप्रत्यक्षस्यापि तदिन्द्रियजन्यत्वात् तादृशचाक्षुषधाराया एवापाद्यत्वात्। न चैतदानुभविकमिति(ख) भावः।

## दीधितिः

इयञ्च धर्मविषयकं ज्ञानं धर्मिणां प्रत्यासत्तिः, इतरा तु यद्विषयकं ज्ञानं तस्य। अत एव सुरभि चन्दनमित्यादौ सौरभत्वादेरपि भानमिति।

## दीधितिप्रकाशः

ननु अस्या ज्ञानात्मकत्वे ज्ञानलक्षणातोऽभेद इत्यत आह 'इयञ्चे'ति। 'धर्मिणां' यद्धर्मविषयकं ज्ञानं तदाश्रयाणाम्। 'इतरा' ज्ञानलक्षणा। 'अत एव' ज्ञानलक्षणात एव, न तु सामान्यलक्षणातः; सौरभत्वस्य स्वरूपत एव प्रकारतया तद्वृत्तिधर्मस्य

(१) 'वृत्तिना' इति क्वचित् पाठः। (२) 'तादृशभ्रम' इति पाठान्तरम्। (३) 'तद्धर्माश्रय' इति पाठान्तरम्। (४) 'चाक्षुषस्याप्रसिद्धेरिति' इति पाठान्तरम्। (५) 'सौदामिनी' इति पाठान्तरम्। (६) 'चरमम्' इति पाठान्तरम्। (७) 'सत्त्वं दर्शितम्' इति पाठान्तरम्। (८) 'बलवत्तरे'ति पुस्तकविशेषे न दृश्यते। (९) 'सौदामिनी' इति पाठान्तरम्।

(क) 'अप्रसिद्धेय'ति तादृशचाक्षुषसामग्र्या इति शेषः।

(ख) 'एतदि'ति तादृशचाक्षुषधाराया जननमित्यर्थः।

अज्ञानात्। सामान्यलक्षणया तद्भानासम्भवात्(१)। नवीनमते पूर्वोक्तयुक्त्या(भ) विशेष्ये लौकिकसन्निकर्षस्यानपेक्षणात् सौरभस्य सामान्यलक्षणयापि भानसम्भवात् तद्भानार्थं(२) ज्ञानलक्षणाया अनावश्यकत्वात् सौरभत्वपर्य्यन्तानुधावनम्। अपि-कारेण प्रमुष्टतत्ताक-(म) रजतत्व-प्रकारकशुक्तिस्मरणमूलके रजतत्ववदित्याकारके उपनीतभाने शुक्तेरपि भानं समुचितम्; तत्र शुक्तिवृत्तिधर्मस्याज्ञानेन सामान्य-लक्षणाया असम्भवादिति।

अत्रेदमवधेयम्;—स्व(३)संयोगाजन्य(य) स्वविषयकज्ञानाजन्यघटप्रत्यक्षं प्रति घटत्वज्ञानत्वेन न हेतुता, द्रव्यत्वादिज्ञानादपि घट(४)प्रत्यक्षोदयात्। घटत्वातिरिक्त-घटवृत्तिधर्मज्ञानाजन्यत्वेन विशेषणेऽपि घटत्वद्रव्यत्वोभयसमूहालम्बनजन्यस्थले एवं तादृशधर्मत्रयज्ञानजन्यस्थले च अपरापर(र)कार्य्यकारणभावस्यानन्तस्य कल्पनापत्तिः। तस्मात् घटत्वप्रकारकघटप्रत्यक्षं प्रति घटत्वज्ञानत्वेन हेतुतेति। घटत्वनिर्विकल्प-कोत्तरं चक्षुःसंयुक्तघटस्य(५) प्रत्यासत्तिद्वयेनैव(ल) ग्रहे बाधकाभाव इति।

---

(१) 'तज्ज्ञानासम्भवात्' इति पाठभेदः। (२) 'तज्ज्ञानार्थम्' इति पाठान्तरम्। (३) पुस्तकविशेषे 'स्व' पदं नास्ति। (४) पुस्तकविशेषे 'घट' पदं नास्ति। (५) 'घटप्रत्यासत्ति' इति पाठान्तरम्।

---

(भ) 'पूर्वोक्तयुक्त्ये'ति—वस्तुतस्त्वित्यादि-पूर्वसन्दर्भप्रतिपादितयुक्त्येत्यर्थः। 'विशेष्य' इत्यस्य प्रकारात्मकविशेष्य इत्यर्थः। 'अनपेक्षणादि'ति—तत्र सौरभमुख्यविशेष्यकचाक्षुषं प्रत्येव सौरभांशे लौकिकचाक्षुषसामग्र्याः कारणत्वस्य निरूपितत्वात्, प्रकृतस्थले सौरभस्य मुख्य-विशेष्यत्वविरहेण तदपेक्षाविरहादित्यर्थः।

(म) 'प्रमुष्टतत्ताके'ति,—अन्यथा तत्तावगाहितादृशशुक्तिस्मरणमूलकोपनीतभाने शुक्ति-वृत्ति-तत्तात्मक-धर्मज्ञानरूपसामान्यलक्षणयैव शुक्तिज्ञानं भवितुमर्हतीति भावः।

(य) संयोगरूपसन्निकर्षजन्ये घटनिर्विकल्पके व्यभिचारवारणाय स्वसंयोगाजन्यत्वं, तथा संयोगरूपसन्निकर्षानपेक्षिणि ज्ञानलक्षणप्रत्यासत्तिजन्ये घटोपनीतभाने व्यभिचारवारणाय स्वविषयकज्ञानाजन्यत्वं घटप्रत्यक्षे विशेषणम्।

(र) उक्तसमूहालम्बनजन्यप्रत्यक्षस्थले घटत्वद्रव्यत्वोभयातिरिक्तत्वघटितस्य तादृश-धर्मत्रयादिज्ञानजन्यप्रत्यक्षस्थले तादृशधर्मत्रयातिरिक्तत्वादिघटितस्य विभिन्नकार्य्यकारण-भावस्येत्यर्थः।

(ल) 'प्रत्यासत्तिद्वयेने'ति-लौकिकप्रत्यासत्त्या अलौकिकसामान्यलक्षणप्रत्यासत्त्या चेत्यर्थः।

ज्ञानलक्षणायास्तु तद्घटवृत्तिधर्माप्रकारकतद्घटेन्द्रियसंयोगाजन्यतद्घट-प्रत्यक्षं(ष) प्रति तद्घटज्ञानत्वेन हेतुता। येन सम्बन्धेन घटवृत्तित्वं धर्माणाम्, तेन सम्बन्धेन तद्घटे तत्प्रकारकत्वं बोध्यम्; तेन प्रमुष्टतत्ताकस्य(श) समवायेन पटत्व-प्रकारक तद्घटस्मरणाजन्य-घटोपनीत(१)भानस्य कालिकसम्बन्धेन तद्घटवृत्ति यत् पटत्वं, समवायेन तत्प्रकारकस्यापि नासंग्रहः। एवं विषयान्तरेऽप्यूह्यम्।

## तत्त्वचिन्तामणिः

तत्परे न क्षमन्ते(२); तथा हि धूमत्वावच्छिन्ना व्याप्तिः सन्निकृष्टधूमविषये धूमत्वेन प्रत्यक्षेण ज्ञायते, ततः स्मृता सा तृतीयलिङ्गपरामर्शे पक्षनिष्ठधूमवृत्तितया ज्ञायते(३), ततोऽनुमितिः। तदनभ्युपगमेऽपि सन्निकृष्टधूमविषये धूमत्वेन धूमो वह्निव्याप्य इत्यनुभवः(४), तथैव व्याप्तिस्मरणम्, ततो धूमवानयमिति व्याप्तिस्मृति-प्रकारेण धूमत्वेन पक्षवृत्तिधूमज्ञानादनुमितिः, व्याप्त्यनुभवतत्स्मरणपक्षधर्मता-ज्ञानानामेकप्रकारकत्वेनानु(५)मितिहेतुत्वात्।

## दीधितिः

'ततः स्मृता से'ति;—धूमसमानाधिकरणात्यन्ताभावाप्रतियोगिवह्निसमा-नाधिकरणवृत्तिधूमत्वम्, वह्निमदन्यावृत्तित्वम्, वह्निसम्बन्धितावच्छेदकरूपवत्त्वं वा(६) व्याप्तिः। एकैव च सा(७) सर्वधूमसाधारणीति भावः। व्याप्तिनानात्वे तु पर्वतीयवह्नेरसन्निकर्षे तत्सामानाधिकरण्यग्रहायोगः(८)। अन्यदीयवह्निसामानाधि-करण्यस्य तत्र भानाङ्गीकारे भ्रमत्वापत्तिरिति द्रष्टव्यम्।

---

(१) 'तद्घटोपनीत' इति क्वचित्। (२) क्वचित् 'मन्यन्ते' इति। (३) 'गृह्यते' इति क्वापि। (४) 'इत्येवमनुभवः' इति क्वचित्। (५) 'प्रकारत्वेनानु' इति क्वचित्। (६) क्वचित् 'वा'कारो नास्ति। (७) पुस्तकविशेषे 'सा' इति नास्ति। (८) 'ग्रहायोगात्' इति क्वचित्।

(ष) सामान्यलक्षणाजन्यज्ञाने व्यभिचारनिवर्त्तनाय तद्घटवृत्तिधर्माप्रकारकत्वं तद्घटस्य निर्विकल्पकात्मकप्रत्यक्षे व्यभिचारनिरासाय तद्घटेन्द्रियसंयोगाजन्यत्वञ्च प्रत्यक्षविशेषणम्।

(श) अत्रापि प्रकृतघटोपनीतभानस्य प्रमुष्टतत्ताकत्वविरहे सामान्यलक्षणयैव निर्वाहो भवितुमर्हतीति भावः।

## दीधितिप्रकाशः

ननु(१) तत्सामानाधिकरण्यरूपा व्याप्तिः। एवञ्च या स्मृतां तद्विशिष्टबुद्धौ भ्रमत्वापत्तिरतो 'धूमसमानाधिकरणे'ति। लाघवादाह 'वह्निमदन्ये'ति। केवलान्वयिसाधारण्यायाह—'वह्निसम्बन्धिते'ति।

ननु महानसे गृहीतं यत् तादृशमहानसीयवह्निसमानाधिकरणवृत्तित्वविशिष्टधूमत्वं तन्न पर्वतीयधूमे इत्यत आह 'एकैव चे'ति। तथा च तादृशवृत्तित्वोपलक्षितं धूमत्वमेव व्याप्तिः। तत् पर्वतीयधूमेऽप्यविकलमिति भावः। सामानाधिकरण्यरूपव्याप्त्यभिप्रायकत्वे दोषमाह—'व्याप्तिनानात्व' इति। 'तत्र' पर्वतीयधूमे।

## तत्त्वचिन्तामणिः

गवादिपदेष्वपि शक्त्यनुभव-तत्स्मरण-वाक्यार्थानुभवानामेकप्रकारकत्वेन हेतुहेतुमद्भाव इत्यपूर्वं वक्ष्यते। तत्र योग्यतादि(२)बलादपूर्वव्यक्तिलाभः, अनुमाने तु पक्षधर्मताबलाद् धूमो वह्निव्याप्य इत्यनुभवः, न तु सर्वो धूमो वह्निव्याप्य इति, येन सर्वभानार्थं तत्स्वीकारः।

## दीधितिः

'गवादिपदेष्वपी'ति,—शक्त्यनुभव-शक्यस्मरणे हेतू, हेतुमान् वाक्यार्थबोधः। न चैवं जातिशक्तिवादविरोधः, जातौ व्यक्तौ च शक्तिः, परन्तु जातिविषयत्वेनैव ज्ञाता शक्तिः(३) व्यक्तिं स्मारयति अनुभावयति चेति—तदर्थादिति वक्ष्यमाणत्वादिति। अतद्गुणसंविज्ञानबहुव्रीहिना पश्वादिलिङ्गादिपदाभिप्रायेण परीत्या वेत्यपि कश्चित्।

## दीधितिप्रकाशः

ननु शक्त्यनुभव-शक्यस्मरणयोः समानप्रकारकतामात्रेण हेतुहेतुमद्भावे अनुभवाविषयस्यापि(४)स्मृतिविषयत्वे बाधकाभावात् स्मृतेरगृहीतग्राहित्वा(व)पत्तिरत

(१) 'ननु' इत्यत आरभ्य 'धूमसमानाधिकरणेति' इत्यन्तग्रन्थः पुस्तकविशेषे न दृश्यते। (२) 'वशादपूर्वं' इति पाठान्तरम्। (३) पुस्तकविशेषे 'शक्तिः' इति नास्ति। (४) पुस्तकविशेषे 'अपि' शब्दो नास्ति।

---

(व) न च स्मृतेरगृहीतग्राहित्वाभ्युपगमे का हानिरिति वाच्यम्; तथा सति तस्या अगृहीतग्राहित्वेन प्रमात्वप्रसङ्गात्। तत्रापीष्टापत्तौ स्मृतिकरणस्य प्रमाणान्तरत्वप्रसङ्गः। अत एव स्मृतिव्यावृत्तम् अनधिगताबाधितार्थविषयकज्ञानत्वलक्षणं प्रमात्वं तान्त्रिकाः समामनन्ति।

आह—'शक्त्यनुभवे'ति। 'हेतू' प्रयोजके। तेन(स) शक्त्यनुभवस्य शाब्दबोधं प्रति हेतुत्वाभावेऽपि न क्षतिः। पदार्थस्मृतिव्यापारकत्वेन हेतुत्वात्(१)पदज्ञानमिव शक्त्यनुभवोऽपि हेतुरिति कश्चित्। तथा च शाब्दबोधं प्रति यदुभयोर्हेतुत्वं तदेव दृष्टान्तीकृतमिति भावः। 'एवम्' समानप्रकारकत्वेन शक्तिज्ञानस्य शाब्दबोधहेतुत्वाङ्गीकारे। 'जातिशक्तौ'ति,—समानप्रकारकत्वेन हेतुत्वे व्यक्तावपि शक्तिस्वीकारात्, अन्यथा शक्तिज्ञानस्य भ्रमत्वापातात्(ह)।

'जातिविषयत्वेनैवे'ति,—न तु शाब्दबोधविषयीभूतव्यक्तावपि शक्तिग्रहः प्रागपेक्षणीय इत्येवकारार्थः। 'जातिविषयत्वेन' जातिप्रकारकत्वेन। तृतीया च विशेषणे जटाभिस्तापस इतिवत्। तदर्थश्च(२) ज्ञातेत्यत्र ज्ञाने अन्वेति। तथा च जातिप्रकारकज्ञानविषयशक्तिर्व्यक्तिमनुभावयतीत्यर्थः। तथा च गोत्वप्रकारकशक्तिज्ञानत्वेनैव हेतुतेत्यर्थः। एतेन गोपदं गोत्वे शक्तमेवं शक्तिग्रहे समानप्रकारकत्वविरोधः। गोशक्तं गोपदम्, गौः शक्येति वा शक्तिग्रहे जातिविषयकत्वज्ञानानुपपत्तिः, शक्तिग्रहस्यैव गोत्वप्रकारकत्वात् शक्तौ तत्प्रकारकत्वज्ञानानुपपत्तिः। सम्बन्धविधया गौर्गोपदीयेत्याकारक-(३)शक्तिग्रहाङ्गीकारे तु नितरामेवेति दूषणं निरस्तम्।

'पश्वादौ'ति,—नियतसंस्थानव्यङ्ग्यस्यैव तन्मते जातित्वात्,उच्चैःश्रवसि तैजसे वृत्तित्वेन पृथिवीत्वेन सङ्कराच्च(क्ष) न पशुत्वं जातिः ; किन्तु लोमवल्लाङ्गूलवत्त्वमिति भावः।

(१) पुस्तकविशेषे 'हेतुत्वात्' इति नास्ति। (२) आदर्शविशेषे 'च'कारो नास्ति। (३) 'कारेण' इति पाठान्तरम्।

(स) 'तेने'ति हेतुपदस्य प्रयोजकार्थपरत्वोपवर्णनेनेत्यर्थः।

(ह) शक्तिज्ञानस्य शक्यभाववद्व्यक्तिविशेष्यकशक्तिप्रकारकत्वादिति भावः।

(क्ष) स्वव्यभिचारित्व–स्वाव्यापकत्व–स्वसामानाधिकरण्यैतत्त्रितयसम्बन्धेन पृथिवीत्ववैशिष्ट्यस्य पृथिवीत्वसङ्करपदार्थत्वात् पशुत्वे पृथिवीत्वाभाववति तैजसि दैवताश्वे उच्चैःश्रवसि वर्त्तमानतया स्वव्यभिचारित्वदलस्य पृथिवीत्ववद्घटादिवृत्तिभेदप्रतियोगितावच्छेदकत्वस्य सत्त्वेन स्वाव्यापकत्वदलस्य तथा पृथिवीत्ववति गवादौ वर्त्तमानतया स्वसामानाधिकरण्यदलस्य सत्त्वेन पृथिवीत्वसङ्करस्य तत्र लब्धास्पदत्वात् तेनैव तत्र जातित्वाभावः शक्यसाधन इति भावः।

पृ.थवीत्वादिव्याप्यनानापशुत्वस्यैव(क) शक्यत्वे त्वाह 'लिङ्गादी'ति। कार्य्यत्वेन घटादावेव शक्तिग्रहो योग्यताबला(१)दपूर्वव्यक्तिलाभस्य वक्ष्यमाणत्वादिति भावः। तद्गुणसंविज्ञानबहुव्रीहिमप्युपपादयति, 'परे'ति। 'परः' नैयायिकः।

## तत्त्वचिन्तामणिः

अथ वह्निमानयमित्यनुमितिर्विशेषणज्ञानसाध्या(२) विशिष्टज्ञानत्वादिति पर्वतीयवह्निभानार्थं तत्कल्पने धूमेऽपि तथा, क्वचिद्धूमस्यापि व्यापकत्वादिति(३) चेन्न; विशिष्टवैशिष्ट्यज्ञाने विशेषणतावच्छेदकप्रकारकज्ञानस्यावश्यकत्वेन हेतुत्वात्, तच्च वृत्तमेव। न तु विशेषणज्ञानमपि तथा गौरवात्। गौरवमिति विशिष्टज्ञाने युगपद् विशेष्यविशेषण(४)सन्निकर्ष एव कारणम्, न तु निर्विकल्पकं मानाभावात्।

## दीधितिः

'विशेषणज्ञानसाध्ये'ति ;—न च पक्षतावच्छेदकज्ञानजन्यतया सिद्धसाधनम्, यद् यद्विशिष्टज्ञानं तत्तद्धीसाध्यमिति सामान्यव्याप्त्यादरात्, अभावत्वप्रतियोगित्वयोरनुपस्थितयोरप्रकारत्वात्। वह्निविशिष्टज्ञानत्वेन तद्वह्निविशिष्टज्ञानत्वेन वा तज्ज्ञानजन्यत्वसाधनाद्वा विशिष्टवैशिष्ट्यत्याद्य(५)भ्युपगमवादः।

वस्तुतो विशेषणतावच्छेदकादीनां युगपदिन्द्रियसन्निकर्षात् तादृशं प्रत्यक्षम्, अनुमित्यादिस्तु तादृश्येण व्याप्त्यादिग्रहात्। अत एव अनेकव्यक्तिकद्रव्यादिविशेषणतावच्छेदककानुमित्यादौ(६)तद्भानार्थं(७) न सामान्यलक्षणादरः।

---

(१) 'वशादपूर्व' इति पाठान्तरम्। (२) 'जन्या' इति पाठान्तरम्। (३) 'व्यापकत्वाच्चेति' इति पाठान्तरम्। (४) 'विशेष्ये विशेषणे' इति पाठान्तरम्। (५) 'इत्यादिः' इति पाठान्तरम्। (६) 'मित्या तद्' इति पाठान्तरम्। (७) 'ज्ञानार्थम्' इति पाठान्तरम्।

---

(क) पृथिवीत्वादिव्याप्यनानापशुत्वाङ्गीकारे यदेव पशुत्वं पृथिवीत्वव्यभिचारि न तदेव पृथिवीत्वसमानाधिकरणमिति प्रागुक्तत्रितयसम्बन्धेन न पशुत्वे पृथिवीत्ववैशिष्ट्यकसङ्करः सम्भवति। एवं तेजस्त्वादिना तत्र साङ्कर्याभावोऽपि घटनीयः। अतस्तत्र तेन हेतुना न जातित्वाभावः शक्यसाधन इति भावः।

## दीधितिप्रकाशः

'पक्षतावच्छेदके'ति,—पर्वतो वह्निमानित्यनुमितौ पर्वतत्वस्यापि विशेषणत्वादिति भावः।

ननु प्रतियोगित्वस्य सम्बन्धविधया भानसम्भवेऽपि अभावत्वाप्रकारकाभावप्रत्यक्षस्याननुभवात् अभावप्रत्यक्षस्यानुपस्थितमेवाभावत्वं प्रकारोऽनायत्या स्वीकरणीयः। तथा च सामान्यव्याप्तेर्व्यभिचारो यत्त्वतत्त्वाननुगमश्चेत्यत आह—'वह्नी'ति।

ननु यत्र गुञ्जापुञ्जे वह्नित्वभ्रमाद् व्यापकताग्रहस्तत्र तदधीनानुमितौ वह्निज्ञानार्थमुक्त(ख)कार्य्यकारणभावबलात् सामान्यलक्षणासम्भवेऽपि वह्न्यन्तरे(१)व्यापकताग्रहाधीन-पर्वतीयवह्न्यनुमितौ न सा आयाति, वह्न्यन्तरज्ञानजन्यत्वेनैव सिद्धसाधनादत आह—'तद्वह्नी'ति।

ननु विशिष्टवैशिष्ट्यबुद्धौ विशेषणतावच्छेदकप्रकारकधियो हेतुत्वे दण्डिमानित्यनुमितौ विशेषणतावच्छेदकीभूतप्रकृतदण्डभानार्थं सामान्यलक्षणा स्यादत आह—'विशिष्टवैशिष्ट्येत्यादी'ति। 'विशेषणतावच्छेदकादीना(२)'मित्यादिना विशेषणविशेष्यपरिग्रहः। 'तादृशं' दण्डिमानित्याकारकम्। 'तद्रूपेण' दण्डित्वादिना। व्याप्त्यादिग्रहः(३) व्यापकताग्रहः शक्तिग्रहश्च तेन(ग)रूपेणानुमितौ शाब्दे च हेतुरित्यर्थः।

## तत्त्वचिन्तामणिः

विशिष्टज्ञानत्वमेव मानमिति चेन्न दृष्टान्ताभावात्, दण्डी पुरुष इत्यत्र विशेषणधीजन्यत्वानुपगमात्; विशिष्टवैशिष्ट्यज्ञानत्वात्। अपि च प्रमेयत्वेन व्याप्तिं परिच्छिन्दन् सर्वज्ञः स्यात्, तथा च परकीयज्ञानविषये घटत्वं न वेति संशयो न स्यात्; प्रमेयत्वेन तदन्यतरनिश्चयात्। प्रमेयत्वेन घटं जानात्येव, घटत्वं तस्य न जानाति इति चेन्न; तत् किं घटत्वं न प्रमेयं, येन तन्न जानीयात्? सकलघटवृत्तिधर्मस्य प्रमेयत्वेन तद्ज्ञानासम्भवात्।

(१) 'वह्न्यन्तरव्यापकत्व' इति पाठान्तरम्। (२) 'दकादीत्यादिना' इति पाठान्तरम्। (३) पुस्तकविशेषे 'व्याप्त्यादिग्रह' इत्यंशो नास्ति।

---

(ख) 'उक्तकार्य्यकारणभावे'ति—वह्निविशिष्टज्ञानत्वेन वह्निज्ञानत्वेन कार्य्यकारणभावेत्यर्थः।

(ग) 'तेन रूपेणे'ति दण्डित्वादिरूपेणेत्यर्थः।

## दीधितिः

अस्तु वा(१) दण्डीत्यादि(२)प्रत्यक्षे दण्डत्वादिना, दण्डसंयोगवानित्यादौ च दण्डसंयोगत्वादिना(३) यत्किञ्चिद्व्यक्तिज्ञानं कारणम्। 'दृष्टान्ताभावा'दिति,—विशेषणज्ञानत्वेन हेतुत्वस्य विशेष्यज्ञानादि—(४) कारणतापत्त्या मानाभावेन च निरस्तत्वादिति।

एतेनास्तु वा विशेष्यज्ञानमपि कारणं, अन्यताश्च निर्विकल्पकमपि सामान्यलक्षणया, सर्वज्ञत्वापत्त्या तस्यास्तद्जनकत्वे तु तत एव बाधकान्न तत् कारणमिति निरस्तम्।

## दीधितिप्रकाशः

ननु युगपद्विशेष्यविशेषण(५) सन्निकर्षे सत्यपि रक्तो दण्डो न वेति संशयानन्तरमजायमाने रक्तो दण्ड इति निश्चयानन्तरं जायमाने रक्तदण्डवानिति विलक्षणबोधे अन्वयव्यतिरेकाभ्यामवश्यं विशेषणतावच्छेदकप्रकारकनिश्चयस्य हेतुत्वं कल्पनीयमत आह—'अस्तु वे'ति। विशेषणत्वस्यैकस्याभावाद् दण्डिमानिति बुद्धौ दण्डत्वेन यत्किञ्चिद्दण्डप्रकारकधीत्वेनैव हेतुत्वात् प्रकृतदण्डप्रकारकज्ञानाभावेऽपि न क्षतिरिति भावः।

प्रत्यक्षस्थल एवोक्तसंशयदशायां तथा(६) बोधाभावादुक्तकार्य्यकारणभावकल्पनमित्याशयेन 'प्रत्यक्ष' इत्युक्तम्। वस्तुतः कार्य्यतावच्छेदकं(७) विशिष्टवैशिष्ट्यबोधत्वमेवेति ध्येयम्। तेन(८) दण्डो रक्तो न वेति संशये रक्तो दण्ड इत्यवान्तरवाक्यार्थबोधं विनैव रक्तदण्डवानिति विशिष्टवैशिष्ट्यशाब्दबोधापत्तिरिति निरस्तम्।

'विशेष्यज्ञानादी'त्यादिना सम्बन्धज्ञानपरिग्रहः। 'एतेन' मानाभावेन। ननु घटत्वसामान्यलक्षणाजन्यज्ञाने अतीतानागतघटादेरपि विशेष्यत्वात् तज्ज्ञानस्य च

(१) पुस्तकविशेषे 'वा'कारो नास्ति। (२) 'दण्डीत्यादौ' इति पाठान्तरम्। (३) क्वचित् 'संयोगत्वादिना' इत्यनन्तरमेव चकारो दृश्यते। (४) 'ज्ञानादेरपि कारणत्वापत्त्या' इति पाठान्तरम्। (५) 'युगपद्विशेषण' इति पाठान्तरम्। (६) 'तथाविधबोधा' इति पाठान्तरम्। (७) पुस्तकविशेषे 'वस्तुत' इति नास्ति 'कार्य्यतावच्छेदक' मित्यनन्तरञ्च 'तु' शब्दो दृश्यते।

(८) 'तेने'ति—विशिष्टवैशिष्ट्यबोधत्वस्य कार्य्यतावच्छेदकत्वादेवेत्यर्थः।

प्रागसम्भवाद् विशेष्यज्ञानं व्यभिचारीत्यत आह,—'जन्यताञ्चे'ति(क)। 'निर्विकल्पकम्' अज्ञातसामान्याश्रये तत्सामान्यवैशिष्ट्यानवगाहि।

नन्वेवं प्रमेयत्वसामान्यलक्षणया विश्वगोचरनिर्विकल्पकजनने सार्वज्ञंच(१) स्यादित्यत आह—'सर्वज्ञे'ति। यद्यप्येतादृशसार्वज्ञ्यस्वीकारे क्षतिविरहः। न च संशयानुपपत्तिः, इदन्त्वावच्छेदेन घटत्वादिनिर्णयस्यैव अयं घटो न वेत्यादिसंशयविरोधित्वात्, तस्य तत्संशयजनकदोषवशेन प्रतिबन्धात्; तथापि निखिलजात्यंशे अन्याप्रकारकनिखिलजातिप्रकारकज्ञानापत्तिः सामग्रीसत्त्वात्। न चेद(२)-मनुभवसिद्धमिति भावः।

यत्तु घटत्वस्येव घटत्ववृत्तिधर्माणामपि निर्विकल्पकेन विषयीकरणाद् यदा घटे घटत्वावगाहनं, तदा घटत्वेऽपि तद्वृत्तिधर्मावगाहनम्, अतो घटत्वांशे अन्याप्रकारकज्ञानासम्भव इति कथं सार्वज्ञ्यापादनमिति, तन्न; घटत्वांशे अन्याप्रकारकघटत्वप्रकारकज्ञानं प्रति घटत्वांशे अन्याप्रकारकघटत्व(३)ज्ञानस्य हेतोः सम्भवेन तादृशज्ञानोत्पत्ते(४)र्ब्रह्मणापि दुर्वारत्वात्। अन्यथा जातिमान् घट इति प्रत्यक्षं न स्यात्, न स्याच्च योगिनामपि सार्वज्ञ्यमिति दिक्। 'तस्याः' सामान्यलक्षणायाः। 'तदजनकत्वे' निर्विकल्पकाजनकत्वे। 'तत एव' पूर्वोक्तव्यभिचारादेव। 'तत्' विशेष्यज्ञानम्।

## तत्त्वचिन्तामणिः

उच्यते;—यदि सामान्यलक्षणा नास्ति, तदा अनुकूलतर्कादिकं(५) विना धूमादौ व्यभिचारसंशयो न स्यात्; प्रसिद्धधूमे वह्निसम्बन्धावगमात्, कालान्तरीयदेशान्तरीयधूमस्य मानाभावेनाज्ञानात्। सामान्येन तु सकलधूमोपस्थितौ धूमान्तरे विशेषादर्शनेन संशयो युज्यते।

(१) 'सर्वज्ञः' इति पाठभेदः। (२) 'न चैतदनु' इति पाठान्तरम्। (३) पुस्तकविशेषे 'घटत्व' इति नास्ति। (४) 'ज्ञानापत्ते' इति पाठान्तरम्। (५) 'अनुकूलतर्कं विना' इति पाठान्तरम्।

(क) 'जन्यताञ्चे'त्यस्य—क्रियताञ्चेत्यर्थः।

## दीधितिः

'प्रसिद्धधूम' इत्यादि,—धर्मिज्ञानस्य संशयहेतुत्वानङ्गीकारेऽपि संशय एव धर्मिभानार्थं(१) सा स्वीकार्य्या, धर्मितावच्छेदकप्रकारकज्ञानस्य प्रत्यासत्तित्वाभ्युपगमे त्वविवादात्, तद्धर्मप्रकारकज्ञानस्य तद्धर्माश्रयप्रत्यासत्तित्वोपगमात्।

## दीधितिप्रकाशः

ननु अप्रसिद्धधूमेऽपि संशयो नानुपपन्नः, धर्मिज्ञानस्य संशयहेतुत्वाभावादत आह—'धर्मिज्ञानस्ये'ति। 'संशय एवे'ति,—विशेष्येन्द्रियसन्निकर्षस्य प्रत्यक्षहेतुत्वादिति भावः। 'धर्मिभानार्थं'(२)धर्मिविषयतार्थम्। 'सा' सामान्यलक्षणा।

ननु सामान्यलक्षणां विनापि धर्मितावच्छेदकप्रकारकज्ञानादेवाज्ञातधर्मिणां संशयविषयता स्यात्, तथा च ज्ञानलक्षणयैवोपपत्तिरत आह—'अविवादादि'ति। अविवादं द्रढ़यति—'तद्धर्मे'ति। यद्यपि घटत्वप्रकारकज्ञानत्वेन प्रत्यासत्तितायां विवादः, तथापि घटत्वप्रकारकज्ञानोत्तरं निखिलघटप्रत्यक्षस्य फलस्य सम्प्रतिपत्तौ तत्प्रत्यासत्तिता घटत्वप्रकारकज्ञानत्वेन घटत्वज्ञानत्वेन वा स्यादित्यत्र नास्माकमाग्रह इति भावः।

अत्र कश्चित्;—स्वरूपसदीश्वरज्ञानमेव सर्वत्र विषयतया प्रत्यासत्तिरस्तु, घटत्वपटत्वादीनां बहूनां तथात्वे गौरवात्। तस्याश्च स्वप्रकारकस्वाश्रयप्रत्यक्षत्वं स्वाश्रयविशेष्यकप्रत्यक्षत्वं वा उपनीतभानलौकिकप्रत्यक्षसाधारणमेव कार्य्यतावच्छेदकम्, अतो न विश्वगोचरनिर्विकल्पकोत्पादेन सार्वज्ञ्या(च)पत्तिः, न वा उपनीतभानादिव्यावर्त्तक-तत्तदन्यत्वादिप्रवेशे कार्य्यकारणभावस्यानन्त्याल्लाघवानवकाश इति। इत्थञ्च घटत्वांशे अन्याप्रकारक-घटत्वोपनीतभानस्थले घटत्वस्याविशेष्यत्वात् तत्प्रत्यक्षोपपत्त्यर्थं ज्ञानलक्षणापि स्वीकार्य्येति।

यदा च यदिन्द्रियजन्य-यद्धर्मप्रकारकज्ञानसामग्री, तदा तदिन्द्रियजन्यतद्धर्मप्रकारकस्वाश्रयविशेष्यिकां प्रतीतिं जनयति, अतो(छ) न घटत्वादिप्रकारकप्रत्यक्षकाले

---

(१) 'ज्ञानार्थम्' इति पाठान्तरम्। (२) 'ज्ञानार्थम्' इति पाठान्तरम्।

(च) निर्विकल्पकस्य तादृशकार्य्यतावच्छेदकधर्मानाक्रान्तत्वात्, निर्विकल्पकस्य प्रकारताविशेष्यताशून्यत्वादिति भावः।

(छ) 'अत' इति—निरुक्तकार्य्यकारणभावे इन्द्रियविशेषजन्यत्वस्य स्वाश्रयविशेष्यकत्वस्य च कार्य्यतावच्छेदके निवेशादेवेत्यर्थः।

पटादीनां साक्षात्कारापत्तिः, न वा रसत्वगन्धत्वाद्युपस्थितौ रसो गन्ध इति चाक्षुषज्ञानापत्तिः।

न च घट इत्याकारकप्रत्यक्षकाले घटत्वरूपेणैव विश्वविशेष्यकप्रत्यक्षापत्तिः, सति दोष इष्टत्वात्, असति(ज) तु तस्यैव कारणस्याभावात्। अन्यथा प्रमेयत्वादिना ज्ञानकाले विश्वविशेष्यक(१) घटत्वादिप्रकारकप्रत्यक्षस्य तवापि दुर्वारत्वादिति। तन्न साधीयः; विनिगमनाविरहेण अभिधेयत्वादीनामाकाशाभावादीनाञ्चासत्तिताया दुर्वारत्वात्। न च घटत्वज्ञानेनापि समं विनिगमनाविरहः, तस्यान्वयव्यतिरेकानुविधायितया हेतुत्वस्यावश्यकत्वादिति दिक्(२)।

## दीधितिः

अत्र वदन्ति; —प्रसिद्धधूमे धूमत्वेन व्याप्तिज्ञानं तद्धूमत्वेन(३) वा ? आद्ये संशयोऽसिद्धः। द्वितीये तु धूमत्वावच्छेदेन व्याप्तिग्रहस्यैव तद्विरोधितया स(४) नानुपपन्नः; कथमन्यथा पृथिव्यादिरूपे वायुत्वाभावव्याप्यतानिर्णयेऽपि रूपं वायुत्वाभावव्यभिचारि न वेत्यादिसंशयः ?

न चातिरिक्तसम्भावनया तथा, विशेषतश्चोपस्थितानामतिरिक्तानां विशेषदर्शनाक्रान्ततया अतिरिक्तान्तरोपस्थितये अवश्यं सा स्वीकरणीयेति(५) वाच्यम्; यतो रूपेषु नातिरिक्तत्वसम्भावना, तेषु विशेषदर्शनात्। नाप्यतिरिक्ते रूपत्वसम्भावना, रूपान्यन्न रूपम्, द्रव्यादयो रसादयश्च न रूपम्, प्रसिद्धरूपभिन्नं यद्रूपभिन्नं द्रव्यं रसादि वा तत् सर्वं न रूपं रूपत्वाभाववच्चेत्यादिविशेषदर्शने(६) तस्या अप्ययोगात्। तदानीञ्चोक्तसंशयस्य सर्वजनानुभवसिद्धत्वादतिरिक्तसम्भावनाया गौरवेणाप्रयोजकत्वाच्च। तस्मात्तत्रैव धूमे रूपे वा धूमत्वेन रूपत्वाद्यवच्छेदेन[वा]व्याप्तेरग्रहाद् व्यभिचारसंशयो नायुक्तः।

---

(१) 'विषयक' इति पाठान्तरम्। (२) 'दिक्' इति पुस्तकविशेषे नास्ति। (३) 'एतद्धूमत्वेन' इति पाठान्तरम्। (४) 'संशयः' इति पाठान्तरम्, तच्च न प्रकाशसम्मतं 'स' इत्यस्यैव 'व्याप्तिसंशय' इत्यर्थविवरणात्। (५) 'स्वीकार्य्येति' इति पाठभेदः। (६) 'दर्शनेन' इति क्वाचित्कः पाठः।

---

(ज) 'असति तु' दोष इति शेषः। तथा हि घटत्वप्रकारकविश्वविशेष्यकप्रत्यक्षस्य भ्रमरूपतया दोषस्य च भ्रमं प्रति कारणतया तदभावे तादृशभ्रमात्मकस्य कार्य्यस्य उत्पत्त्यसम्भव इति भावः। तस्यैव दोषरूपस्य कारणस्याभावात् न तादृशप्रत्यक्षापत्तिरिति भावः।

# दीधितिप्रकाशः

'धूमत्वेन' धूमत्वावच्छेदेन। '(१)तद्धूमत्वेन' धूमत्वसामानाधिकरण्येन। 'असिद्ध' इति,—धूमत्वावच्छेदेन तदभावनिर्णयस्य सामानाधिकरण्येन(क) संशयं प्रत्यपि विरोधित्वादिति भावः। 'द्वितीय' इति,—धूमत्वसामानाधिकरण्येन व्याप्तिनिश्चये धूमत्वसामानाधिकरण्येन व्यभिचारसंशये बाधकाभावादिति भावः। ग्रहस्यैवेत्येवकारेण धूमत्वसामानाधिकरण्येन व्याप्तिग्रहव्यवच्छेदः। 'तद्विरोधितया' धूमत्वसामानाधिकरण्येन व्याप्तिसंशयविरोधितया। 'सः' धूमत्वसामानाधिकरण्येन व्याप्तिसंशयः। तथा च प्रसिद्धधूम एव धूमत्वेन व्याप्तिसंशय इति भावः। 'अन्यथा' समानविषयकतामात्रेण प्रतिबन्धकत्वे(ख)। 'पृथिव्यादी'ति,—पृथिवीरूपं वायुत्वाभावव्याप्यम्, जलरूपं वायुत्वाभावव्याप्यम्, तेजोरूपं वायुत्वाभावव्याप्यम् इत्याकारेणेत्यर्थः। तत्र व्याप्तिग्रहविषयातिरिक्तस्य धूमान्तरस्य सत्त्वात् सन्देहोपपादनेऽपि अत्र(२) व्याप्तिग्रहविषयेभ्यः पृथिवीजलतेजोरूपेभ्योऽन्यद्रूपान्तरं नास्तीति कुत्र सन्देहः स्यादिति भवत्युपष्टम्भ इति।

समानविषयकत्वेन विरोधित्वमभ्युपेत्याह—'न चे'ति(३)। 'अतिरिक्तसम्भावनया' प्रसिद्धरूपातिरिक्तं रूपं न वे'ति सम्भावनया। 'तथा' गृहीतव्याप्तिकेष्वेव रूपेषु रूपं वायुत्वाभावव्याप्यं न वेति संशयः।

नन्वेवं गृहीतव्याप्तिकेष्वेव धूमेषु एतावदतिरिक्तो धूमो नवेति सम्भावनया धूमो वह्निव्यभिचारी न वेति संशयः स्यात्, तथा च क्व सामान्यलक्षणावतार इत्यत

---

(१) 'एतद्धूमत्वेन' इति पाठान्तरम्। (२) 'अन्यत्र' इति पाठान्तरम्। (३) पुस्तकविशेषे 'समान' इत्यारभ्य 'न चेति'-पर्यन्तः पाठो न दृश्यते।

(क) अस्मिन् प्रकरणे सर्वत्र सामानाधिकरण्येनेत्यस्य सामानाधिकरण्यमात्रेणेत्यर्थः। तादृशबुद्धित्वञ्च प्रकारतावच्छेदकसंसर्गांशे धर्मितावच्छेदकव्यापकप्रकारप्रतियोगिकत्वानवगाहिबुद्धित्वम्। तादृशबुद्धिं प्रति संसर्गांशे धर्मितावच्छेदकव्यापकप्रकृतप्रकारप्रतियोगिकत्वावगाहिविपरीतनिश्चय एव प्रतिबन्धकः। संसर्गांशे तादृशप्रतियोगिकत्वावगाहिनी बुद्धिरेव अवच्छेदकावच्छेदेन बुद्धिः। तादृशबुद्धिं प्रति सामानाधिकरण्यमात्रेण अवच्छेदकावच्छेदेन चेति द्विविधो विपरीतनिश्चय एव प्रतिबन्धक इति तत्त्वं प्रकृते अनुसन्धेयम्।

(ख) तथा प्रतिबन्धकत्वञ्च तद्विषयतानिरूपितविषयतासम्बन्धेन तद्बुद्धिं प्रति तदभावविषयतानिरूपितविषयतासम्बन्धेन तदभावनिश्चयस्य प्रतिबन्धकत्वमित्यादिरूपम्।

आह—'विशेषत' इति। 'विशेषतो' घटत्वपटत्वादिना। 'विशेषदर्शनं' रूपत्वाभावनिर्णयः। 'अतिरिक्तान्तरे'ति,—अनुपस्थिताति(ट)रिक्तेत्यर्थः। 'सा' सामान्यलक्षणा।

'रूपेष्वि'ति,—रूपं पार्थिवाप्यतैजसभिन्नं नवेत्या(१)कारेत्यर्थः। 'विशेषदर्शनात्' पार्थिवादित्रितयभिन्नत्वा(२)भावदर्शनादित्यर्थः। 'अतिरिक्त'(३) इति,—पार्थिवादिभिन्नं रूपं न वेत्याकारेत्यर्थः। विशेषतोऽपि निर्णयमाह—'द्रव्यादय' इति; द्रव्यकर्मसामान्यविशेषसमवायाभावा इत्यर्थः।

ननु संशयस्य यद् धर्मितावच्छेदकम्, तद्घटितरूपेण(ठ) तत्र धर्मिणि निर्णयः संशयविरोधी, अत एव धूमो वह्निव्याप्यो न वेति संशयं तद्धूमत्वेन निर्णयो विरुणद्धि। प्रकृतसम्भावनाया(४) यद्धर्मितावच्छेदकं प्रसिद्धरूपभिन्नत्वम्, तद्घटितरूपेण तत्र धर्मिणि अनिर्णयात् सम्भावना स्यादेव इत्यत एतदभ्युपेत्य(५)उपपादयति 'प्रसिद्ध' इति। प्रसिद्धरूपभिन्नं न रूपमिति ग्रहे संशयायोगादाह—'रूपभिन्न'मिति। तद्घटितधर्मावच्छेदेनैव विशेषेणापि(६) निर्णयमाह,—'द्रव्यं रसादि वे'ति; तथा च प्रसिद्धरूपभिन्नं द्रव्यं रसादि(ड) वा न रूपमित्यर्थः।

तादात्म्येन रूपकोटिकसम्भावनायां(७) रूपभेदनिर्णयं बाधकमुक्त्वा रूपत्वकोटिकसम्भावनायां तदत्यन्ताभावनिर्णयं बाधकमाह,—'रूपत्वे'ति। 'तस्याः' सम्भावनायाः।

ननु तदानीं संशयो न भवत्येव इत्यत आह—'तदानी'मिति। तादृश(८)विशेषदर्शनकाल इत्यर्थः। 'उक्ते'ति,—रूपं वायुत्वाभावव्याप्यं न वेत्याकारेत्यर्थः।

---

(१) 'न वेत्येवंरूपेत्यर्थे' इति पाठभेदः। (२) 'पार्थिवाप्यतैजसभिन्नत्वे'ति पाठान्तरम्। (३) 'नापीति' इति पाठान्तरम्। (४) 'नायाश्च धर्मितावच्छेदकम्' इति पाठान्तरम्। (५) 'इत्येतदभ्युपेत्य' इति पाठान्तरम्। (६) 'विशेषस्यापि' इति पाठभेदः। (७) 'सम्भावनाया' इति पाठान्तरम्। (८) 'एतादृश' इति पाठान्तरम्।

(ट) 'अनुपस्थितातिरिक्ते'त्यत्र कर्मधारयसमासः प्रतिपत्तव्यः।

(ठ) 'तद्घटितरूपेणे'त्यत्र घटितपदं पर्याप्त्यनिवेशसूचनाय। उत्तरत्रापि तथा।

(ड) रसादीत्यादिपदेन तद्गुणसंविज्ञानबहुव्रीहिना रूपभिन्नरसगन्धादिसकलगुणकर्मादिपदार्थपरिग्रहः।

ननु संशयश्चेदनुभूयते, तदा तज्जनकदोषप्रतिबन्धात्(ढ)संशयविषयीभूतो धर्मी पूर्वोक्तविशेषदर्शनानामविषय(१) इत्येव फलबलात् कल्प्यत इत्यत आह—'अतिरिक्ते'ति। 'गौरवेणे'ति,--रूपत्वावच्छिन्न-व्याप्तिनिर्णयाभाव(२)मपेक्ष्य प्रसिद्ध-रूपातिरिक्तं रूपं न वेत्याद्यतिरिक्त(३)सम्भावनाविरहसहकृततद्रूपधर्मिकव्याप्तिनिर्णया-भावकारणतायां(४) गौरवेणेत्यर्थः।

## दीधितिः

यत्तु सामान्याभावभानार्थं सा स्वीकार्य्या, तां विना सकलतत्प्रतियोगि-ज्ञानासम्भवादिति, तन्न ; न हि अभावस्य ज्ञानमात्रे लौकिकप्रत्यक्षे वा प्रतियोगिज्ञानं कारणम्, तत्र सामान्यलक्षणया इदन्त्वादिना च भाने व्यभिचारान्मानाभावाच्च। अत एव इदन्त्वादिना उपस्थिते तमसि भावत्वाभावत्वसंशयः, तेजोऽभावत्वेनोपस्थिते तदयोगात्।

प्रतियोगिविशेषिततज्ज्ञानन्तु(५) विशिष्टवैशिष्ट्यबोधमर्य्यादां नातिशेते। सकलप्रतियोगिविषयत्वन्तु तस्यासिद्धम्, प्रतियोगिज्ञानस्य हेतुत्वेऽपि प्रतियोगिता-वच्छेदकविशिष्टयत्किञ्चित्प्रतियोगिज्ञानादेव तत्सम्भवात्, यावत्प्रतियोगिज्ञानत्वेन गौरवेणाहेतुत्वात्।

## दीधितिप्रकाशः

प्रगल्भमतमास्कन्दति 'यत्त्वि'ति। 'सा' सामान्यलक्षणा। 'तत्प्रतियोगी'ति-सामान्याभावप्रतियोगीत्यर्थः। सामान्याभावभाने तत्कारणीभूत-सकलप्रतियोगि-ज्ञानार्थं सामान्यलक्षणा, सामान्याभावभानविषयीभूत-(६)सकलप्रतियोगिसन्निकर्षार्थं वा ?

(१) 'न पूर्वोक्तविशेषदर्शनानां विशेष्य' इति पाठान्तरम्। (२) 'व्याप्यत्वनिर्णया-भाव' इति पाठान्तरम्। (३) पुस्तकविशेषे 'अतिरिक्त' पदं नास्ति। (४) 'कारणताया' इति पाठभेदः। (५) 'तद्भानन्तु' इति पाठान्तरम्। (६) 'तद्विषयीभूत' इति पाठान्तरम्।

(ढ) 'तज्जनके'त्यादिः—संशयस्य भ्रमरूपतया तज्जनकीभूतेन दोषेण पूर्वोक्तविशेषदर्शनस्य प्रतिरोधादित्यर्थः।

नाद्य इत्याह—'नही'ति। 'तव' नैयायिकस्य(ण) मते। 'सामान्यलक्षणया' ज्ञेयत्वादिना। ननु तल्लौकिकप्रत्यक्षे तत्(त)कारणमत आह—'इदन्त्वादिने'ति। नन्वभावत्वप्रकारकलौकिकप्रत्यक्षे तत् कारणमत आह—'मानाभावाद्वे'ति।

ननु तत्प्रतियोगिकाभावत्वमेव इदन्त्वम्, तथा च तत्तत्प्रतियोगिकाभावभाने कथं प्रतियोगिधियो व्यभिचार(थ) इत्यत आह 'अत एवे'ति। यत एव तेजोऽभावत्वं नेदन्त्वं, किन्तु स्वरूपेण तत्तदभावव्यक्तिज्ञानविशेषो वा अत एवेत्यर्थः।

तमोभिन्न इदन्त्वेन भाने विवादात् 'तमसो'ति पर्य्यन्तानुधावनम्(१)। 'तदयोगात्' अभावत्व(द)संशयायोगात्।

ननु भूतले घटवत्त्वभ्रमकाले घटो नास्तीतिबुद्ध्यनुत्पत्तावपि घटत्वस्यावच्छेदकत्वानवगाहिनो घटप्रतियोगिकोऽभाव इत्याकारकस्य नेत्याकारकस्यानुभवस्य(२) वा आपत्तिः, अत इन्द्रियसम्बद्धविशेषणतायाः कार्य्यतावच्छेदकं तत्तत्प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिताकत्वावगाह्यभावप्रत्यक्षत्वम् इदन्त्वप्रकारकाभावप्रत्यक्षत्वञ्च नानैव। तथा च घटत्वावच्छिन्नप्रतियोगिताकाभावप्रत्यक्षत्वावच्छिन्नं प्रति घटत्वरूपेण घटज्ञानं कारणमित्येव पर्य्यवसितम्।

न चात्र व्यभिचार इत्यत आह—'प्रतियोगी'ति। 'तज्ज्ञानम्'(३) अभावभानम्। 'विशिष्टवैशिष्ट्ये'ति,—घटत्वविशिष्टवैशिष्ट्यबोधे घटत्वप्रकारकज्ञानं(४)

(१) 'पर्य्यन्तम्' इति पाठान्तरम्। (२) 'अभावानुभवस्य' इति पाठान्तरम्। (३) 'तद्भानम्' इति पाठभेदः। (४) 'घटत्वरूपेण घटज्ञानम्' इति पाठान्तरम्।

(ण) 'नैयायिकस्य' न तु मीमांसकस्य; तन्मते सामान्यलक्षणानङ्गीकारादिति भावः।

(त) 'तल्लौकिकप्रत्यक्षे'—अभावलौकिकप्रत्यक्षे। 'तत् कारण'मिति प्रतियोगिज्ञानं कारणमित्यर्थः।

(थ) इदन्त्वस्य प्रतियोगिविशेषित-तादृशाभावत्वात्मकतया इदन्त्वप्रकारेणाभावज्ञाने विशेषणज्ञानविधया अपेक्षितस्य इदन्त्वज्ञानस्य प्रतियोगिविषयकत्वनैयत्येन व्यभिचाराभाव इति भावः।

(द) स्वविरोधिधर्मधर्मितावच्छेदकक-स्वप्रकारकज्ञानस्य नियताहार्य्यतया अभावत्वधर्मितावच्छेदककाभावत्वाभावकोटिकसंशयस्वीकारे संशयस्याहार्य्यत्वापत्तेः। अत्र 'तद्व्यावर्त्तकधर्मस्य तत्संशयधर्मितावच्छेदकताया अनुभवविरुद्धत्वा'दिति गदाधरयुक्तिः। अत्र जगदीशस्तु 'तद्धर्मविशिष्टधर्मिकतदभावग्रहं प्रति तादृशज्ञानेच्छाविरहविशिष्टज्ञानमात्रस्य प्रतिबन्धकत्वात्। अन्यथा निर्वह्निर्वह्निमान् इत्येवमनाहार्य्यधीप्रसङ्गादिति भाव' इत्याह।

कारणम्। तेन निर्विकल्पकोत्तरं विशिष्टवैशिष्ट्यबोधनिरासः। न, तु तत्र घटविषयत्वमपि अपेक्षितम्, कुतो यावद्घटविषयत्वमिति भावः।

द्वितीये त्वाह,—'सकले'ति। 'तस्य' सामान्याभावभानस्य। पूर्वोक्त-कारणतावच्छेदके घटविषयत्वस्य निवेशनमभ्युपेत्याह—'प्रतियोगिज्ञानस्ये'ति।

## दीधितिः

न च तदभावबुद्धौ तज्ज्ञानहेतुत्वाद् यावत्प्रतियोगिज्ञानस्य हेतुत्वमर्थायातम्, मानाभावात्। ध्वंसप्रागभावात्यन्ताभावाश्च प्रतियोग्यादित्रितय(१) प्रतियोगिका द्वयाग्रहेऽप्येकग्रहादेव गृह्यन्त इत्यभ्युपगमाच्च। अन्धकारस्तु तेजोविशेषसामान्याभावो नाभावसमुदायः, यावत्तदभावानामेकत्रासम्भवादननुगमाद् गौरवात् तेजोविशेष-त्वादिज्ञानस्य तेजःसामग्र्याश्च विरहे(२) तेजोविशेषात्यन्ताभावप्रागभावानां प्रत्यक्षान-भ्युपगमाच्च। प्रागभावप्रत्ययोऽपि च प्रतियोगिवृत्तिघटत्वादिप्रकारकज्ञानसाध्यो न प्रतियोगिज्ञानमपेक्षते।

## दीधितिप्रकाशः

ननु तद्घटस्य विशिष्टाभाव-द्वित्वावच्छिन्नाभाव-साधारणतद्घटप्रतियोगिका-भावप्रत्यक्षत्वावच्छिन्नं प्रति तद्घटज्ञानत्वेन हेतुता, घटसामान्याभावस्तु तत्तद्घटाना-मभाव इति तत्प्रत्यक्षे तत्तद्घटानां ज्ञानं(३) कारणम्, अतो यावत्प्रतियोगिज्ञान-हेतुत्वमर्थायातमेवेत्याशङ्कते 'न चे'ति। 'तदभावे'ति—तत्प्रतियोगिकाभावेत्यर्थः। न चापसिद्धान्तोऽपीत्याह—'ध्वंसे'ति। घटध्वंसो घट-तत्प्रागभाव-तदत्यन्ता-भावानामभावः, घटध्वंसकाले घटो नास्ति घटप्रागभावो नास्ति घटात्यन्ताभावो नास्तीति बुद्धीनां घटध्वंसेनैवोपपादनात्। एवं घटप्रागभावो घट-तद्ध्वंसतदत्यन्ता-भावानामभावः, एवं घटात्यन्ताभावो घट-तत्प्रागभावतद्ध्वंसानामभावः एकैक-प्रतियोगिज्ञानादेव गृह्यत इत्यर्थः।

ननु स्वमते ध्वंसप्रागभावयोरत्यन्ताभावेन सह विरोधाभावात् कथमेतदत आह—'अभ्युपगमाच्चे'ति, प्राचीनैरिति शेषः।

ननु स्वपरप्रकाशक-यावत्तेजःसंसर्गाभावोऽन्धकारो यावत्तेजोज्ञानादेव गृह्यते। यावत्तेजोज्ञानञ्च सामान्यलक्षणां विना नेति तदर्थं(घ) सा अङ्गीकार्येत्यत आह—

(१) 'त्रय' इति पाठान्तरम्। (२) क्वचित् 'विरहेऽपि' इति पाठो दृश्यते। (३) 'भानम्' इति पाठान्तरम्।

(घ) 'तदर्थ'मिति—यावत्तेजोज्ञानार्थमित्यर्थः। 'से'ति सामान्यलक्षणेत्यर्थः।

'अन्धकारस्त्वि'ति। 'तेजोविशेषे'ति, स्वपरप्रकाशकेत्यर्थः। 'सामान्याभाव' इति—ध्वंसप्रागभावाधिकरणेऽपि सामान्याभावस्य प्राग्व्यवस्थापितत्वादिति भावः। यावत्त्वमभावविशेषणमाशङ्क्य निराकुरुते 'नाभावे'ति। 'एकत्रे'ति,—व्यधिकरणतेजसां प्रागभावध्वंसयोरेकत्रा(न)सम्भवादिति(१) भावः।

ननु यत्र यावद्भिस्तेजोऽभावैस्तमोव्यवहारस्तावन्त एव तत्रान्धकारपदार्थ इति। किञ्च(प) यावत्त्वं प्रतियोगिविशेषणमेव, तथा च यावत्तेजसां तत्तद्व्यक्तित्वेनाभाव एवान्धकार इत्यत आह—'अननुगमादि'ति।

ननु अनुगतप्रत्ययोऽसिद्ध एवेत्यत आह—'गौरवादि'ति। एकस्य सामान्याभावस्य अन्धकारप्रतीतिविषयत्वकल्पनमपेक्ष्य यावदभावेषु तत्कल्पने गौरवादित्यर्थः। ननु यावदभावग्राहकसामग्रीसत्त्वे यावदभावे(२)ऽपि तत्प्रतीतिविषयत्वमावश्यकमत आह—'तेजोविशेषत्वे'ति। अत्यन्ताभावग्रहे व्यधिकरणतेजसां ध्वंसप्रागभावग्रहे च तदधिकरणावृत्त्यनन्ततेजोव्यक्तीनां तत्तद्व्यक्तित्वेन ग्रहस्याशक्यत्वादिति।

ननु अत्यन्ताभावग्रहे तदधिकरणावृत्तितेजस्त्वादिना ग्रहः सम्भवति, प्रागभावध्वंसग्रहे च तेजस्त्वेन तत्कालावच्छेदेन तदधिकरणावृत्तितेजस्त्वेन वा प्रतियोगिनो ज्ञानं सम्भवति। न चेन्द्रियसम्बद्धविशेषणतायास्तत्प्रतियोगितावच्छेदकावच्छिन्नाभावप्रत्यक्षत्वमेव कार्य्यतावच्छेदकम्, अतः कथं(फ) तेजस्त्वादिप्रकारकज्ञानात् प्रागभावादिप्रत्यक्षमिति वाच्यम्; अत्यन्ताभावे इन्द्रियसम्बद्धविशेषणताया एव

(१) 'प्रागभावध्वंसानामसम्भवादिति' पाठान्तरम्। (२) क्वचित् 'अपि' शब्दरहितः पाठः।

---

(न) ध्वंसप्रागभावयोः प्रतियोगिसमानदेशवृत्तित्वनियमादिति भावः। प्रागभावध्वंसयोरित्यत्र अल्पस्वरस्य ध्वंसपदस्य द्वन्द्वे पूर्वपातित्वसम्भवेऽपि आश्रयनाशजन्यध्वंसस्य प्रतियोगिसमवायिदेशादन्यत्रापि कदाचित् सम्भवो, न तु कदाचित् प्रागभावस्येति प्रागभावस्य प्रकृते तन्मूलकाभ्यर्हितत्वेन प्रागभावपदस्य पूर्वपातित्वमिति केचिद् व्याचक्षते।

(प) कुत्र कियद्भिस्तेजोऽभावैस्तमोव्यवहारो भवतीत्यस्य निर्णेतुमशक्यतया अन्धकारपदार्थो दुर्ज्ञेय इत्याशङ्कयाह किञ्चेति।

(फ) 'कथ'मिति—तेजस्त्वादिधर्माणां तादृशप्रागभावप्रतियोगितावच्छेदकत्वस्य सुतरामभावादिति भावः।

तथात्वात्(ब)। अत एव इहेदानीं(१)घटध्वंस इत्यतिप्रसक्तघटत्वावच्छेदेनैव तद्घट-ध्वंसप्रत्यक्षं सर्वानुभवसिद्धमत आह—'तेजःसामग्र्या' इति। तेजःप्रागभावस्य तेजः-सामग्रीव्यङ्ग्यत्वादन्धकारप्रत्यक्षकाले च तेजस उत्पत्तेरनावश्यकत्वादिति भावः।

ननु मास्तु यावत्प्रतियोगिज्ञानमभावप्रत्यक्षे कारणं, तथापि प्रागभाव-प्रत्यक्षानुरोधात् सामान्यलक्षणा आयास्यति, तत्र अनागतघटस्यैव प्रतियोगित्वेन तज्ज्ञानस्यान्यथाऽसम्भवादित्याशङ्क्य 'विशिष्टवैशिष्ट्यबोधमर्य्यादां नातिशेत' इति क्रमेणैव समाधत्ते 'प्रागभावे'ति। 'घटत्वादी'ति,—इदं च अतिप्रसक्तघटत्वाद्य-वच्छेदेनापि प्रागभावस्य प्रत्यक्षमिति मदुक्त(२)दिशावगन्तव्यम्।

## दीधितिः

अथ घटो भविष्यतीति प्रत्यक्षं प्रतियोगिविशेषितं प्रागभावमवगाहते। न च प्राचीनास्तत्प्रतियोगिनः, तत्प्रतियोगित्वावगाहने च भ्रमत्वम्, न च अनागते घटे प्रत्यासत्त्यन्तरमस्ति, अतः सामान्यप्रत्यासत्त्या घटत्वेनानुभूतं स्मृतञ्च तं तदालम्बते।

न च चरमकारणरूपसामग्रीव्यङ्ग्यः प्रागभावो वाच्यः, अन्यदा तत्प्रत्ययात् तस्याश्च(३) स्वरूपसत्याः स्वरूपेण वा ज्ञातायास्तथात्वे अतिप्रसङ्गाद् व्याप्यत्वेन गृहीतायास्तथात्वं वाच्यम्। तथा च तद्धेतुका प्रागभावस्यानुमितिरेव, तावत्कालं प्रागभावस्यासत्त्वेन प्रत्यक्षायोगादिति(४)वाच्यम्। यादृशकारणकलापानन्तरं कार्य्योत्-पादो दृष्टस्तद्बुद्धेरेव तद्व्यञ्जकत्वाभ्युपगमात्, अनुयोगिताविशेषादिरूपप्रागभावत्वादेः क्वचिदप्रतीतौ(५) तादृप्येणानुमानासम्भवाच्चेति चेत्;—

## दीधितिप्रकाशः

ननु अनागतगोचरप्रागभावप्रत्ययोऽनागतघटसन्निकर्षं विना न स्यादतस्तत्र ज्ञानरूपसन्निकर्षार्थमेव सामान्यलक्षणेत्याशङ्कते—'अथे'ति। 'घटो भविष्यती'ति,—यद्यपि इदं प्रत्यक्षं न वहिरिन्द्रियेण, उपनीतविशेष्यकज्ञानजनने तेषा(६)मसामर्थ्यात्, न मनसा, तत्र सामग्र्या व्यञ्जकत्वोपवर्णनविरोधात्, तथापि घटविशेषणकप्रागभाव-

(१) पुस्तकविशेषे 'इहे'ति नास्ति। (२) 'तदुक्ते'ति पाठान्तरम्। (३) क्वचित् 'च'कारशून्यः पाठः। (४) 'योगाच्चेति' इति क्वचित् पाठः। (५) 'क्वचिदप्यप्रतीतौ' इति पाठभेदः। (६) 'तेषा'मित्यत्र 'तस्ये'ति पाठो युक्तः।

(ब) 'तथात्वा'दिति—तत्तत्प्रतियोगितावच्छेदकावच्छिन्नाभावप्रत्यक्षत्वस्य कार्य्यता-वच्छेदकत्वादित्यर्थः।

मुख्य(१)विशेष्यकप्रत्यक्षमेवाने(भ)नोक्तमिति ध्येयम्। 'प्राचीनाः'तत्प्रत्यक्षकालीनध्वंस-प्रतियोगिकालवर्त्तिनः। 'तत्प्रतियोगिनः' तादृशप्रत्यक्षविषयप्रागभावप्रतियोगिनः।

ननु प्राचीना एव प्रतियोगित्वेन(२) भासन्तामत आह—'तत्प्रतियोगित्वे'ति। 'स्मृतश्चे'ति,—विशिष्टबुद्धिं प्रति विशेषणधियो हेतुत्वाभिप्रायेण। इतरथा तु सामान्यलक्षणयैव प्रागभावप्रत्यक्षे अनागतघटस्याप्यभानसम्भव इति ध्येयम्। 'तम्' प्रतियोगिनम्(३)। 'तत्' प्रागभावप्रत्यक्षम्।

प्रागभावस्य प्रत्यक्षमेव नास्तीत्याशङ्कते 'न चे'त्यादिना। कालादिघटित-सामग्र्या व्यञ्जकत्वे मानाभावादाह 'चरमे'ति। 'अन्यदा' चरमकारणाभावदशायाम्। 'स्वरूपेण' सामग्रीत्वेन। 'व्याप्यत्वेन' प्रागभावव्याप्यत्वेन। 'गृहीताया' इति कपालादाविति शेषः। अन्यथा इहेदानीं कपाले घटप्रागभाव इति नियताधिकरण-प्रत्यक्षानुदयात्। तथा च पक्षधर्मताज्ञानमपि सम्पादितमिति।

'तथात्वं' व्यञ्जकत्वम्। 'तद्धेतुका' व्याप्यत्वज्ञानहेतुका। कपालादौ प्रागभावव्याप्यत्वेन सामग्र्या ग्रहात् तदनुमितिरेव स्यादनुमितिसामग्रीसत्त्वादिति भावः। ननु समाने विषये लौकिकसामग्र्या(४)बलवत्त्वात् प्रत्यक्षमेव स्यादतः प्रत्यक्षसामग्र्यभावमाह—'तावत्काल'मिति। 'तावत्कालं'(५) व्याप्यत्वग्रहकाल-पर्य्यन्तम्। 'असत्त्वेने'ति—लौकिकप्रत्यक्षे विषयस्यापि हेतुत्वात्, अलौकिकप्रत्यक्ष-सामग्र्यास्तु सर्वापेक्षया दुर्बलत्वादिति भावः।

'तद्बुद्धेरेवे'त्येवकारेण कारणकलापे(६)प्रागभावव्याप्यत्वबुद्धिव्यवच्छेदः। न चैवं कपालद्वयसंयोगादिरूपतत्कारणानां कपालसंयोगत्वादिना ज्ञानस्य कारणत्वे अतिप्रसङ्ग इति वाच्यम्; कार्य्योपधानव्याप्यत्वेन ज्ञानस्यैव व्यञ्जकत्वादित्यत आह—'कार्य्योत्पादो दृष्ट' इति। तत्तत्कार्य्योपधानव्याप्तिश्च त्रिचतुरक्षणान्तर्भावेण ग्राह्या। अत एव 'प्रागभावस्यासत्त्वेने'त्यपि समाहितम्। तच्च(७) प्रागभावस्य सत्त्वमादायापि सम्भवतीति न विषयाभावात् प्रत्यक्षासम्भव इति।

---

(१) 'मुख्ये'ति पुस्तकविशेषे नास्ति। (२) 'तत्प्रतियोगित्वेनावगाहन्ताम्' इति क्वाचित्कः पाठः। (३) 'अनागतघटम्' इति पाठान्तरम्। (४) 'लौकिकप्रत्यक्ष-सामग्र्या' इति पाठभेदः। (५) पुस्तकविशेषे 'तावत्कालमिति' इत्यतः परं पुनः 'तावत्काल'मिति पाठो नास्ति। (६) 'कारणकलापघटितप्रागभाव' इति पाठान्तरम्। (७) 'तच्च' इत्यारभ्य 'प्रत्यक्षासम्भव इति' इत्यन्तग्रन्थः पुस्तकविशेषे न दृश्यते।

---

(भ) 'अनेने'ति—घटो भविष्यतीत्यनेनेत्यर्थः।

: ननु विनिगमना(अ)विरहात् प्रागभावव्याप्यत्वज्ञानमेवकिं न व्यञ्जकं स्यात् ? एवञ्च प्रागभावस्य प्रत्यक्षा(ब)भ्युपगमेऽपि विषयीभूतप्रागभावस्य तत्संन्निकर्षस्य च कारणत्वकल्पनायां गौरवादनुमितिरेव प्रागभावस्येत्याशङ्क्य प्रत्यक्षमन्तरेणानुमितिरेव न सम्भवति, तादृशप्रागभावत्वरूपसाध्यतावच्छेदकरूपेण साध्यस्याप्रसिद्धेरित्याह—'अनुयोगिते'ति। 'अनुयोगिताविशेषः' स्वरूपसम्बन्धविशेषः। आदिना मतभेदेन अखण्डोपाधिरूपप्रागभावत्वपरिग्रहः। यद्वा आदिना घटविशेष्यकानुमाने प्रागभावप्रतियोगित्वस्यानुमेयत्वात् तत्प्रतियोगिताविशेषपरिग्रहः(१)। 'तादूप्येण' प्रागभावत्वादिना।

## दीधितिः

भविष्यत्त्वं हि न वर्त्तमानप्रागभावप्रतियोगित्वम्, श्वोभाविन्यद्य भविष्यतीति प्रत्ययप्रसङ्गात्। किन्तु उत्पत्स्यते भविष्यतीत्यादेः समानार्थकत्वाद् वर्त्तमान प्रागभावप्रतियोग्युत्पत्तिकत्वं वर्त्तमानकालोत्तरकालोत्पत्तिकत्वं वा तत्त्वम्। न चेदमध्यक्षम्, उत्पत्तेरतीन्द्रियत्वात्। इहाद्य घटो भविष्यतीत्यादौ च तादृशोत्पत्तेर्देशविशेषः कालविशेषश्चाधिकरणत्वेन प्रतीयते, न तु प्रागभावस्य उत्पत्तिमतो वा। अत एव कपालनाशजन्यघटनाशस्य घटाद्यात्मकतत्प्रागभाववत्यपि तत्र कपाले नेह घटध्वंसो भविष्यतीति बुद्धिः। न वा भवने श्वः समुत्पद्य प्राङ्गणे परश्वो गमिष्यति मैत्रे प्राङ्गणे परश्वो भविष्यतीति धीः।

## दीधितिप्रकाशः

ननु घटो भविष्यतीति शब्देनाभिलप्यमानो योऽर्थस्तज्ज्ञानमेव प्रागभावप्रत्यक्षं ? किं वा कार्य्यानुदयदशायाम् इह कपाले घटो नास्तीत्याकारकम्, इहेदानीं घटप्रागभाव इत्याकारकं वा प्रागभावप्रत्यक्षं घटो भविष्यतीति शब्देन कथ्यत इति ?

तत्र नाद्य इत्याह 'भविष्यत्त्वं ही'ति। 'श्वोभाविनी'ति,—श्वोभाविघटप्रागभावस्याद्य(२) वर्त्तमानत्वादिति भावः। उत्पत्तेराद्यक्षणसम्बन्धरूपायाः क्रियाया-

(१) 'परिग्रहः' इत्यतः परं 'तादूप्येण' इत्यतः पूर्वं 'प्रागभावत्वादेरित्यादिना प्रागभावप्रतियोगित्वपरिग्रह' इत्यधिकः पाठः क्वचिद् दृश्यते। (२) 'भावस्याप्यद्य' इति पाठान्तरम्।

---

(अ) 'विनिगमने'ति लाघवादिरूपविनिगमनेत्यर्थः। 'ज्ञानमेवे'ति ज्ञानमपीत्यर्थः।

(ब) 'प्रत्यक्षे'ति लौकिकप्रत्यक्षेत्यर्थः।

त्मकतया तत्प्रागभावोऽपि प्रामाणिकः। प्रागभावमात्रस्यास्वीकारादाह—'वर्त्तमानकालोत्तरे'ति। 'इदम्' भविष्यत्त्वम्।

ननु अद्यतनत्वरूपो यो वर्त्तमानकालस्तद्वृत्तिप्रागभावप्रतियोग्युत्पत्तिकत्वं तदुत्तरकालोत्पत्तिकत्वं वा श्वो भाविन्यपीति तवाप्यद्य(१) भविष्यतीति प्रतीत्यापत्तिरत आह—'इहे'ति। 'तादृशे'ति वर्त्तमानप्रागभावप्रतियोगीत्यर्थः। तथा च(२) इहाद्य घटो भविष्यतीत्यादौ एतद्देशवृत्तिरद्यतनी या वर्त्तमानप्रागभावप्रतियोगिन्युत्पत्तिस्तदाश्रयो घट इत्यन्वयबोधः। 'अत एवे'ति,—यत एव प्रागभावस्याधिकरणत्वेन न देशादि प्रतीयते, किन्तु उत्पत्तेरेव(३), अत[तत]एवेत्यर्थः। 'तत्प्रागभावे'ति-घटनाशप्रागभावेत्यर्थः(४)। तत्र घटनाशजनकनाशप्रतियोगिनि कपाले इह घटध्वंसो भविष्यतीति न बुद्धिरित्यर्थः। कालविशेषस्य प्रागभावे अन्वये श्वो भाविन्यद्य भविष्यतीत्यनेन दत्तदोषत्वात् तन्नोक्तम्।

देशविशेषस्य कालविशेषस्य च उत्पत्तिमति अन्वये बाधकमाह—'न वे'ति। अत्र भवनरूपदेशोत्पन्ने श्वःकालोत्पन्ने च प्राङ्गणरूपदेशवृत्तित्वस्य परश्वःकालवृत्तित्वस्य च अबाधितत्वात् तथा प्रयोगापत्तिरिति भावः। 'गमिष्यति' न तु गच्छति गते वा, तदा वर्त्तमानप्रागभावप्रतियोगित्वाभावादिति।

## दीधितिः

अत्र च धातुना उत्पत्तिः प्रत्याय्यते(र), प्रत्ययेन च धात्वर्थनिष्ठं तादृशप्रतियोगित्वं, तादृशकालीनत्वं वा ; नङ्क्ष्यति नश्यति नष्ट इत्यादौ च प्रत्ययेन यथायथमनागता वर्त्तमानातीता चोत्पत्तिः। तस्यामेव च कालविशेषादिविशेषणत्वेनान्वेति।

(१) 'तत्राद्य' इति पाठान्तरम्। (२) 'तथा च' इत्यत आरभ्य 'इत्यन्वयबोधः' इत्यन्तसन्दर्भः पुस्तकविशेषे न दृश्यते। (३) 'रेवेति' इति पाठान्तरम्। (४) पुस्तकविशेषे 'तत्प्रागभावेति घटनाशप्रागभावेत्यर्थः' इति नास्ति।

(र) अत्र गगनं द्रव्यं भवतीत्यादौ द्रव्यात्मकविशेषणसम्बन्धस्यानुभवाद् द्रव्यादितादात्म्यमेव भुवः शक्यम्, समभिव्याहृतद्रव्यादिपदस्य तत्तदर्थतात्पर्य्यग्राहकत्वात्, तादात्म्यमात्रस्य भूशक्यत्वे नामार्थस्य द्रव्यादेर्धातूपस्थाप्ये तत्र भेदान्वयानुपपत्तेः। अस्तु वा अस्तित्वलक्षणं स्वरूपसत्त्वमेव भुवः शक्यम्, न तु उत्पत्तिर्गौरवादित्याशयेन उच्यत इत्यपहाय प्रत्याय्यत इत्येवोक्तम्। प्रतीतिस्तु लक्षणयापि सम्भवतीति भावः। इति जगदीशः।

## दीधितिप्रकाशः

ननु भूधातुना(१) उत्पत्तिप्रत्यायनात्(२) प्रत्ययस्यापि तादृशोत्पत्तिमत्त्वार्थकत्वे(३) उत्पत्तेरप्युत्पत्तिमत्त्वस्य कुसुमाञ्जलिप्रकाशादा(A)वभिहितत्वादन्वयसम्भवेऽप्यनुभवविरोधः, भविष्यतीत्यनेन वर्त्तमानप्रागभावप्रतियोगित्वबोधस्यैवानुभवसिद्धत्वात्, न तु तादृशोत्पत्तिकोत्पत्तिमत्त्वबोधस्येत्यत आह—'अत्र चे'ति। 'तादृशे'ति—वर्त्तमानप्रागभावप्रतियोगित्वमित्यर्थः। 'तादृशे'ति—वर्त्तमानकालोत्तरकालीनत्वमित्यर्थः।

नन्वेवं नङ्क्ष्यतीत्यादौ धात्वर्थेन समं कालविशेषादेरन्वये श्वोभाविनाशप्रतियोगिनि परश्वो नङ्क्ष्यतीति स्यादत आह—'नङ्क्ष्यती'ति। नङ्क्ष्यतीत्यत्र अनागता, नश्यतीत्यत्र वर्त्तमाना, नष्ट इत्यत्र च अतीता उत्पत्तिः प्रत्ययार्थः; अत्र धातुना उत्पत्तेरप्रत्यायनात्।

न चात्र नश्धातोरेव नाशोत्पत्तौ लक्षणास्तु, तथा सति नाशस्य पदार्थैकदेशतया प्रत्ययार्थे(४) प्रतियोगित्वे अनन्वयापातादिति(ल)। 'तस्यामेव' प्रत्ययार्थे उत्पत्तावेव, न तु धात्वर्थे।

## दीधितिः

एतेन श्वोभाविनाशके परश्वो नङ्क्ष्यतीति, नष्टे च नश्यतीति व्यवहारः स्यात्, न स्याच्च नाशस्य विद्यमानत्वान्नष्ट इत्यादि व्यवहारः। न च तत्र अतीतकालसम्बन्धित्वं वर्त्तमानत्वं वा निष्ठादेरर्थः, चिरविनष्टेऽपि पूर्वेद्युर्नष्टोऽधुना वेति व्यवहारप्रसङ्गादिति परास्तम्।

## दीधितिप्रकाशः

'एतेन' नङ्क्ष्यतीत्यादौ तादृशोत्पत्तेः प्रत्ययार्थत्वव्यवस्थापनेन। 'श्वोभावी'ति—श्वो भावी नाशो यस्येत्यर्थः। उत्पत्तेरलाभे धात्वर्थनाश एव कालविशेषादेरन्वयो वाच्यः। तथा च श्वोभाविनाशप्रतियोगिनि तन्नाशस्य परश्वःकालवृत्तित्वात् परश्वो नङ्क्ष्यतीति व्यवहारः स्यात्। एवं वर्त्तमानत्वस्य नाशे

---

(१) पुस्तकविशेषे 'भू'पदं नास्ति। (२) 'प्रत्यायनादि'त्यनन्तरं 'प्रत्ययेन तादृशोत्पत्तिकत्वमुपस्थाप्यते, तथाचानन्वय' इत्यधिकः पाठः। (३) 'तादृशोत्पत्त्यर्थकत्वे' इति पाठान्तरम्। (४) 'प्रत्ययार्थप्रतियोगित्वानन्वयापाता'दिति पाठभेदः।

(A) सापेक्षत्वादित्यादि व्याख्यानावसर इति शेषः।

(ल) पदार्थः पदार्थेनान्वेति, न तु पदार्थैकदेशेनेति व्युत्पत्तेर्भागकत्वादिति भावः।

अन्वयेन(१), नष्टे नश्यतीति स्यात, अतीतत्वस्य(ब) कार्थस्य नाशे अभावान्नष्ट इति न स्यादित्यर्थः। आदिना अनश्यन्नष्टवानित्यादेः परिग्रहः(२)।

नष्ट इत्यत्र उपपत्तिमाशङ्क्य निराचष्टे—'न चे'ति। 'तत्र' नष्टइत्यादिस्थले। लाघवादाह—'वर्त्तमानत्वं वे'ति। 'चिरे'ति,—निष्ठार्थकालविशेषेण सह प्रातिपदिकार्थकालविशेषस्याभेदान्वये तादृशकालस्य नाशे अन्वयेऽपि चिरविनष्टेष्वपि पूर्वेद्युरूपातीतकालवृत्तित्वस्य नाशे सत्त्वात् पूर्वेद्युर्नष्ट इति व्यवहारः स्यात्। एवं वर्त्तमानत्वस्य निष्ठार्थत्वे अधुनारूपवर्त्तमानकालवृत्तित्वान्नाशस्य चिरविनष्टेऽपि अधुना नष्ट इति व्यवहारः स्यादित्यर्थः।

## दीधितिः

कर्त्तरि विहितेनाख्यातेन कृता वा यथायथमाश्रयत्व-प्रतियोगित्वलक्षणं कर्त्तृत्वम्, आश्रय-प्रतियोगिरूपश्च कर्त्ता अभिधीयते। कार्य्यानुत्पादशायाञ्च अभावधीः सामयिकात्यन्ताभावमवगाहते।

न च प्रतियोगिसमवायिनि समयावच्छेदेनात्यन्ताभाववृत्तौ मानाभावः, भाविनि विनष्टे वा घटे इह कपाले घटो नास्तीति प्रत्ययात्। न ह्ययं घटप्रतियोगिकमभावमात्रमवगाहते, यत्किञ्चिद्घटवत्यपि तादृशप्रत्ययप्रसङ्गात्; परन्तु घटत्वावच्छिन्नप्रतियोगिताकम्। न च ध्वंसप्रागभावौ(३) तथा, सम्भवतो वा(४)न तत्र कपाले, ततः पूर्वं परतश्च बहूनां घटानां नष्टत्वादुत्पत्स्यमानत्वाच्च।

## दीधितिप्रकाशः

ननु भविष्यतीत्यादौ नङ्क्ष्यतीत्यादौ च वर्त्तमानप्रागभावप्रतियोगिन्या उत्पत्तेर्वर्त्तमानप्रागभावप्रतियोग्युत्पत्तिकस्य नाशस्य च धातुप्रत्ययाभ्यां प्रत्यायनेन धात्वर्थस्य प्रातिपदिकार्थेन सममन्वयासम्भवः। धात्वर्थप्रातिपदिकार्थयोर्भेदेन साक्षादन्वयस्याव्युत्पत्तेरत आह—'कर्त्तरी'ति।

'यथायथ'मिति,—भविष्यतीत्यादावुत्पत्तेराश्रयत्वं, नङ्क्ष्यतीत्यादौ नाशस्य प्रतियोगित्वम्, भविष्यन् घट इत्यादि(५)कृतस्थले अभेदान्वयानुरोधात् उत्पत्ते-

(१) क्वचित् 'अन्वये' इति सप्तम्यन्तपाठः। (२) 'नष्टवानित्यादेर्ग्रहः' इति क्वचित् पाठः। (३) 'प्रागभावप्रध्वंसौ' इति पाठान्तरम्। (४) 'न'कारशून्यः क्वचित् पाठः, तत्र 'नचे'त्यस्यानुषङ्गः कार्य्यः, जगदीशस्तथैवाह। (५) 'इत्यादौ' इति पाठान्तरम्।

(ब) अतीतत्वं ध्वंसप्रतियोगित्वलक्षणं, तच्च नाशस्य नाशाभावान्न सम्भवतीति भावः।

राश्रयः, नष्ट इत्यादौ च नाशप्रतियोगीत्यर्थः। कृतिरूपकर्तृत्वस्य उभयत्रानभिहितत्वात् तृतीया स्यादित्याशङ्कामपनेतुं कर्तृत्वं कर्तेत्युभयमुक्तम्। मुख्यभाक्तसाधारणकर्तृत्वस्यानभिधान एव तृतीयायाः साधुत्वात्, प्रकृते च भाक्तकर्तृत्वस्याश्रयत्वादेरेवाभिहितत्वादिति।

केचित्तु भूधातोः स्वरूपसत्तैवार्थः, 'भू सत्ताया'मित्यनुशासनात्। न चैवम् आकाशं भवतीति प्रयोगः स्यात्, आकाशमस्तीतिवदिष्टत्वात्। भविष्यत्प्रत्ययार्थश्च सर्वत्रैव वर्त्तमानप्रागभावप्रतियोगित्वम्, आश्रयत्वे लक्षणा(श) च सर्वसिद्धैव। इहाद्य घटो भविष्यतीत्यादौ देशविशेषस्य कालविशेषस्य च प्रागभावे प्रतियोगिनि चान्वयः(ष); उभयत्रान्वयसम्भव एव प्रयोगात्। नङ्क्ष्यतीत्यादावपि नाश-तत्प्रतियोगिनोश्च अद्येत्यादेरन्वय इत्याहुः।

तन्न; तथा सति दर्शाद्यक्षणोत्पत्स्यमाने(१)चैत्रे दर्शो भविष्यतीति व्यवहारो न स्यात्, दर्शस्य चैत्राधिकरणत्वेऽपि तत्प्रागभावानधिकरणत्वेन उभयत्र अन्वयासम्भवात्। भूधातोश्चाकाशं भवतीत्यादौ सत्तामात्रार्थकत्वेऽपि घटो भविष्यतीत्यादावुत्पत्ति(२)-प्रकारकबोधस्यानुभविकत्वादुत्पत्तिरेवार्थः। तत्र च शक्तिर्लक्षणा वेत्यन्यदेतत्। अत एवाह 'अत्र च धातुने'ति। अत्र, न तु सर्वत्रेत्याशय इति।

अन्ये तु दर्शे चैत्रो भविष्यतीत्यादौ सप्तम्यर्थ उत्पत्तिः, तस्याश्च धात्वर्थे स्वरूपसत्तायां स्वरूपात्मिकायामन्वयः। शरदि पुष्प्यन्ति सप्तच्छदा इत्यादावुत्पत्तेरपि सप्तम्यर्थत्वस्य व्यवस्थापितत्वात्। एवञ्च इहाद्य घटो भविष्यतीत्यादावेतद्देशोत्पत्तिका एतत्कालोत्पत्तिका वर्त्तमानप्रागभावप्रतियोगिनी च(३)या स्वरूपसत्ता

(१) 'क्षणोत्पन्न' इति पाठान्तरम्। (२) 'व्युत्पत्तित्व' इति पाठान्तरम्। (३) क्वचित् 'च'कारशून्यः पाठः।

(श) 'लक्षणे'त्यत्र आख्यातप्रत्ययस्येत्यादिः।

(ष) तथा हि इहाद्य घटो भविष्यतीत्यादौ एतद्देशाद्यतनकालाधिकरणिका या एतद्देशाद्यतनकालाधिकरणकवर्त्तमानप्रागभाव-प्रतियोगिनी स्वरूपसत्ता तदाश्रयो घट इत्याद्यन्वयबोध इति भावः। अद्य घटो नङ्क्ष्यतीत्यादौ च अद्यतनकालवृत्तिरद्यतनकालवृत्तिवर्त्तमानप्रागभावप्रतियोगिनाशप्रतियोगी घट इत्याद्यन्वयबोधः।

प्रागभावे देशकालयोरन्वयस्वीकारेण 'भवने श्वः समुत्पद्ये'त्यादिपूर्वोक्तदोषवारणम्। प्रतियोगिनि तदन्वयस्वीकारेण च श्वो भाविनि घटादौ 'अद्य घटो भविष्यती'त्यादिप्रत्ययापत्तिरूपपूर्वोक्तदोषवारणम्।

तदाश्रय इत्यर्थः। एवं नङ्क्ष्यतीत्यादावप्यूह्यम्(स)। तथा च उभयान्वयनियमो न कल्पनीयः। नश्यतीत्यादौ पुनरनायत्या वर्त्तमानोत्पत्तिः प्रत्ययार्थः(ह)। नष्ट इत्यादौ वर्त्तमानत्वमेव निष्ठादेरर्थः; अधुनेत्यत्र सप्तम्या उत्पत्त्यर्थकत्वेनैव पूर्वोक्तातिप्रसङ्गनिरासात्(क्ष)। अद्योत्पत्स्यत इत्यादौ च सप्तम्या आधेयत्वमेवार्थः, स च उत्पत्तावेव धात्वर्थेऽन्वेतीत्याहुः।

घटानुत्पाददशायाम्(१) इदानीमिह कपाले घटो नास्तीत्याकारकमेव प्रागभावप्रत्यक्षं घटो भविष्यतीति शब्देनाभिलप्यत इति मध्यमं पक्षमाशङ्क्य समाधत्ते—'कार्य्यानुत्पादे'ति। 'अत्यन्ताभाव'मिति—तदुभानार्थञ्च न सामान्यलक्षणेति पूर्वमेवोक्तमिति(२) भावः।

ननु घटो नास्तीति प्रत्ययस्य तत्रोत्पत्स्यमानघटप्रागभावः, तत्रोत्पन्नस्य घटस्य ध्वंसो वा विषय इत्यत आह—'नही'ति। 'अयम्' इह कपाले घटो नास्तीति प्रत्ययः। 'यत्किञ्चिदि'ति,—यत्किञ्चिद्घटवत्यपि घटान्तरात्यन्ताभावप्रागभावध्वंसानां घटप्रतियोगिकानां सम्भवादिति भावः। 'परन्त्वि'ति,—'घटत्वावच्छिन्नप्रतियोगिताक'मवगाहत इत्यन्वयः। 'तथा' घटत्वावच्छिन्नप्रतियोगिताकौ।

ननु ध्वंसप्रागभावाधिकरणे सामान्याभावानङ्गीकर्त्तृमते तावपि सामान्यावच्छिन्नप्रतियोगिताकौ स्वीकार्य्यौ अनन्यगतिकत्वादत आह—'सम्भवतो वे'ति। चरमघटध्वंसस्यैव घटत्वावच्छिन्नप्रतियोगिताकस्य(३) सम्भवादाह—तत्र कपाल' इति, इदानीन्तनकपाल इत्यर्थः।

'ततः पूर्व'मिति,—ध्वंसप्रागभावयोः सामान्याभावत्वस्वीकर्त्रापि यत्कालावच्छेदेन सर्वेषां सामान्याक्रान्तानां प्रागभाव एव तत्र प्रागभावस्य, एवं यत्काला-

(१) क्वचित् 'घटानुत्पादे'त्यतः पूर्वं 'ननु' इत्यधिकः पाठः। (२) 'पूर्वोक्तमिति' इति क्वचित् पाठः। (३) 'योगिकस्य' इति पाठान्तरम्।

(स) अद्य घटो नङ्क्ष्यतीत्यादौ निरुक्तरीत्या अद्यतनकालोत्पत्तिको वर्त्तमानप्रागभावप्रतियोगी च यो नाशः तत्प्रतियोगी घट इत्याद्यन्वयबोध ऊह्यः।

(ह) तादृशप्रत्ययार्थाकल्पने नष्टेऽपि घटादौ नश्यतीति प्रयोगप्रसङ्गः।

(क्ष) 'पूर्वोक्तातिप्रसङ्गे'ति—चिरविनष्टेऽपि पूर्वं नष्टोऽधुना वेति व्यवहारप्रसङ्गेत्यर्थः।

वच्छेदेन सर्वेषां ध्वंस एव तत्र ध्वंसस्य(१) सामान्याभावता स्वीक्रियते। न चात्र प्रागभावस्य सामान्या(२)भावता, अतीतघटानां प्रागभावासम्भवादित्याह 'ततः पूर्वं बहूनां घटानां नष्टत्वा'दिति। न चात्र ध्वंसस्य सामान्याभावता, अनागतघटानां ध्वंसासम्भवादित्याह—'ततः परतो बहूनां घटानामुत्पत्स्यमानत्वाच्चे'ति। सर्वाध-कालाभावात्(क) प्रागभावस्य घटत्वावच्छिन्नप्रतियोगिता न सम्भवतीति ध्येयम्।

यत्तु नन्वेतत्कपालवृत्तिघटत्वावच्छिन्नप्रतियोगिताकौ ध्वंसप्रागभावावास्ता-मालम्बनमत आह—'सम्भवतो वे'ति। 'तत्र कपाल' इत्यस्य सिद्धान्तेऽप्यनुषङ्गः। 'तत्र कपाले ततः पूर्वं बहूनां नष्टत्वा'दित्यनेन प्रागभावस्य, 'ततः परतो बहूनां घटाना-मुत्पत्स्यमानत्वा'दित्यनेन च ध्वंसस्य तत्कपालवृत्तिघटत्वावच्छिन्नप्रतियोगिता खण्ड्यत इति, तत्तुच्छम्; तद्घटत्वावच्छिन्नप्रतियोगिताकस्यैव तत्कपालवृत्ति-घटत्वावच्छिन्नाभावस्य घटो नास्तीतिप्रत्ययविषयताया अनुक्ति(ख)सम्भवादिति।

## दीधितिः

अथैवं कपालादौ कथं पट(३)ध्वंसादिशून्यताबुद्धिः? अत्यन्ताभावस्य ध्वंसाद्यविरोधित्वादिति चेत्; तत्तदधिकरणस्वरूपादतिरिक्तादेवानुगतादभावाद्वा इहेदानीं घटप्रागभाव इति च प्रत्ययो न लोकानाम्।

## दीधितिप्रकाशः

'एवम्' प्रतियोगिसमवायिन्यपि समग्रावच्छेदेनात्यन्ताभावस्वीकारे। 'कथ'-मिति,—अभावप्रतियोगिकातिरिक्ताभावानङ्गीकारादित्याशयः। 'पटध्वंसादी'त्यादिना

---

(१) 'यत्किञ्चित्कपालावच्छेदेन सर्वेषां सामान्याक्रान्तानां प्रागभावस्य, एवं यत्किञ्चित्कपालावच्छेदेन सर्वेषां ध्वंसस्य' इति पाठः क्वाचित्कः। (२) 'सामान्यतां' इति क्वचित् पाठः। (३) 'घट' इति क्वचित् पाठः। जगदीशस्तु 'पटे'ति-पाठानुसारेणैव 'कपालादाविति सावधारणम्, तथा च तन्तावपि पटध्वंसदशायां तादृशबुद्धिः स्यादिति भाव' इति व्याख्यानमाचख्यौ।

(क) 'सर्वावधिकालाभावा'दिति; संसारस्य प्रवाहक्रमेण अनादितया सर्वावधिकालस्य परिग्रहीतुमशक्यत्वादिति भावः।

(ख) 'अनुक्तिसम्भवा'दित्यस्य विलक्षणप्रतीतेः शुद्धघटत्वावच्छिन्नप्रतियोगिताकाभाव-विषयकत्वस्यैवानुभवसिद्धतया तदुक्तेरसम्भवादित्यर्थः।

पटप्रागभावपरिग्रहः। 'अत्यन्ताभावस्ये'ति,—भवन्मत इति शेषः। मन्मते तु पटात्यन्ताभावस्यैव पटध्वंसादिविरोधितया तदभावत्वमिति भावः। 'तत्तदि'ति,—कपालादौ पटध्वंसादिशून्यताबुद्धिरिति प्रथमान्तेनान्वयः। यदि च सिद्धान्तभङ्ग-(ग) प्रसङ्गाद् बिभेषि, तदा अनायत्यैव तत्तदधिकरणैरेव तत्तदभावबुद्धिरित्युपेयतामिति भावः।

अथ अननुगतानामधिकरणानामनुगतध्वंसात्यन्ताभावधीविषयत्वासम्भवं, भावे अभावत्वबुद्धेर्भ्रमत्वापातम्, अनेकेषां तादृशाभावधीविषयत्वे गौरवञ्च वीक्षसे, तदा लाघवादतिरिक्त एवाभावोऽभ्युपेयतामित्याह,—'अतिरिक्तादेवे'ति।

ननु इहेदानीं घटप्रागभाव इत्याकारकमेव प्रागभावप्रत्यक्षं, तदेव च घटो भविष्यतीति शब्दाभिलप्यमिति तद्बलादेव सामान्यलक्षणास्त्विति चरमं पक्षमाशङ्क्य निराचष्टे 'इहेदानी'मिति। शब्दप्रयोगश्च सम्भवद्विषयान्तरतया न तादृशवस्त्वन्तरसाधकः, अन्यथा(घ) शक्त्यादिपदादनभिमत-नानापदार्थसिद्धिः स्यादिति भावः।

## दीधितिः

अथैवं जातो घट इत्यादिवदुत्पन्नो घटध्वंस इत्यादि-विलक्षणप्रत्ययबलेन नाशोऽतिरिच्यतां, न तु प्रागभावः, पूर्वत्व-तत्पूर्वत्वादिव्यवहारश्च अतीतकालवृत्तित्व-तदुत्पत्तिकालीनध्वंसप्रतियोगिकालवृत्तित्वादिविषयक एवास्तु। दुःखात्यन्ताभावस्य स्वस्मिन्नुत्तरकालानुवृत्तिं, दुःखसाधनध्वंसं वा समुद्दिश्य क्रियाविशेषे प्रवृत्तिरस्तु। मानान्तरसिद्धं हि प्रयोजनमुद्दिश्य पुमांसः प्रवर्त्तन्ते, न तु तत्-(१) प्रवृत्त्यैव तत्सिद्धिः। उत्पन्नस्य पुनरुत्पादप्रसङ्गस्तु(२) लाघवात् कार्य्यादि प्रतिबन्धकत्वेनापि निरसनीयः।

## दीधितिप्रकाशः

ननु प्रागभावकार्य्यस्य अन्यथोपपादनेऽपि प्रत्यक्षबलादेव प्रागभावोऽस्त्विव त्यत(३) आह—'एव'मिति। 'एवम्' अत्यन्ताभावादिविलक्षणतया प्रागभावस्य प्रत्यक्षानङ्गीकारे।

(१) पुस्तकविशेषे 'तत्'पदं नास्ति। (२) 'प्रसङ्गश्च' इति क्वचित् पाठः। (३) 'प्रागभावोऽस्त्वत आह' इति पाठान्तरम्।

(ग) 'सिद्धान्ते'ति—अभावप्रतियोगिकातिरिक्ताभावानङ्गीकाररूपसिद्धान्तेत्यर्थः।

(घ) 'अन्यथे'ति—सम्भवद्विषयान्तरत्वेऽपि शब्दो यदि वस्त्वन्तरसाधकः स्यात्तदेत्यर्थः 'अनभिमते'ति नैयायिकानभिमतेत्यर्थः।

ननु कार्य्यानुत्पादकालीनाभावप्रत्ययस्य सामयिकात्यन्ताभावविषयत्वे कार्य्योत्तरकालीनाभावप्रत्ययोऽपि तथा स्यात्, तथा च ध्वंसोऽपि नातिरिच्येत इत्यत आह—'उत्पन्नो घटध्वंस' इति। तथा च तत्र अबाधितोत्पत्तिधीबलादेव अतिरिक्ताभावविषयकतेत्यर्थः। न च उत्पत्तेरुपनीतभानं वाच्यम्, तच्च न विषयव्यवस्थापकमिति वाच्यम्, तथा सति घटोत्पत्तिरपि न सिध्येत्। अथानन्यथासिद्धमुपनीतभानमपि वस्तुसाधकं, तदा ध्वंसोत्पत्तावपि तुल्यं तत्(१), प्रतिबन्दिसूचनायैव वा(२) उत्पन्नो घट इतिवदित्युक्तम्।

ननु महाप्रलयव्यावृत्तं सामान्यतः पूर्वत्वं प्रागभावाधिकरणकालवृत्तित्वम्, घटादिपूर्वत्वञ्च घटादिप्रागभावा(३)धिकरणकालवृत्तित्वम्, तस्य च प्रागभावं विना कथं निरुक्तिरत आह,—'पूर्वत्वे'ति। सामान्यतः पूर्वत्वम् अतीतकालवृत्तित्वम्, अतीतत्वञ्च(४) ध्वंसप्रतियोगित्वम्।

तत्पूर्वत्वमाह 'तदुत्पत्ती'ति। स्वीयद्वितीयक्षणवृत्तिध्वंसप्रतियोगिप्रथमक्षणवृत्तित्वात् सर्वस्यैव स्वपूर्वत्वापत्तिरत आह—'तदुत्पत्ती'ति। कालोऽत्र क्षणः। तेन सर्वस्यैव स्वोत्पत्त्यधिकरणमहाकालवृत्तिध्वंसप्रतियोगिकालवृत्तित्वेऽपि न स्वपूर्वत्वापत्तिः। स्वोत्पत्तिक्षणवृत्त्यत्यन्ताभावप्रतियोगिद्वितीयादिक्षणवृत्तित्वात् सर्वस्यैव स्वपूर्वत्वापत्तिरतो 'ध्वंसे'ति। स्वोत्(५)पत्तिक्षणवृत्तिध्वंसप्रतियोगिज्ञानादौ विषयिता सम्बन्धेन घटादेः सत्त्वात् स्वस्यापि स्वपूर्वत्वापत्तिरतः 'समये'ति कालिकसम्बन्धेन वृत्तित्वलाभायोक्तमिति।

ननु प्रागभावानङ्गीकारे दुःखप्रागभावार्थितया प्रायश्चित्तादौ प्रवृत्तेरनुपपत्तिरत(६) आह—'दुःखात्यन्ताभावस्ये'ति। अत्यन्ताभावस्य सदातनत्वेन स्वत एवोत्तरकाले अनुवृत्तेराह 'स्वस्मिन्नि'ति।

ननु उत्तरकालानुवृत्तिरुत्तरकालसम्बन्धः, स च उत्तरकालस्वरूपः अत्यन्ताभाव-(७)स्वरूपश्च न प्रायश्चित्तादिजन्यः, उत्तरकालस्य स्वकारणाधीनत्वात्,

(१) 'ध्वंसेऽपि तुल्यमेतत्' इति पाठान्तरम्। (२) क्वचिद् 'वा' शब्दस्थाने 'च'-कारो दृश्यते। अन्यत्र 'वा'कारः 'च'कारो वा नास्ति। (३) 'तत्प्रागभावे'ति क्वचित् पाठः। (४) अन्यत्र 'च'कारो नास्ति। (५) 'स्वोत्पत्ती'त्यारभ्य 'घटादेः सत्त्वात्' इत्यन्तपाठस्थले क्वचिद् 'घटादेरपि स्वोत्पत्तिक्षणवृत्तिध्वंसप्रतियोगिज्ञानादौ विषयतया वृत्तित्वात्' इति पाठान्तरम्। (६) 'प्रवृत्तिरनुपपन्नेत्यत' इति पाठान्तरम्। (७) 'अभावस्वरूपश्च' इति पाठान्तरम्।

अत्यन्ताभावस्य च नित्यत्वादतो नवीनमतमाह—'दुःखसाधनध्वंस'मिति । नवीनमते दुःखसाधनध्वंसस्यैव(ङ) स्वतः पुरुषार्थत्वादिति भावः ।

ननु यद्यपि इयं प्रवृत्तिः सफला प्रेक्षावत्प्रवृत्तित्वादित्यनुमानस्य दुःखसाधनध्वंसादिफलकतया अन्यथासिद्धिः, तथापि इयं प्रवृत्तिः प्रागभावफला प्रागभावोद्देश्यकप्रवृत्तित्वादित्यनुमानात् फलत्वेन प्रागभावः सिध्येदत आह 'मानान्तरे'ति । तथा च प्रागभावे प्रमाणान्तराभावात् साध्य-साधनयोरप्रसिद्ध्या (च) नैतादृशानुमानमिति भावः ।

ननु तद्घटोपधायक-तत्कपालतत्संयोगादीनां तद्घटोत्पत्तिकालेऽपि सत्त्वात् पुनरपि तद्(१)घटोत्पत्त्यापत्तिः । अत एव च नापाद्याप्रसिद्धिः ; तद्घटद्वितीयक्षणो यदि स्वाव्यवहितप्राक्कालवृत्ति-तद्घटसामग्रीकः स्यात्, तद्घटोत्पत्तिमान् स्यादित्यापादनात् । प्रागभावाङ्गीकारे च तदभावादेव न पुनस्तदुत्पत्तिरतस्तदप्यन्यथोपपादयति 'उत्पन्ने'ति । 'कार्य्यादे'रित्यादिना कार्य्योत्पत्तिकालीनोत्पत्तिक-(२)ध्वंसपरिग्रहः । तेन निर्विकल्पकस्य(छ) चतुर्थक्षणे न पुनरुत्पादापत्तिः ।

नन्वेतत्(३)कालीनानन्तध्वंसाद्यभावानां कारणत्वमपेक्ष्य लाघवादेक एव प्रागभावो हेतुः कल्प्यत इति वाच्यम्, प्रागभावकल्पनेऽपि तत्कालोत्पत्तिकानन्तपदार्थप्रतियोगिकानामनन्तानां प्रागभावानां विनिगमनाविरहेण हेतुताया दुर्वारत्वात् ।

---

(१) पुस्तकविशेषे 'तत्' पदं नास्ति । (२) 'पत्तिक्षणोत्पत्तिक' इति पाठान्तरम् । (३) 'न च तत्' इति पाठान्तरम् ।

---

(ङ) अत्र 'एव'कारोऽप्यर्थे । तथा हि बलवद्द्वेषविषयाभावस्यैव स्वतः पुरुषार्थत्वेन सुखदुःखाभावयोरिव दुःखसाधनदुरितध्वंसस्यापि बलवद्द्वेषविषयाभावतया स्वतःपुरुषार्थत्वसम्भवादिति भावः ।

(च) 'साध्य-साधनयो'रिति—प्रागभावफलत्व-प्रागभावोद्देश्यकप्रवृत्तित्वरूपयोरप्रसिद्धप्रागभावघटितयोः साध्यहेत्वोरित्यर्थः । 'एतादृशानुमान'मिति—'इयं प्रवृत्तिः प्रागभावफले'-त्येतादृशानुमानमित्यर्थः ।

(छ) सविकल्पकज्ञानव्यक्तीनां पौर्वापर्य्यनिर्वाहाय विशेषणज्ञानव्यक्तीनां तत्तद्व्यक्तित्वेन हेतुताया आवश्यकत्वेन तत्तद्विशेषणज्ञानरूपहेत्वभावेनैव न सविकल्पस्य चतुर्थादिक्षणे पुनरुत्पादापत्तिसंभव इति निर्विकल्पकस्येत्युक्तम् । निर्विकल्पकस्य प्रतिबन्धकतयैव द्वितीयतृतीयक्षणयोरापत्तिः शक्यनिरासेति द्वितीयतृतीयक्षणयोरापत्तिमनभिधाय चतुर्थक्षणे आपत्तिरभिहिता ।

तथा चं प्रागभावकल्पनागौरवं परमतिरिच्यते। अत एवाह,—'लाघवादि'ति। प्रागभावकल्पने तु धर्मिकल्पनागौरवादिति भावः।

एतेन धर्माधर्मौ प्रति मिथ्याज्ञानवासनानां(१) कारणत्वं तत्त्वज्ञानिनां धर्माधर्मानुत्पत्तिवशात् कल्प्यते। तथा च मिथ्याज्ञानवासनानामनन्तत्वादाद्यतत्त्वज्ञानप्रागभावस्यैव धर्माधर्महेतुत्वं लाघवादिति परास्तम्। आद्यतत्त्वज्ञानकालोत्पत्तिकानन्त(२)तदात्मसंयोगद्वित्वादिप्रतियोगिकानामनन्तानां प्रागभावानां विनिगमनाविरहेण हेतुताया दुर्वारत्वात्। तथा च अनन्तानां कारणत्वकल्पनस्या(३) विशेषे प्रागभावकल्पनागौरवमधिकम्। किञ्चाद्य(ज)तत्त्वज्ञानकालोत्पत्तिकनाशप्रतियोगिधर्माधर्महेतुः कश्चनातिरिक्त एव पदार्थः स्यात्, तस्य चाभावत्वे मानाभावः।

न च ध्वंसप्रतियोगि(४)सत्त्वावच्छिन्नं प्रति द्रव्यस्य समवायिकारणत्वादनादित्वानुपपत्तिरत एव न सत्ताश्रयः स इति वाच्यम्, सत्तानाश्रयत्वेऽपि सामान्यादितुल्यत्वसम्भवात्। तथा च भावत्वेनाभावत्वेन चानिर्णीतमतिरिक्तमेव पदार्थान्तरं स्यादिति जितं(झ) वेदान्तिभिः। अपिकारेणाप्रयोजकत्वम्। सामग्र्यव्यवहितोत्तरकालस्य कार्यवत्त्वेनैव नियमो(५), न तु पदार्थोत्पत्तिमत्त्वेनेति भावः।

## दीधितिः

तदुत्पत्तिश्च महाप्रलयमनङ्गीकुर्वतां मते स्वाधिकरणसमयध्वंसानधिकरणसमयसम्बन्धः। तदुक्तम्;—'अध्वस्तक्षणयोगस्य क्षणयोगो जनिर्मते'ति। क्षणः समयः।

(१) 'वासनाया' इति पाठान्तरम्। (२) 'तत्त्वज्ञानोत्पत्तिकालोत्पन्नानन्त' इति पाठान्तरम्। (३) 'कल्पनाविशेषे' इति पाठान्तरम्। (४) 'योगित्वविशिष्ट' इति पाठान्तरम्। (५) 'नियमात्, न तु कार्योत्पत्तिमत्त्वेनेति' पाठान्तरम्।

---

(ज) अथ समनियताभावानामैक्यमते समानकालोत्पन्नप्रागभावानामनतिरिक्ततया नानन्तकारणतानिबन्धनगौरवमित्याह किञ्चेति।

(झ) जितमिति—तादृशपदार्थस्य वेदान्तिभिरेव मतान्तरविलक्षणतया स्वीकारादिति भावः।

## दीधितिप्रकाशः

ननु तत्पूर्वलक्षण(१)प्रविष्टा तदधिकरण(अ)क्षणावृत्तिप्रागभावप्रतियोगिक्षण-सम्बन्धरूपा स्वभिन्नतदधिकरणयावत्कालप्रागभावाधिकरणक्षणसम्बन्धरूपा वा तदुत्पत्तिर्विना प्रागभावं कथं निर्वाच्येत्यत आह—'तदुत्पत्तिश्चे'ति। तत्पदं घटादिपरम्। 'स्वाधिकरणे'ति(२),—स्वं उत्पत्त्याश्रयत्वेनाभिमतं घटादि। सर्वस्यैव समयस्य विषयितया घटाद्यधिकरणज्ञानध्वंसाधि(३)करणत्वादसम्भवः स्यादतः प्रथमं समयपदं कालिकसम्बन्धेन तद्(४)घटाधिकरणत्वप्रापकम्। तद्घटाधिकरणसमय-ध्वंसानधिकरणस्य भावितद्घटगोचरज्ञानस्य विषयिता(५) सम्बन्धे अतिव्याप्तिवारणाय द्वितीयसमयपदं कालिकसम्बन्धप्रापकम(६)।

'तदुक्त'मिति,—अव्यवहितः क्षणयोगो यस्य घटादेरित्यर्थः। अत्र च स्वाधि-करणस्थूलसूक्ष्मसमयमात्रीयध्वंसानधिकरणत्वस्य द्वितीयक्षणोत्पन्नध्वंसप्रतियोगिनि आद्यक्षणे स्थूलकालेऽपि च सत्त्वात् तत्सम्बन्धस्यैवोत्पत्तित्वे उभयत्र क्षणपदं व्यर्थमत आह—'क्षणः समय' इति। महाप्रलयस्वीकारे चरमध्वंसोत्पत्तावित्-मव्यापकं स्वाधिकरणसमयस्य ध्वंसरूपकालोपाधेर्महाकालस्य च ध्वंसाप्रसिद्धेरिति भावः।

## दीधितिः

तदङ्गीकारे तु क्वचिदपि यदीयसमयसम्बन्धे यत्समयवृत्तिध्वंसप्रतियोगित्वं नास्ति, तस्य तत्समयसम्बन्धः,। स च(७)तदधिकरणक्षणावृत्तित्वव्याप्यस्ववृत्ति-ध्वंसप्रतियोगिताकसमयवृत्तित्वम्।

---

(१) 'पूर्वत्वलक्षण' इति पाठान्तरम्। (२) पुस्तकविशेषे 'स्वाधिकरणेति' इति नास्ति। (३) 'ध्वंसस्याधि' इति पाठान्तरम्। (४) 'तद्घट'पदविनाकृतम् 'अधिकरणत्वप्रापकम्' इति पाठान्तरम्। (५) 'विषयता' इति पाठान्तरम्। (६) 'सम्बन्धत्वप्रापकम्' इति पाठान्तरम्। (७) पुस्तकविशेषे 'स च' इति नास्ति, अन्ते 'वृत्तित्वम्' इत्यनन्तरञ्च 'वा'कारो वर्त्तते। तच्च न प्रकाशकारसम्मतं 'स चे'त्यस्यैव पाठस्य स्वयमुपपादनात्।

---

(अ) 'तदधिकरणे'त्यादि—अत्र अवृत्त्यन्तप्रागभावविशेषणेन द्वितीयादिक्षणसम्बन्धाति-प्रसङ्गनिरासः। प्रथमक्षणप्रागभावेऽपि तदधिकरणमहाकालवृत्तित्वसत्त्वेनासम्भवापत्ति-निवारणाय प्रथमक्षणपदम्। घटसमानकालोत्पन्नक्रियारम्भकस्थूलकालसम्बन्धे अतिप्रसङ्ग-वारणाय द्वितीयक्षणपदम्।

# दीधितिप्रकाशः

'तदङ्गीकारे' महाप्रलयाङ्गीकारे। 'यदीये'ति यत्पदमुत्पत्तिमत्त्वेनाभिमतघटादिपरम्। घटीयतृतीयक्षणसम्बन्धे द्वितीयक्षणवृत्तिध्वंसप्रतियोगित्वाभावस्य सत्त्वात् द्वितीयादिक्षणसम्बन्धे अतिव्याप्तिरतः 'क्वचिदपी'ति यदीयसमय(१)-सम्बन्धत्वावच्छेदेनाभावसत्त्वार्थमुपात्तम्। द्वितीयक्षणवृत्तिध्वंसप्रतियोगित्वस्य घटीयाद्यक्षणसम्बन्धे सत्त्वाद्द्यक्षणवृत्तिध्वंसप्रतियोगित्वाभावस्य च घटीयसमयसम्बन्धत्वावच्छेदेन सत्त्वान्नातिप्रसक्त्यप्रसक्ती।

भाविघटविषयकज्ञानरूपे घटीयविषयितासम्बन्धे आद्यक्षणवृत्तिध्वंसप्रतियोगित्वस्य सम्भवादसम्भव(२) इत्यतः प्रथमं समयपदम्। यत्र घटोत्पत्तिक्षणे विनश्यदवस्थ(३)माद्यक्षणात्मकं सर्वे ध्वंसा इत्याकारकं ज्ञानं तत्राद्यक्षणात्मकतज्ज्ञानसम्बन्धस्यापि उत्पत्तित्वात् तत्राव्याप्तिः, विषयितया तज्ज्ञानवृत्तिध्वंसप्रतियोगित्वस्य घटीयसम्बन्धसामान्य एव सत्त्वादतो मध्यमसमयपदम्।

घटीयद्वितीयादिक्षणसम्बन्धेऽपि आद्यक्षणवृत्त्यत्यन्ताभावप्रतियोगित्वस्य सत्त्वादसम्भव इत्यतो 'ध्वंसे'ति। भाविघटविषयकज्ञानवृत्ति-ध्वंसप्रतियोगित्वाभावस्य घटीयसमयसम्बन्धत्वावच्छेदेन सत्त्वात् तदीयविषयितासम्बन्धे अतिव्याप्तिरतस्तृतीयसमयपदम्। महाप्रलयोत्पत्तावप्यत्र नाव्याप्तिः चरमध्वंसीयसमयसम्बन्धस्य तत्समयवृत्तिध्वंसप्रतियोगित्वाभावादिति।

ननु क्रियामात्रस्य महाप्रलयानुरोधेन ध्वंसस्य च कालोपाधित्वाङ्गीकारे यत्र घटोत्पत्तिक्षणमारभ्य द्वित्रिक्षणमध्ये क्रियाया विनाशो न जातस्तत्र घटीयद्वितीयतृतीयक्षणसम्बन्धे क्षणत्रयात्मकस्थूलकालसम्बन्धे चातिव्याप्तिः, तद्वृत्तिध्वंसप्रतियोगित्वाभावस्य तद्घटीयसमयसम्बन्धत्वावच्छेदेनैव सत्त्वात् तद्घटोत्पादद्वितीयादिक्षणविनष्टपदार्थस्य कालोपाधित्वाभावात् प्रतिक्षणं क्रियाया विनाश इत्यनभ्युपगमात्, अतो गुर्वपि क्षणघटितं लक्षणमाह—'स च(४) तदधिकरणे'ति।

(१) पुस्तकभेदे 'समय' इति नास्ति। (२) 'सत्त्वादसम्भव' इति पाठभेदः। (३) 'क्षणविनश्यदवस्थ' इति पाठान्तरम्। (४) पुस्तकविशेषे 'स च' इति नास्ति

यद्यपि स्ववृत्तिध्वंसप्रतियोगित्वाभावव्याप्य-तदीयसमयसम्बन्धताकसमय-सम्बन्धो निरुक्तलक्षणार्थो न तु(१) तदधिकरणक्षणेत्यादिना वक्ष्यमाणस्तथापि विशेषणानां भेदेऽपि विशेष्यस्य तत्समयसम्बन्धस्यैक्यात् 'स चे'ति निर्देशोपपत्ति-रिति भावः।

तत्पदं घटादिपरम्। यत्समयवृत्तिध्वंसप्रतियोगिता तद्घटाधिकरणक्षणा-वृत्तित्वव्याप्या, तत्समयसम्बन्ध इत्यर्थः। द्वितीयादिक्षणवृत्तिध्वंसप्रतियोगिता तु न तदधिकरणक्षणावृत्तित्वव्याप्या तदधिकरणाद्यक्षण(२)वृत्तिपदार्थेऽपि द्वितीयादि-क्षणवृत्तिध्वंसप्रतियोगित्वस्य सत्त्वादिति।

आद्यक्षणवृत्तिध्वंसप्रतियोगिनामपि तदधिकरणस्थूलकालमहाकालादौ वृत्ते-रसम्भव इति 'क्षणे'ति। द्वितीयादिक्षणवृत्तिध्वंसप्रतियोगिनामपि चिरातीतानां तद्घटाधिकरणक्षणावृत्तित्वाद् द्वितीयादिक्षणसम्बन्धे अतिव्याप्तिरतो 'व्याप्ये'ति।

पूर्वोक्तरीत्या सर्वे ध्वंसा इत्याकारकं ज्ञानं यत्राद्यक्षणात्मकं, तत्र विषयितया तद्वृत्तिध्वंसप्रतियोगित्वस्य तद्घटाधिकरणवृत्तीनामपि सत्त्वादाद्यक्षणात्मक-(३) तज्ज्ञानसम्बन्धेऽव्याप्तिरतः स्ववृत्तित्वं ध्वंसस्य कालिकसम्बन्धेन वाच्यम्। भावि-घटविषयकज्ञानस्य तद्घटीयविषयितासम्बन्धे अतिव्याप्तिरतस्तद्वारणायापि(ट) चरमसमयपदमिति।

## दीधितिः

क्षणत्वञ्च स्ववृत्तिध्वंसप्रतियोग्यनाधारत्वं स्ववृत्तिध्वंसप्रतियोगिप्रतियोगिक-यावद्ध्वंसविशिष्टसमयत्वं स्ववृत्तियावद्ध्वंसविशिष्टसमयत्वं स्ववृत्तियावदभाव-विशिष्टसमयत्वं स्वस्वपूर्ववर्त्तियावत्पदार्थविशिष्टसमयत्वं वा। स्वपूर्वत्वञ्च स्वाधि-करणयावत्कालवृत्तिध्वंसप्रतियोगित्वम्। जन्यमात्रस्यैव कालोपाधित्वाददोषः।

यो यत्कालवृत्तिध्वंसप्रतियोग्यवृत्तिस्तस्य तद्वृत्तित्वमुत्पत्तिरित्यपि केचि-दिति चेत्, नैवमपचीयते किञ्चिदस्माकमित्येकदेशिनो वर्णयन्ति।

---

(१) 'स च न' इति पाठान्तरम्। (२) 'क्षण' इत्यत्र 'क्षणे' इति, तथा 'वृत्ति' इत्यत आरभ्य द्वितीय 'वृत्ति' पर्यन्तपाठस्थले केवलं 'तादृश' इति पाठः क्वचन दृश्यते। (३) पुस्तकविशेषे 'तत्' पदं नास्ति।

---

(ट) अपिः समुच्चयार्थः। तथा हि न केवलं तादृशविषयितासम्बन्धे अतिव्याप्तिवारणाय किन्तु कालिकसम्बन्धेन ध्वंसस्य स्ववृत्तित्वलाभाय चेत्यर्थः।

# दीधितिप्रकाशः

ननु तदधिकरणक्षणेत्यत्र(१) क्षणत्वं स्वजन्यविभागप्रागभावोपहितकर्मत्वं स्ववृत्तिप्रागभावाप्रतियोगि(ठ)स्ववृत्तियावत्पदार्थविशिष्टसमयत्वं वा प्रागभावं विना कथं निर्वाच्यमत आह,—'क्षणत्वञ्चे'ति। 'स्ववृत्ती'ति,— स्वं लक्ष्य(२)त्वेनाभिमत-मन्त्यशब्दादि। स्ववृत्तिर्यो ध्वंसः तत्प्रतियोग्यनाधारत्वमित्यर्थः। अत्यन्ताभाव-प्रतियोगिनोरेकस्मिन्नपि(३) क्षणे सत्त्वाद् 'ध्वंसे'ति। एकस्मिन् क्षणे ध्वंसप्रति-योगिनोरसत्त्वादिति भावः।

अत्र ध्वंसत्वनिरूपिका प्रतियोगिता ग्राह्येति ध्येयम् (४)। क्षणिकपदार्थ-मात्रस्यानङ्गीकारे त्वाह,—'स्ववृत्ती'ति। स्ववृत्तिर्यो ध्वंसः तत्प्रतियोगिप्रति-योगिको यावान् ध्वंसः तद्विशिष्टसमयत्वमित्यर्थः। यावद्ध्वंसविशिष्टसमयत्वे कृते महाप्रलयातिरिक्तक्षणाव्याप्तिरतः प्रतियोगिकान्तं ध्वंसविशेषणम्। स्ववृत्त्यत्यन्ता-भावप्रतियोगिप्रतियोगिकयावदभावविशिष्टत्वे, तादृशे यावद्ध्वंसविशिष्टत्वे वा तथै-वाव्याप्तिरिदानीन्तनक्रियादिवृत्त्यत्यन्ताभाव-प्रतियोग्यनागतपदार्थप्रतियोगिकध्वंसादि-वैशिष्ट्यस्येदानीन्तनक्रियादावभावात्। न च स्ववृत्तिध्वंसप्रतियोगिप्रतियोगिकयावद-भावविशिष्टत्वमेव सम्यगिति वाच्यम्, ध्वंसत्वस्याखण्डोपाधितया तत्राभावत्वस्या-प्रवेशेन वैयर्थ्याभावात्।

अत्र स्ववृत्तित्वं ध्वंसस्य यावद्ध्वंसविशिष्टत्वञ्च कालिकसम्बन्धेन ग्राह्यम्। एतदर्थमेव समयपदम्। तेन सर्वे ध्वंसा इत्याकारकज्ञानस्याप्यन्त्यक्षणावच्छिन्नस्य क्षणत्वाद् विषयितया तद्वृत्त्यनागतध्वंसविशिष्टत्वाभावेऽपि(५) न तत्राव्याप्तिः, न वा कालिकसम्बन्धेन(६) स्ववृत्तिध्वंसप्रतियोगिप्रतियोगिकयावद्ध्वंसानां विषयितया वैशिष्ट्यस्य क्षणद्वयावच्छेदेनैव तज्ज्ञाने सत्त्वादतिव्याप्तिरिति।

---

(१) 'तदधिकरणेत्यत्र' इति पाठान्तरम्। (२) 'क्षणत्वेनाभिमतम्' इति पाठान्तरम्। (३) 'रेकस्मिन् सत्त्वात्' इति पाठान्तरम्। (४) 'भावः' इति पाठान्तरम्। (५) 'भावान्नाव्याप्तिः' इति पाठभेदः। (६) पुस्तकविशेषे 'कालिक-सम्बन्धेन' इति नास्ति।

---

(ठ) अत्र पदार्थांशे अप्रतियोग्यन्तविशेषणेन द्वितीयादिक्षणोत्पन्न। [ध्वं]समादायासम्भव-दोषनिरासः। अतीतपदार्थमादाय पुनस्तद्दोषनिरासाय स्ववृत्तीति। [क्षण]द्वयात्मकस्थूल-कालातिव्याप्तिनिवारणाय यावदिति।

अत्र परत्र(१) च स्थिराणामेव क्रियादीनामन्त्यक्षणावच्छिन्नानामेव क्षणत्वम्, अन्त्यक्षणोत्पन्नध्वंसघटिततादृशयावद्ध्वंसवैशिष्ट्यस्य उपान्त्यादिक्षणावच्छेदेनाभावादिति ध्येयम्।

ननु स्ववृत्तित्वविशिष्टध्वंसानेव यावत्त्वेन विशिष्य तद्वैशिष्ट्यस्यैव लक्षणत्वे(ड) गुरुतरारम्भोऽनुचित इत्यत आह—'स्ववृत्तियावद्ध्वंसे'ति। स्ववृत्तिध्वंसविशिष्टत्वस्य स्थिराणां सर्वदैव सत्त्वादतिव्याप्तिरतो 'यावदि'ति। अत्रापि वृत्तित्वं वैशिष्ट्यञ्च कालिकसम्बन्धेनैव बोध्यम्। तत्प्रयोजनञ्च पूर्वोक्तमिति।

ननु ध्वंसत्वस्याखण्डोपाधित्वानङ्गीकारे जन्याभावत्वं किञ्चित्कालावृत्त्यभावत्वं वा ध्वंसत्वं वाच्यम्(२)। तत्र जन्यत्वं किञ्चित्कालावृत्तित्वं वा विशेषणं व्यर्थम्, प्रागभावानङ्गीकारेण(३)स्ववृत्तियावदभाववैशिष्ट्यस्यैव सम्यक्त्वादित्याह,—'स्ववृत्ती'ति। स्ववृत्तियावत्पदार्थवैशिष्ट्यं न कस्यापि स्थिरस्य, प्रतिक्षणं कस्यचिदुत्पत्तेः(४) कस्यचिद् विनाशादत उक्तम् 'अभावे'ति। यावदभाववैशिष्ट्यं महाप्रलयान्त्यक्षणाव्यापकं, चरमध्वंसवैशिष्ट्यस्य इदानीमभावादतः 'स्ववृत्ती'ति। समयपदव्यावृत्तिस्तु पूर्ववत्(ढ)।

अन्त्यक्षणावच्छिन्नानां स्थिराणां क्षणत्वमुक्त्वा आद्यक्षणावच्छिन्नानां तदाह—'स्वस्वपूर्वे'ति। अतिरिक्ताभावानङ्गीकारे लक्षणमाह—'स्वस्वपूर्वे'ति कश्चित; तन्न; स्वपूर्वत्वं स्वाधिकरणयावत्कालवृत्तिध्वंसप्रतियोगित्वमिति-ग्रन्थविरोधात्।

स्वं लक्ष्यत्वेनाभिमतं क्रियादिकम्। स्ववृत्तियावत्पदार्थवैशिष्ट्यं न कस्यापि स्थिरस्य, प्रतिक्षणं कस्यचिदुत्पन्नत्वात् (५) कस्यचिद् विनाशात्। एवं स्वपूर्ववृत्तियावत्पदार्थवैशिष्ट्यं(६) न कस्यापि, चिरातीतानां तत्राभावादत उभयमुपात्तम्(ण)। स्ववृत्तिः सन् स्वपूर्ववृत्ति(७)र्यावान् तद्वैशिष्ट्यं स्थिराणाम् आद्यक्षणावच्छेदेन; द्वितीयादिक्षणे प्रथमादिक्षणवृत्तिपदार्थानां नाशादिति ध्येयम्।

(१) पुस्तकविशेषे 'परत्र' इति नास्ति। (२) एकत्र 'वाच्यम्' इति नास्ति। (३) क्वचित् 'प्रागभावानङ्गीकारे' इति सप्तम्यन्तपाठः। (४) एकत्र 'कस्यचिदुत्पत्तेः' इति पाठो नास्ति। (५) 'कस्यचिदुत्पत्तेः' इति पाठभेदः। (६) एकत्र 'पदार्थ' इति पाठो नास्ति। (७) 'वर्त्ती यावान्' इति पाठान्तरम्।

(ड) 'लक्षणत्वे' इत्यस्य लक्षणया लक्षणत्वसम्भव इत्यर्थः।

(ढ) 'पूर्ववदि'ति—कालिकसम्बन्धेन स्ववृत्तित्वस्य यावदभाववैशिष्ट्यस्य च पूर्वोक्तरीत्या लाभार्थं समयपदमित्यर्थः

(ण) 'उभय'मिति—स्ववृत्तित्वं स्वपूर्ववृत्तित्वञ्चेत्युभयम्।

अत्र स्वस्वपूर्ववर्त्तित्वं वैशिष्ट्यञ्च(१) कालिकसम्बन्धेन, तल्लाभायैव समय-पदम्। तेन स्वद्वितीयादिक्षणोत्पन्नस्य कालिकतया स्ववृत्तेः स्वपूर्वस्मिन् ज्ञानादौ विषयितया वृत्तेश्च आद्यक्षणे तद्वैशिष्ट्याभावेऽपि नासम्भवः। न वा एतत्पूर्वकालीना एतत्कालीनाश्च सर्वे पदार्था इत्याकारकज्ञानस्यापि आद्यक्षणे क्षणत्वाच्चिरातीताना-मेतत्पूर्ववर्त्तिनामपि विषयितया स्ववृत्तित्वात् तद्वैशिष्ट्यस्याद्यक्षणे असत्त्वेऽपि स्वस्व-पूर्ववृत्तीनां विषयितया वैशिष्ट्यस्य क्षणद्वयान्तर्भावेण सत्त्वेऽपि वाव्याप्तिरतिव्याप्तिर्वा।

ननु स्वपूर्ववर्त्तित्वं स्वोत्पत्तिकालीनध्वंसप्रतियोगिकालवृत्तित्वं ; तथा च अन्योन्याश्रयः ; उत्पत्तिलक्षणस्योत्पत्तिघटितत्वादत आह—'स्वपूर्वत्वञ्चे'ति। स्वा-नन्तरोत्पन्नस्य स्वाधिकरणचतुर्थादिक्षणवृत्तिध्वंसप्रतियोगि-स्वद्वितीयक्षणोत्पन्नानां स्ववृत्तीनां वैशिष्ट्यस्य आद्यक्षणे अभावान्महाप्रलयातिरिक्तक्षणे अव्याप्तिरतः स्वपूर्वत्व-निरुक्तौ 'यावदि'ति।

ननु क्रियामात्रस्य कालोपाधित्वे तत्पूर्वत्वलक्षणमारभ्य सर्वाण्येव लक्षणानि अनुपपन्नानि। तथा हि प्रतिक्षणं क्रियाया नाशस्य(२) अनभ्युपगमाद् यत्र घटोत्-पत्तिपूर्वतृतीयक्षणे(३) क्रियाया नाशो जातः, न घटोत्पत्तिक्षणे तत्प्राक्क्षणे वा, तत्र घटोत्पत्तिप्राक्क्षणोत्पन्ने तत्पूर्वद्वितीयक्षणोत्पन्ने वा पदार्थे घटपूर्वत्वव्यवहारो न स्यात्। एवं यत्र घटोत्पत्तिमारभ्य क्षणद्वयान्तर्भावेण क्रियाध्वंसो न जातः, तत्र द्वितीयक्षणसम्बन्धे 'स्वाधिकरणे'त्यादिकं 'यदीयसमयसम्बन्ध' इत्यादिकञ्चोत्पत्ति-लक्षणमतिव्याप्तम्।

एवं यत्र क्षणद्वयमध्ये क्रियाया न विनाशसामग्री, न वा उत्पत्तिः, तत्कालोत्-पन्नज्ञानाद्युत्पत्तौ तदधिकरणक्षणावृत्तित्वघटितलक्षणमव्याप्तं ; तज्ज्ञानाद्यधि-करणक्षणस्याप्रसिद्धेः। एवं यत्र घटादेराद्यक्षणे क्रियाया नोत्पत्तिर्विनाशसामग्री वा, किन्तु द्वितीयादिक्षणे, तत्र द्वितीयादिक्षणसम्बन्धे अतिव्याप्तिः। एवं यदा क्रियाया न विनाशसामग्री, तदा अन्त्यक्षणावच्छिन्नक्षणलक्षणं, यदा नोत्पत्तिस्तदा आद्यक्षणा-वच्छिन्नक्षणलक्षणमव्याप्तम्। महाप्रलयोत्पत्तौ महाप्रलयक्षणे च सर्वलक्षणानामेवा-व्याप्तिरत आह,—'जन्यमात्रस्यैवे'ति। मात्रपदं कृत्स्नार्थकम्।

नित्यस्य कालिकसम्बन्धेनाव्यावर्त्तकतया व्यावर्त्तकत्वार्थं जन्यानामनुप्रवेशा-वश्यकत्वे तेषामेव कालोपाधिताया युक्तत्वादिति भावः। तथा च प्रतिक्षणं

(१) 'वैशिष्ट्यञ्च' इत्यतः पूर्वं 'स्ववृत्तित्वम्' इत्यधिकः पाठः क्वापि दृश्यते।
(२) 'विनाशस्य' इति पाठान्तरम्। एकत्र 'पूर्व' इति पाठो नास्ति।

कस्यचिदुत्पत्तिः कस्यचिद् विनाश इत्यभ्युपगमात्, तत्र तत्र च(१) तत्तत्पदार्थाना-मेवोक्तरूपावच्छिन्नानां क्षणत्वान्न कोऽपि दोषः। महाप्रलयेऽपि चरमध्वंसस्यैव क्षणत्वान्नाव्याप्तिरिति भावः।

ननु क्षणत्वव्यवहारविषयो महाकाल एव, तथा चासम्भवः, तत्र निरुक्तस्वपूर्ववृत्त्यप्रसिद्धेरत आह—'जन्यमात्रस्यैवे'ति। मात्रपदेन नित्यव्यावृत्तिरिति तु कश्चित्।

क्षणाघटितमुत्पत्तिलक्षणमाह,—'यो यत्काले'ति। यत्पदं घटादिपरम्। आद्यक्षणवृत्तिध्वंसप्रतियोगिनि समये घटादेरवृत्तेः द्वितीयादिक्षणवृत्तिध्वंसप्रतियोगिन्याद्यक्षणे वृत्तेर्नाव्याप्त्यतिव्याप्ती(२)। अत्र सर्वे ध्वंसा इत्याकारकाद्यक्षणात्मकज्ञाने विषयितया भाविध्वंसानां वृत्तेस्तत्प्रतियोगिकालवृत्तित्वाद् घटस्य तादृशज्ञानात्मकाद्यक्षणसम्बन्धे अव्याप्तिः, अतो यत्कालवृत्तीत्यत्र कालिकतया वृत्तिर्वाच्या। आद्यक्षणवृत्तिध्वंसप्रतियोगिन्यतीतज्ञाने विषयितया घटादेर्वृत्तेरसम्भव इत्यतः प्रतियोग्यवृत्तिरित्यत्रापि कालिकरूपा(त) वृत्तिः।

एवमतीतज्ञानवृत्तिध्वंसप्रतियोग्यवृत्तेर्घटस्य अतीतज्ञाने विषयितया वृत्तित्वे अतिव्याप्तिरतस्तत्कालवृत्तित्वमित्यत्रापि कालिकतया वृत्तित्वं वाच्यमिति। अत्रापि क्रियामात्रस्य कालोपाधित्वस्वीकारे यत्र क्षणद्वयमध्ये क्रियाया विनाशो न जातः, तत्र द्वितीयक्षणवृत्तिध्वंसप्रतियोगिनि घटादेरवृत्तेर्द्वितीयादिक्षणसम्बन्धे अतिव्याप्तिरिति बोध्यम्। 'नैव'मिति,—'एवम्' प्रागभावानङ्गीकारे।

## दीधितिः

अथ पटस्य स्वानधिकरणेषु तन्तुषु उत्पत्तिवारणाय सहस्रादीनां तन्तूनां(३) तत्तत्तन्तुत्वेन तत्तत्पटजनकत्वं वाच्यम्(४), तथा च लाघवादेक एव प्रागभावः कल्प्यते, स च स्वाश्रय एव प्रतियोगिजनक इति नातिप्रसङ्गः। इत्थञ्च अनेकत्र प्रागभावसिद्धौ प्रागभावत्वेन प्रतियोगिजनकत्वाद् त्रितन्तुकेऽपि तत्सिद्धिरिति चेत्, त्रिचतुरेष्वेव तन्तुषु उत्पन्नेषु संयुक्तेषु च तत्पटोत्पत्तिप्रसङ्गः। तावत्तन्तुवृत्तेः पटस्य कतिपयविरहे कथमुत्पत्तिरिति चेन्न, कार्य्यानुत्पादस्य विना कारणविरहमनभ्युपगमात्, सामग्रीसत्त्वे अग्रिमक्षणे कार्य्यसत्त्वस्यावश्यकत्वाच्च(५)।

(१) एकत्र 'तत्र च' इति नास्ति। (२) 'नाव्याप्तिरतिव्याप्तिः' इति विग्रहेण क्वचित् पाठः। (३) क्वचित् 'तन्तूनाम्' इत्यंशेन विनाकृत एव पाठः। (४) 'वक्तव्यम्' इति क्वचित् पाठः। (५) 'कार्य्यसत्त्वस्यावश्यकत्वोपगमाच्च' इति पाठभेदः।

(त)· कालिकरूपा वृत्तिरित्यस्य कालिकसम्बन्धावच्छिन्नं वृत्तित्वमित्यर्थः।

## दीधितिप्रकाशः

'स्वानधिकरणेष्वि'ति,—तेषामपि तन्तुत्वेन तत्पटजनकत्वादिति भावः। न च तन्तुत्वेन पटत्वेन(१) कार्य्यकारणभावे पटत्वाक्रान्ताया यत्किञ्चिद्व्यक्तेस्तत्र सत्त्वात् कथं स्वानधिकरणेषु तत्पटापादनमिति वाच्यम्; यथा कार्य्यस्य कादाचित्कत्वं कारणस्य कादाचित्कत्वाधीनम्, तथा कार्य्यस्य क्वाचित्कत्वस्यापि कारणक्वाचित्कत्वाधीनत्वात्, अन्यथा(२) ज्ञानेच्छादीनां कार्य्यकारणभावेऽपि सामानाधिकरण्यप्रत्यासत्त्यपेक्षा न स्यात्। घटत्वप्रकारकधीशून्य आत्मनि तत्प्रकारकेच्छापादनस्य उक्तक्रमेणैव खण्डनसम्भवादिति।

'तत्तत्तन्तुत्वेने'ति,—न च तत्तत्तन्तुत्वेन कारणत्वकल्पने कथमनतिप्रसङ्गः? तत्पटत्वावच्छिन्न-कारणान्तरविशिष्टाया एव सामान्यसामग्र्यास्तत्पटव्याप्यत्वोपगमात् तत्पटानधिकरणतन्तुषु तत्पटत्वावच्छिन्नं प्रति हेतुताया अभावात्।

अत्रेदमवधेयम्;—तन्तुत्वेन पटत्वेन कार्य्यकारणभावे पटस्य समवायेन व्याप्यता, तन्तूनां तादात्म्येन व्यापकता। एवं यदा पटोत्पत्तिरुत्पत्तिसम्बन्धेन पटो वा, तत्पूर्वकाले तन्तुरित्येवंरूप—कालिकव्यापकतापीति व्यापकताद्वयमेव तत्र निवेश्यते। तत्तन्तुत्वेन तत्पटत्वेन कार्य्यकारणभावे तु यदा तत्पटस्तत्पूर्वं तत्तन्तुरित्येवंविधा कालिकव्यापकतैव निविष्टा, न तु यत्र तत्पटस्तत्र तत्तन्तुरित्येवं-विधा दैशिकी व्यापकतापि, तत्तन्तुभिन्नेऽपि तत्पटस्य समवायेन वृत्तेर्व्यभिचारात्।

तत्पटानधिकरणतन्तौ तन्तुरूपसामान्यसामग्र्यां तत्तन्तुरूपविशेषसामग्री-वैशिष्ट्याभावादेव तत्पटानुपधायकत्वम्। विशेषसामग्रीवैशिष्ट्यञ्च तत्तत्तन्तूनां तादात्म्यं तत्तत्संयोगानां समवाय इति क्रमेण स्वयमूह्यम्।

केचित्तु तादात्म्येन पटस्य व्याप्यता स्वानुयोगिकसमवायेन तत्तत्तन्तूनां व्यापकता। यत्र तत्पटस्तत्र तत्तन्तुरित्यत्र व्यभिचाराभावात्। एवं संयोगादिकं प्रति क्रियादीनां कारणत्वेऽपि तादात्म्येन संयोगस्य व्याप्यता, सामानाधिकरण्येन क्रियाया व्यापकता। एवं कालिकव्यापकतापीति। सर्वत्र कारणतायां व्यापकताद्वयं निविशत इत्याहुः।

(१) क्वचित् 'कार्य्यक्वाचित्कत्वस्यापि' इति पाठः।

(२) अन्यथा—कार्य्यगतक्वाचित्कत्वस्य कारणगतक्वाचित्कत्वानधीनत्वे इत्यर्थः।

'स्वाश्रय एवे'ति'—सामानाधिकरण्यप्रत्यासत्त्यैव तस्य हेतुत्वादिति(१) भावः। 'इत्थञ्च' उक्तलाघवेन चेत्यर्थः। 'अनेकत्रे'ति,—बहुषु समवायिकारणेष्विति भावः। 'द्वितन्तुक-पटेऽपी'ति,—तत्र तदुभयोरेव(२) तन्त्वोरेकस्या एव संयोगव्यक्तेर्वा तद्व्यक्तित्वेन अनन्यथासिद्धत्वमात्रं कल्पने(३) लाघवात्। प्रागभावकल्पने तु धर्मिणस्तत्र अनन्यथासिद्धत्वनियतपूर्ववर्त्तित्वयोश्च कल्पने गौरवादित्याशयः।

'तत्सिद्धिः' प्रागभावसिद्धिः। प्रागभावकल्पनेऽपि तन्तूनां तत्तत्तन्तुत्वेन(४) हेतुत्वकल्पनस्यावश्यकत्वे(५) तत एवातिप्रसङ्गभङ्गे किं प्रागभावकल्पनयेत्याह—'भिन्नतुन्त्वि'ति। असमवायिकारणसत्त्वार्थ(६)माह—'संयुक्तेषु चे'ति।

न च दशतन्तुक-पटोत्पत्तिकाले नवानां तन्तूनां तत्तत्संयोगानाञ्च सत्त्वात् नवतन्तुकः पटः कथं न जायत इति वाच्यम्; तत्र दशतन्तुक-पटध्वंसस्यापि तत्त्वेन हेतुत्वात्।

इदञ्चात्रावधेयम्;—दशतन्तुक-पटोत्पत्तिप्राक्कालेऽपि नवतन्तुक-पटोत्पत्तिर्भवति, दृढतरवेमाभिघातेन तन्नाशे(द) च तन्त्वन्तरसंयोगाद् दशतन्तुक-पटोत्पत्तिः, तत्काले च न पूर्वोत्पन्ननवतन्तुक-पटस्य(७)पुनरुत्पत्तिः, तत्कालोत्पन्नध्वंसविशेषस्य प्रतिबन्धकत्वात्। तन्नाशक(ध)नाशप्रतियोगिन्याः संयोगव्यक्तेर्विशिष्य हेतुत्वाद्वा।

---

(१) 'हेतुत्वमिति' इति क्वचित् पाठः। (२) 'तत्र द्वयोरेव' इति पाठान्तरम्। (३) 'मात्रकल्पने' इति पाठान्तरम्। (४) 'तत्त्वेन' इति पाठभेदः। (५) 'हेतुत्वस्यावश्यकत्वे' इति पाठान्तरम्। (६) 'सत्त्वायाह' इति पाठान्तरम्। (७) क्वचित् 'नवतन्तुकस्य पुनरुत्पत्तिः' इति पाठः।

---

(द) 'तन्नाश' इति—नवतन्तुक-पटनाश इत्यर्थः। तेन समवायेन द्रव्यं प्रति समवायेन द्रव्यस्य प्रतिबन्धकतया दशतन्तुक-पटोपादानेषु तन्तुषु तत्र नवतन्तुक-पटरूपप्रतिबन्धकस्य सत्त्वात् कथं दशतन्तुक-पटोत्पाद इत्याशङ्का निरस्ता।

(ध) अत्र विनिगमनाविरहेण नानाध्वंसानामेव प्रतिबन्धकत्वापातेन महागौरवमाशङ्क्य कल्पान्तरमाह 'तन्नाशके'त्यादिना।

दशतन्तुकस्यैकतन्त्वपकर्षणानन्तरं यो नवतन्तुकस्तत्र च दशतन्तुकध्वंसस्यैव तत्त्वेन हेतुत्वान्न तस्य दशतन्तुक-पटोत्पादकाल उत्पाद इति। तत्र त्रितन्तुकस्य चतुस्तन्तुकस्य वा पटस्योत्पादात् पटसामान्योत्पत्त्यापादनं न घटत इत्यतः 'तत्-पटोत्पत्ती'ति। 'विना कारणविरह'मिति,—तन्तूनां तत्संयोगानाञ्च तन्तुत्वेन विजातीयसंयोगत्वेन च हेतुतया तदवच्छिन्नव्यतिरेकस्यासम्भवादिति भावः। कार्य्यानुत्पादे अनभ्युपगममुक्त्वा कार्य्योत्पादप्रसङ्गप्रयोजकमाह—'सामग्रीसत्त्व'इति।

## दीधितिः

तत्पटप्रागभावाश्रय-यावत्तन्तुत्वेन तत्पटजनकत्वमिति चेत्, अवच्छेदककोटौ प्रागभावस्य प्रवेशाप्रवेशयोः कारणत्वे प्रमाणाभावः। परस्परासंयुक्तेषु कतिपयतन्तुषु तत्पटो जायेत।

न च तत्पट(१)प्रागभावव्याप्य-यावत्संयोगानामपि जनकत्वं, कतिपयतन्तु-संयोगेष्वतीतेषु अनागतेषु वा तत्पटानुत्पत्तिप्रसङ्गात्। तत्पटप्रागभावमपेक्ष्य स एव पटो लघीयान्, यावत्त्वानिरुक्तेश्च। एतेन द्वित्व(२) त्रित्वाद्युत्पत्तिर्व्याख्यातेति।

## दीधितिप्रकाशः

'प्रवेशे'ति;—प्रवेशे कारणतावच्छेदकत्वेनान्यथासिद्धिः, अप्रवेशे तत्तत्तन्तूनामेव विशिष्य हेतुत्वावश्यकत्वे कृतं प्रागभावस्य हेतुत्वेनेति भावः। ननु अकारणत्वे-ऽप्यवच्छेदकतयैव प्रागभावः सिध्येत्। अवच्छेदकत्वे वा स्वतन्त्रान्वयव्यतिरेक-शालित्वात् कारणत्वं स्यादत आह—'परस्परे'ति।

'कतिपये'ति,—तेनासमवायिकारणस्य यत्किञ्चित्संयोगस्य सत्त्वेऽपि(च) तत्पटानुत्पत्त्या तावत्संयोगानामेव विशिष्य हेतुत्वं वक्तव्यम्। तथा च तन्तुत्वेन कारणत्वेऽपि न क्षतिरिति प्रागभावस्यावच्छेदकत्वमपि(३)नेति भावः। 'अनागते-ष्वि'ति,—तत्तन्तुमात्रवृत्तीनामेव संयोगानां दैशिकतया तत्प्रागभावव्याप्यत्वादिति भावः।

(१) 'तत्प्रागभाव' इति पाठान्तरम्। एकत्र 'तत्' इति नास्ति। (२) एकत्र 'द्वित्व' इति नास्ति। (३) 'च्छेदकतापि' इति पाठान्तरम्।

(च) अत्र उपलक्षणेन समवायिकारणभूतानां तावत्तन्तूनां सत्त्वेऽपीत्यपि बोध्यम्।

ननु तत्पटप्रागभावाधिकरणं यः कालस्तद्वृत्तिः(१) सन् यस्तत्पटप्राग-भावानधिकरणकालवृत्तिः तादृशतत्प्रागभावव्याप्ययावत्संयोगत्वेन पटजनकत्वम्। न चैवं सति अतीतानागतसंयोगमादाय दोषसम्भवः। तत्पटाव्यवहितपूर्वक्षण-वृत्ति-तत्पटोत्पत्तिक्षणवृत्ति-तत्पटप्रागभावव्याप्य-यावत्संयोगानामेवोक्तरूपावच्छिन्न-त्वादत आह—'तत्पटप्रागभाव'मिति। तथा च तत्पटाधिकरणकालध्वंसानधि-करणं सद् यत् पटानधिकरणं कालिकतया तद्वृत्तिः सन् यस्तत्पटवृत्तिः, तादृश-तत्पटव्याप्य-यावत्संयोगत्वेन हेतुत्वे लाघवमिति भावः।

अत्र च तत्पटोत्पत्तिकालोत्पत्तिक-ध्वंसप्रतियोगिसंयोगव्यक्तिवारणाय कालिकतया तत्पटवृत्तित्वं, पूर्वत्र च तत्पटप्रागभावानधिकरणकालवृत्तित्वं संयोग-विशेषणम्। तेन तत्पटस्य न क्षणिकत्वमिति ध्येयम्।

केचित्तु यत्र अतीतानागतसंयोगाभावस्तत्रैव तावत्संयोगानुगमकत्वेन प्राग-भावः सिध्येदत आह(२)—'तत्पटप्रागभाव'मिति।

न च यत्र त्रिचतुरेष्वेव तन्तुषु संयोग उत्पन्नः, तत्र तन्त्वन्तरे संयोगानुत्-पाददशायां तत्पटोत्पादप्रसङ्गभयेन उक्तरूपेण यावत्संयोगानां तत्र(३) हेतुत्वस्योक्त-त्वात् त्रिचतुरेषु तन्तुषु संयुक्तेषु(४) च त्रितन्तुकादिपटस्योत्पादावश्यकत्वे संयोगनाशाधीनतन्नाशानन्तरमेव दशतन्तुक-पटस्योत्पादेन तत्र तादृशसंयोगस्य कस्यचिदवश्यमतीतत्वमिति(५) वाच्यम्, यत्र त्रिचतुरेषु तन्तुषु संयोगोत्पादे त्रितन्तुकादिपटोत्पत्त्यनन्तरमन्यैः सर्वैस्तन्तुभिः संयोगो जातः, अथैकतन्तुनाशात् त्रितन्तुकस्य नाशे(६) अवस्थितसंयोगेभ्यो दशतन्तुकोत्पाद(७) स्तत्रातीतानागत-संयोगविरहस्य सम्भवादित्याहुः।

ननु तत्पटस्येव तत्प्रागभावस्यापि अखण्डतया तत्त्वेनैव प्रवेशे क्व लाघवमत आह—'यावत्त्वे'ति। संयोगे यावत्त्वमपेक्षाबुद्धिविशेषः(घ)। तथा च तत्प्रागभाव-

(१) 'तत्पटप्रागभावाधिकरणकालप्रागभावानधिकरणं सन् यः तत्पटप्राग-भावाधिकरणं कालस्तद्वृत्तिः' इति पाठान्तरम्। (२) एकत्र 'आह' इति नास्ति। (३) पुस्तकविशेषे 'तत्र' इति नास्ति। (४) 'संयोगे च' इति पाठान्तरम्। (५) पुस्तकभेदे 'अवश्यम्' इति नास्ति। (६) 'अथैकतन्तुकस्य नाशे' इति क्वचित् पाठः। (७) 'तन्तुकस्योत्पाद' इति क्वचित् पाठः।

(घ) 'अपेक्षाबुद्धिविशेष' इति विषयतासम्बन्धेनेति शेषः, विषयतासम्बन्धेनापेक्षाबुद्धि-विशेषवत्त्वमित्यर्थः। जगदीशस्तु अपेक्षाबुद्धिविशेषविषयत्वमेव यावत्त्वमाह।

व्याप्यसंयोगत्रयमात्रविषयिण्या अपेक्षाबुद्धेर्वारणाय तत्तत्संयोगव्यक्तीः प्रातिस्विक-रूपेणोपादाय तत्तद्वगाहित्वेन तादृशापेक्षाबुद्धिविशेषस्योपादाने तत्तद्वगाहित्वानां परस्परं विशेष्यविशेषणभावे विनिगमनाविरहेण तावत्संयोगसमसंख्याककार्य्य-कारणभावावश्यकत्वे अतिगौरवादिति भावः।

आचार्य्यमतं दूषयति 'एतेने'ति। यावति द्वित्वादिप्रागभावः, तावत्येव द्वित्वादिः। अन्यथा द्रव्यस्य समवायिनो नानैकत्वस्यासमवायिनो नानैकत्वाव-गाहिधियोऽपि निमित्तस्य चाविशेषाद्द्वित्वाद्युत्पत्तिनियमो न स्यादित्याचार्य्याः(क)। तत्रापि द्वयोरुत्पादेऽपरस्यानुत्पाददशायां त्रित्वाद्युत्पादापत्त्या तत्तदाश्रयाणामेव विशिष्य हेतुत्वस्यावश्यकत्वात्। द्वित्वस्थले चाधिकरणद्वयस्यैव विशिष्य अनन्यथा-सिद्धत्वद्वयकल्पने लाघवम्, प्रागभावकल्पने च धर्मिणस्तत्रानन्यथासिद्धत्वनियत-पूर्ववृत्तित्वयोश्च कल्पने गौरवमिति ध्येयम्।

## दीधितिः

परे पुनरिहेदानीं घटध्वंस इतिवदिहेदानीं घटप्रागभाव इति साधारणमेव लोकानां प्रत्यक्षं कल्पयन्तस्तद्बलात् प्रागभावं सामान्यलक्षणाञ्च व्यवस्थापयन्तो वर्णयन्ति।

अव्याप्यवृत्तेः कार्य्यस्य द्वितीयक्षणे धारावहनस्थले(२) च प्राथमिकनिर्वि-कल्पकस्य चतुर्थक्षणे उत्पत्तिवारणाय एकावच्छेदादिना कार्य्याभावस्य उत्तरज्ञाना-भावस्य च कारणत्वं वाच्यम्, तथा च लाघवात् प्रागभावस्य तत्त्वं कल्प्यते। स्वभावाधीनत्वाच्च तत्प्रादेशिकत्वात् प्रदेशनियमः संयोगादीनामिति।

## दीधितिप्रकाशः

'साधारणम्' शास्त्रीयपरिभाषाभिज्ञ-तदनभिज्ञसाधारणम्। वस्तुतो ध्वंसे सर्वसाधारणप्रत्ययवत् प्रागभावस्य तथा प्रत्यक्षं नास्त्येवेत्याशयेनाह—'कल्पयन्त' इति। 'तद्बलेन' तादृशप्रागभावप्रत्यक्षबलेन।

---

(१) 'वृत्तितयोश्च' इति पाठान्तरम्। (२) 'वाहिके'ति पाठान्तरम्।

(क) अत्र आचार्य्याणामयमभिप्रायः;—पर्य्याप्तिसम्बन्धेन द्वित्वोत्पत्तौ पर्य्याप्तिसम्बन्धेन द्वित्वप्रागभावः कारणम्। व्यासज्यवृत्तिधर्मस्य प्रागभावोऽपि व्यासज्यवृत्तिरित्यभ्युपगमा-दुदोष इति।

वर्णनीयमाह—'अव्याप्यवृत्ते'रित्यादिना। शाखावच्छेदेन जातस्य कपिसंयोगस्य मूलावच्छेदेनात्यन्ताभावसत्त्वात् पुनरुत्पत्त्यापत्तिरतः शाखावच्छेदेन संयोगात्यन्ताभावो हेतुर्वाच्यः। एवं संयोगानुत्पादकाले शाखामूलादिसर्वावच्छेदेनैव तदत्यन्ताभाव(ब) सत्त्वात् तत्सर्वावच्छेदेनैव संयोगः स्यादतः संयोगस्य प्रादेशिकत्वोपपत्तये अवच्छेदकीभूतशाखादेरपि अवच्छेदकतासम्बन्धेन संयोगं प्रति हेतुत्वं वाच्यम्(भ)। मूलादौ तादृशशाखादेरभावादेव(म)न संयोगोत्पादस्तदवच्छिन्ने(य)। एवञ्च तदुभयोर्हेतुत्वापेक्षया लाघवादेकस्यैव प्रागभावस्य हेतुत्वं कल्प्यते। तस्य च स्वावच्छेदकावच्छेदेन कार्य्यजनकत्वात्(र) प्रादेशिकत्वं संयोगादीनामिति।

प्रत्यक्षबलादसिद्धे प्रागभावे प्रागभावस्य धर्मिणस्तत्रानन्यथासिद्धत्वनियतपूर्ववर्त्तित्वयोः कल्पनात्रयमपेक्ष्य क्लृप्तनियतपूर्ववृत्तित्वयोः शाखासंयोगात्यन्ताभावयोरनन्यथासिद्धत्वद्वयमात्रकल्पनैव लघीयसी स्यादतः प्रथमं प्रागभावप्रत्यक्षमुपन्यस्तम्।

न च मूलाभिमुखक्रियातः शाखावच्छेदेन संयोगानुत्पादात् शाखाभिमुखक्रियायास्तदवच्छेदेन संयोगजनकत्वं वाच्यम्। तथा च तावतैव संयोगस्य प्रादेशिकत्वनियम इति वाच्यम्। तदभिमुखत्वस्यैकस्याभावे तत्तत्क्रियाव्यक्तेरेव तत्त्वेन तत्तत्संयोगं प्रति हेतुतया मूलाभिमुखक्रियाजन्यसंयोगव्यक्तेः शाखावच्छेदेन प्रागभावाभावादेवानुत्पादात्। शाखावच्छिन्नसंयोगव्यक्तिं प्रति मूलाभिमुखक्रियाव्यक्तेरहेतुत्वात्, क्रियान्तरस्यैव तत्र तत्त्वेन हेतुत्वादिति।

लीलावतीकारमते अव्याप्यवृत्तिपदार्थाभावादाह— 'धारावहन' इति। आत्ममनःसंयोगव्यक्तेश्चक्षुर्विषयसंयोगव्यक्तेर्वा भेदात(१) तस्या एव विशिष्य हेतुत्वकल्पनयैवा(२)नतिप्रसङ्गः सम्भवतीत्यतो धारावहनपर्य्यन्तानुधावनम्। तथा च तस्यैवात्ममनःसंयोगादेश्चतुर्थक्षणपर्य्यन्तं वर्त्तमानत्वमित्यर्थः। पूर्वक्षणे स्वस्यैव प्रति-

(१) 'भेदे'इति पाठान्तरम्। (२) 'कल्पनेनैव' इति पाठान्तरम्।

(ब) 'तदत्यन्ताभावे'ति—संयोगात्यन्ताभावेत्यर्थः।

(भ) 'हेतुत्वं वाच्य'मिति तादात्म्यसम्बन्धेनेति शेषः।

(म) 'शाखादेरभावा'दिति तादात्म्येन सम्बन्धेनेति शेषः।

(य) 'तदवच्छिन्ने' मूलावच्छिन्ने अवच्छेदकतासम्बन्धेन तत्रेति यावत्।

(र) अव्याप्यवृत्तिप्रतियोगिक-प्रागभावस्याप्यव्याप्यवृत्तित्वान्न संयोगादिप्रागभावस्यावच्छेदकाप्रसिद्धिरिति ध्येयम्।

बन्धकस्य सत्त्वात् द्वितीयतृतीयक्षणे तदुत्पत्तिर्न घटत इति 'चतुर्थक्षण' इत्युक्तम्। सविकल्पकस्य तु पूर्वोत्पन्न-विशेषणज्ञानव्यक्तेस्तत्त्वेन हेतुत्वकल्पनयैव वारणं सम्भवत्यतो निर्विकल्पकपर्य्यन्तानुधावनम्। क्षणविशेषस्य विशिष्य हेतुताभ्युपगमे तु एककारणपरिशेषापत्तिरिति भावः।

न च निर्विकल्पकस्यातीन्द्रियतया तत्प्रागभावस्यापि तथात्वमिति कथं प्रत्यक्षोपष्टम्भेन तस्य हेतुत्वमिति वाच्यम्; निर्विकल्पकस्यायोग्यत्वेऽपि सम्बन्धितावच्छेदकप्रकारकज्ञानादेवाभावप्रत्यक्षोपगमे तत्प्रागभावस्य ज्ञानप्रागभावत्वादिरूपेण प्रत्यक्षतोपगमादिति। 'उत्तरज्ञानाभावस्ये'ति;—न चैवं पञ्चमक्षणे प्राथमिकनिर्विकल्पकापत्तिः, प्राथमिकनिर्विकल्पकध्वंसावच्छिन्नज्ञानस्य तादृशध्वंसस्य वा प्रतिबन्धकत्वे तात्पर्य्यात्। 'लाघवात्' कारणताद्वयकल्पनापेक्षया एकस्यैव(१) प्रागभावस्य कारणत्वकल्पने लाघवात्। अव्याप्यवृत्तिस्थले अवच्छेदकीभूतशाखादेः कारणत्वाकल्पने लाघवं सूचयति 'स्वभावाधीनत्वाच्चे'ति।

अत्रेदमरुचिवीजम्;—उक्तरूपेण प्रागभावस्य प्रत्यक्षमेव नास्ति। न चैवमपि कपिसंयोगस्य(२)निर्विकल्पकस्य च तत्समानकालोत्पत्तिक-तदवच्छेदकावच्छिन्न(३)-ध्वंसविशेषादेर्वा प्रतिबन्धकत्वे विनिगमनाविरहादेवातिरिक्तप्रागभावकल्पनम्। एतावता अतिरिक्तपदार्थसिद्धावपि तस्याभावत्वे मानाभाव इत्यादिकमिति।

## दीधितिः

अन्ये तु सर्वत्र तत्तत्संख्याविशेषाणां विशिष्य हेतुत्वाभ्युपगमेनैव(४) तत्तद्द्रव्योत्पादनियमसम्भवेऽपि युगपदुत्पन्नेषु नित्येषु च त्रित्वाद्युत्पत्तिनियामकत्वेन प्रागभावः कल्प्यत इत्याहुः।

## दीधितिप्रकाशः

'सर्वत्रे'ति,—बहुसमवायिकारणकद्रव्यस्थल इत्यर्थः। अयम्भावः;—दृशतन्तुक-पटादौ चरमतन्तुसंयोगसमानकालोत्पन्नस्य अन्तत ईश्वरापेक्षाबुद्धिकृतस्यैव(५) दृशत्वसंख्याविशेषस्य सामानाधिकरण्यप्रत्यासत्त्या तत्त्वेन हेतुता, तावतैव स्वानधि

(१) 'एकस्य प्रागभावस्य' इति पाठान्तरम्। (२) एकत्र 'कपि' इति नास्ति। (३) 'तदवच्छिन्न' इति क्वचित् पाठः। (४) 'हेतुत्वोपगमेनैव' इति पाठान्तरम्। प्रकाशसम्मतस्तु 'हेतुताभ्युपगमेनैवे'त्येव पाठः। (५) 'जन्यस्यैव' इति पाठान्तरम्।

करणेषु तन्तुषु तत्पटस्य नोत्पाद इति। तन्तूनां तन्तुसंयोगानाञ्च तत्तुत्वेन विजातीयसंयोगत्वेनैव च हेतुता, न तु तत्तद्व्यक्तित्वेनापि। कतिपयतन्तुसंयोगानुत्पाददशायाञ्च तादृशसंख्याव्यक्तिविरहादेव तत्पटानुत्पादसम्भवादित्याशयेनाह—'अभ्युपगमेनैवे'ति। एवकारेण तन्तुसंयोगानां विशिष्य हेतुत्वनिरासः।

न चैवं यत्र चरमतन्तुसंयोगोत्पादात् पूर्वमेव(१) तादृशसंख्याविशेषो जातः, तत्र तद्दशायां तत्पटोत्पत्त्यापत्तिरिति तत्संयोगानां विशिष्य हेतुत्वमावश्यकमिति वाच्यम्; ईश्वरापेक्षाबुद्धिजन्यसंख्या(२)विशेषस्य अतीन्द्रियतया फलबलेनैव कल्पने चरमसंयोगकाल एव तदुत्पादकल्पनात्। इत्थञ्च यत्र चरमतन्तूत्पत्तिद्वितीयक्षण एव संयोगोत्पादः, तत्क्षणे असमवायिकारणाभावेन संख्याविशेषानुत्पत्तावपि स्वतृतीयक्षणे दशत्वादिसंख्योत्पत्त्यनन्तरमेव(३)तादृशद्रव्योत्पाद इत्येवं रूपेण तत्र द्रव्योत्पादनियमः सम्भवतीत्यर्थः।

'युगपदि'ति,—क्रमोत्पन्ने(४)यत्किञ्चित्समवायिनोऽनुत्पाददशायामपि समवाय्यसमवायिनिमित्तानां प्रागभावस्य च सत्त्वात् त्रित्वाद्युत्पत्त्यापत्तिरतस्तत्र तत्-समवायिनां तत्तदेकत्वानां वा तत्तद्व्यक्तित्वेन हेतुताया आवश्यकत्वेन तत एवातिप्रसङ्गभङ्गे प्रागभावस्याकल्पनादिति भावः।

केचित्तु क्रमोत्पन्नस्थले प्रथमोत्पन्नानां द्वित्वादिकम्, चरमोत्पन्नस्य एकत्वम्, अनयोर्विशिष्य कारणत्वेनैवानतिप्रसङ्गः सम्भवतीति युगपदित्युक्तमिति व्याचक्षते। तन्न युगपदुत्पन्नस्थले द्वित्वोत्पत्तौ द्वयोरेवाधिकरणयोस्तत्त्वेनानन्यथासिद्धत्वद्वयकल्पने लाघवम्, प्रागभावकल्पने च धर्म्य-नन्यथासिद्धत्व-नियतपूर्ववर्त्तित्वानां त्रयाणां कल्पने गौरवम्, अतो द्वित्वमुपेक्ष्य त्रित्वादीत्युक्तम्। तत्र त्रित्वस्थले त्रयाणां समवायिनां तदेकत्वानां वा तत्त्वेनानन्यथासिद्धत्वत्रयकल्पने विनिगमनाविरहेऽपि(५) आदिपदग्राह्ये चतुष्ट्वादौ लाघवम्; तत्र चतुर्णां(६) समवायिनां तत्त्वेनानन्यथासिद्धत्वचतुष्टयकल्पनामपेक्ष्य प्रागभावमात्रकल्पनामात्रस्य लघुत्वादिति भावः।

न च तत्र अपेक्षाबुद्धेरेव तत्त्वेन हेतुत्वादनतिप्रसङ्गः, एकस्या एवेश्वरापेक्षाबुद्धेर्द्वित्वादिपरार्द्धपर्य्यन्तोत्पादकत्वात्। न च तथापि अस्मदादेरेकत्वद्वयमात्रज्ञाने

(१) 'पादपूर्वमेव' इति पाठान्तरम्। (२) 'बुद्धिज संख्या' इति क्वचित्। (३) 'मेवैतादृश' इति पाठान्तरम्। (४) 'क्रमोत्पन्नत्वे' इति क्वचित्। (५) 'विरहेण' इति पाठान्तरम्। (६) 'चतुर्णा'मित्यत्र 'तन्तूना'मिति क्वचित् पाठः।

त्रित्वाद्यनुत्पादात् तदेकत्वत्रयज्ञानत्वेन तत्‌त्रित्वं प्रति कारणत्वस्यावश्यकत्वमिति(१) वाच्यम् ; एवमपि अस्मदादितादृशज्ञानाविषययुगपदुत्पन्नादिस्थले ईश्वरयोगिमात्र-तादृशज्ञानविषये अपेक्षाबुद्धेस्तथा कारणत्वकल्पनापेक्षया एकस्या एव प्रागभावव्यक्तेः कल्पनस्य लघुत्वादिति भावः ।

अत्रेदमरुचिवीजम् ;—तादृशत्रित्वादिकं प्रति त्रित्वादिकमेव उपलक्षणीभूय(ल) समवायिकारणतावच्छेदकम् त्रित्वाद्याश्रयमात्रवृत्त्यन्यतमत्वं वा ; तत्प्रागभावकल्पने तस्य तद्‌व्यक्तित्वेन हेतुत्वकल्पनावत्(२) तावन्मात्रवृत्तिभेदव्यक्ते(व)रपि तत्त्वेना(श) वच्छेदकत्वसम्भवात् । एवञ्च नित्यवृत्त्यनन्तत्रित्वादिव्यक्तिप्रतियोगिकानन्तप्रागभाव-कल्पनापेक्षया(३) लाघवात् तावन्मात्रवृत्तेरेकस्या एव भेदव्यक्तेः कारणतावच्छेदकत्व-कल्पन एव त्रित्वाद्युत्पादनियमसम्भव इति ।

## दीधितिः

यत्तु(ष) ज्ञानेच्छाकृतीनां कार्य्यकारणभावग्रहो न तदुपस्थितिं विनेति । न चेच्छाकृतिकाले ज्ञानेच्छासाक्षात्कारौ, योग्यविशेषगुणयौगपद्यस्यात्मनि निषेधात्, अतो ज्ञानाद्यन्तरसाक्षात्कार एव ज्ञानत्वादिनेच्छाजनकज्ञानादिकं गृह्णातीत्यभ्यु-पेयमिति ।

## दीधितिप्रकाशः

'तदुपस्थितिम्' इच्छोपधायकज्ञान-कृत्युपधायकेच्छाव्यक्त्योरुपस्थितिम् । 'न चे'ति—इच्छाकाले ज्ञानस्य कृतिकाले चेच्छायाः साक्षात्कार इत्यर्थः ।

---

(१) 'कारणत्वावश्यकत्वमिति' इति पाठान्तरम् । (२) 'कल्पनवत्' इति पाठान्तरम् । (३) 'कल्पनमपेक्ष्य' इति क्वचित् ।

---

(ल) त्रित्वाद्युत्पादात् पूर्वं त्रित्वाद्यभावेन तेषां विशेषणत्वमसम्भवमित्यत आह—'उपलक्षणीभूये'ति ।

(व) 'भेदव्यक्ते'रिति अन्यतमत्वरूप-भेदकूटावच्छिन्नप्रतियोगिताकभेदव्यक्तेरित्यर्थः ।

(श) 'तत्त्वेने'ति तादृशभेदव्यक्तित्वेनेत्यर्थः ।

(ष) सामान्यलक्षणायां मिश्रोक्तं युक्त्यन्तरं दूषयितुमुपन्यस्यति यत्त्वित्यादि ।

संस्कारानुत्पादकाले ज्ञानानुत्पादाभ्युपगमादाह—'योगे'ति(स)। 'यौगपद्यम्' युगपदुत्पत्तिः(ह)। 'निषेधादि'ति, तथा च तदन्यथानुपपत्त्या(A) योग्यविशेषगुण-सामग्र्याः स्वेतरतादृशगुणोत्पत्तिप्रतिबन्धकत्वं(B) कल्प्यत इति भावः। 'ज्ञानाद्यन्तरे'ति.—इच्छाकृत्युप(१) धायकभिन्नज्ञानेच्छासाक्षात्कार इत्यर्थः।

# दीधितिः

तन्न;—पौर्वापर्यापरिचये धर्मिस्वरूपग्रहेऽपि कारणत्वग्रहासम्भवात; इच्छा-कृत्यनुत्पादस्थले ज्ञानेच्छयोः साक्षात्काराज् ज्ञानेच्छासामान्यव्यतिरेकनियतेच्छा-कृतिव्यतिरेकग्रहे मनसा कार्यकारणभावग्रहस्यावश्याभ्युपेयत्वात्; कृत्यनुत्पादस्थले ज्ञानेच्छयोः कृत्यनन्तरमिच्छाकृत्योः समूहालम्बनसाक्षात्कारस्य स्मरणेन च ज्ञानानुमानस्य च सम्भवात्; विंशत्यङ्गुल्यवच्छेदेन युगपद् विंशतिप्रयत्नोत्पाद-वदिच्छाकृतिकाले ज्ञानोत्पादस्याविरोधाच्च।

(१) 'इच्छायुप' इति पाठान्तरम्।

(स) योग्यत्वञ्च वेगावृत्तिप्रत्यक्षजातिमत्त्वम्। तेन निर्विकल्पकद्वयस्यापि नैकदोत्-पत्तिः। इत्थञ्च ज्ञानसंयोगयोरुक्तयोग्यतावतोर्यौगपद्येन व्यभिचारः स्यादत उक्तं विशेषेति। रूपरसयोर्योग्यविशेषगुणयोर्घटादौ युगपदुत्पादादुक्तमात्मनीति। विभिन्नावच्छेदेन सुखदुःखयो-र्यौगपद्यस्वीकारे एकावच्छेदेनेति पूरणीयमिति जगदीशव्याख्या।

(ह) 'युगपदुत्पत्ति'रिति—युगपदुत्पत्तिरूपम्, न तु युगपत्सत्त्वरूपमिति भावः; आत्मयोग्यविशेषगुणानां युगपत्सत्त्वस्यापरिहार्य्यत्वेन तन्निषेधासम्भवात्।

(A) 'तदन्यथानुपपत्त्ये'ति—तस्य आत्मनि निरुक्तयोग्यविशेषगुणयौगपद्यनिषेधस्य अन्यथानुपपत्त्या कल्प्यमान-प्रतिबध्यप्रतिबन्धकभावमन्तरेण अनुपपत्त्येत्यर्थः। फलसामग्री-सत्त्वे कार्य्योत्पत्तेरपोहितुमशक्यत्वादिति भावः। प्रकृतप्रतिबध्यप्रतिबन्धकभावकल्पने तु एकसामग्रीदशायां तदात्मकप्रतिबन्धकाभावरूपकारणविरहादेवापरतादृशगुणोत्पादस्यात्मनि निषेधोपपत्तिः।

(B) आत्मयोग्यविशेषगुणोत्पादमात्रस्यैव तादृशसामग्र्युत्तरत्वस्यावश्यकत्वेन क्वापि तादृशगुणोत्पत्तिर्न स्यादतः स्वेतरेति प्रतिबध्यकोटौ विशेषणम्। आत्मनि ज्ञानाद्युत्पत्तिदशायां पूर्वज्ञानजसंस्कारादीनां संयोगादीनाञ्च समुत्पादात् तादृशेति प्रतिबध्यकोटौ गुणविशेषणम्।

# दीधितिप्रकाशः

फलोपधायकव्यक्तिज्ञानं(१) विना यत्सत्त्वे उत्तरक्षणे(२) यत्सत्त्वमित्यन्वयस्थलस्य कारणताग्राहकस्य ग्रहासम्भवः। तद्ग्रहः सामान्यलक्षणासहकृतेनापि न(क्ष) सम्भवतीत्याशयेनाह 'पौर्वापर्य्ये'ति। 'कारणत्वग्रहासम्भवादि'ति अवश्याभ्युपेयत्वा'दित्यत्र हेतुः।

'इच्छाकृत्यनुत्पादे'ति,—इच्छानुत्पादस्थले ज्ञानस्य कृत्यनुत्पादस्थले च इच्छायाः साक्षात्कारादित्यर्थः। इदञ्च व्यतिरेकग्रह इत्यत्र हेतुः। एवञ्च सामान्यलक्षणया फलोपधायकव्यक्तिग्रहेऽपि पौर्वापर्य्याग्रहाज् ज्ञानेच्छाव्यतिरेके इच्छाकृतिव्यतिरेक इत्येवंरूपनियतव्यतिरेकग्रहानु(३)मानादिना पौर्वापर्य्योपस्थितौ मनसा कार्य्यकारणभावग्रहस्यावश्याभ्युपेयत्वे किं स्वरूपतः फलोपधायकव्यक्तिग्रहेणेत्यर्थः।

अभ्युपेत्य फलोपहितव्यक्तेरपि ज्ञानमन्यथोपपादयति—'कृत्यनुत्पादे'ति। तथा च तत्र ज्ञानेच्छयोरन्वयग्रहोऽपि सम्भवतीति भावः।

इच्छाकृत्योरपि अन्वयग्रहमाह—'कृत्यनन्तर'मिति। न च इच्छात्वकृतित्वनिर्विकल्पककाल एवेच्छानाशे कथं तादृशेच्छात्वादिना अन्वयग्रह इति वाच्यम्; निर्विकल्पकोपनयसहकारेण इच्छात्वविशिष्टोपनीतभान—कृतित्वविशिष्टलौकिकप्रत्यक्षात्मकज्ञानोत्पादात्। विशिष्टबुद्धौ विशेषणधियो हेतुत्वानभ्युपगमाद्वा। अत एव पूर्वं निर्विकल्पकमपि खण्डितम्(A)। इत्यञ्च घटमिच्छामि, करोमी(४)त्येवमिच्छाद्यनुव्यवसाय इच्छात्वाद्यंशे विशेष्ये विशेषणमित्येवंरूपो घटाद्यंशे च विशिष्टवैशिष्ट्यधीरूप एव, विशेषणतावच्छेदकप्रकारकज्ञानस्य विशेष्यविशेषणभावे कारणत्वादिति ध्येयम्।

---

(१) 'धायकज्ञानम्' इति क्वचित्। (२) 'यदुत्तरक्षणे' इति क्वचित् पाठः। (३) 'ग्रहादनु' इति पाठान्तरम्। (४) 'करवाणी'ति पाठान्तरम्।

---

(क्ष) सामान्यलक्षणया ज्ञानत्वादिरूपेण तज्ज्ञानाद्युपस्थितावपि तत्तद्व्यक्तित्वावच्छिन्नघटितपौर्वापर्य्यज्ञानं न सम्भवतीति भावः।

(A) विशेषणधियो विशिष्टधीहेतुत्वमादायैव निर्विकल्पकव्यवस्थितेरिति भावः। यदि तत्सिद्धान्ते निर्विकल्पकं नाभ्युपेयते, तदा विशेषणधियोऽनवस्थया 'विशिष्टधीमात्रमेवानुपपन्नं स्यादिति ध्येयम्।

यद्यपि यत्र ज्ञानत्वेच्छात्वकृतित्वेष्टसाधनत्वादेरुपनीतभानात्मकमपेक्षाबुद्धि-रूपश्चोपादानप्रत्यक्षं, तत्र कृत्यनन्तरं त्रयाणामेव विशिष्टसाक्षात्कारः सम्भवति, तथापि अपेक्षाबुद्ध्यनन्तरमिच्छादेरुत्पत्तौ तेनैव तस्या विनाशात् क्षणत्रयावस्थायित्वमेव न स्यात्(१), अतोऽपेक्षाबुद्ध्यनन्तरमिच्छादिकं न जायत इति मतेनैवायं प्रकारः सम्भवतीति तदुपेक्ष्यम्।

ज्ञानेच्छाकृतिकार्य्यकारणभावग्रहे प्रकारान्तरेणान्वयग्रहमाह—'स्मरणेने'ति। घटस्मरणं घटत्वविशिष्टधीजन्यं घटत्वविशिष्टस्मृतित्वादित्येवं क्रमेणेत्यर्थः। ज्ञानयोरेव यौगपद्यं नेष्यत इत्याशयेनाह 'विंशत्ये'ति(२)। तथा चेच्छाकाले ज्ञानस्य कृतिकाले चेच्छायाः साक्षात्कारो नानुपपन्न इत्यर्थः।

## दीधितिः

गोत्वे च गोनिष्ठात्यन्ताभावाप्रतियोगित्वेन समवेतत्वेन च विशेषितमविशेषितं वा गवेतरासमवेतत्वं व्याप्यतावच्छेदकम्, न तु सकलगोवृत्तित्वविशेषितम्, सामान्यलक्षणयापि ग्रहीतुमशक्यत्वात्।

## दीधितिप्रकाशः

ननु सकलगोसमवेतत्वघटितस्य गोत्वत्वस्य विना सामान्यलक्षणामज्ञानात् तेन रूपेण गोत्वलिङ्गकानुमितिर्न स्यादिति प्रगल्भमतं निराचष्टे 'गोत्वे चे'ति।

'विशेषित'मिति,—गोपदप्रवृत्तिनिमित्तत्वे साध्ये तादात्म्येन गोत्वस्य हेतुतायां विशेषितम्। तत्र गोरूपादौ व्यभिचारवारणाय अप्रतियोगित्वान्तम्(A)। मेयत्वादौ तद्वारणाय समवेतत्वमिति(B)। सत्तादौ तद्वारणाय विशेष्यमिति(C)।

न च गोत्वस्यापि संयोगादिसम्बन्धावच्छिन्नगोनिष्ठाभावप्रतियोगित्वात् समवायेन गोनिष्ठाभावप्रतियोगित्वं वाच्यम्, तथा च मेयत्वादेः(३) समवायेन

(१) 'द्वयावस्थायित्वमेव स्यात्' इति पाठान्तरम्। (२) 'विंशती'ति पाठान्तरम्।
(३) 'मेयत्वादौ' इति पाठान्तरम्।

(A) 'अप्रतियोगित्वान्त'मिति—गोनिष्ठात्यन्ताभावाप्रतियोगित्वमित्यर्थः।
(B) 'समवेतत्वेन चे'ति दीधितिप्रतिपाद्यमित्यर्थः।
(C) 'विशेष्य'मिति—गवेतरासमवेतत्वमित्यर्थः।

गोनिष्ठाभावप्रतियोगित्वात् तेनैव वारणे समवेतत्वं व्यर्थमिति वाच्यम् ; सर्वस्यैव विशिष्टाभावादिप्रतियोगित्वेन निरुक्तस्याप्रसिद्ध्या(क) समवायेन प्रतियोगित्वाश्रय-व्यधिकरणत्वस्याभावविशेषणस्यावश्यकत्वे(ख) मेयत्वाद्यभावस्य समवायेन स्वप्रति-योगिव्यधिकरणत्वाप्रसिद्ध्या प्रतियोगिव्यधिकरणत्वाभावेन(ग) तादृशप्रतियोगि-व्यधिकरणघटत्वाद्यभावाप्रतियोगित्वस्य मेयत्वादौ सत्त्वेन व्यभिचारस्यावश्य-कत्वात्(घ)।

'अविशेषित'मिति,—सास्नादौ साध्ये तत्र गवेतरासमवेतस्यापि गोत्वस्य कालादौ वृत्त्या* व्यभिचारात् समवायेन हेतुताया अवश्यं वाच्यत्वेन(१) तादृशाप्रति-योगित्वस्य समवेतत्वस्य चानुपादानादिति भावः। 'सामान्ये'ति—व्यासज्यवृत्ति-धर्मस्य साकल्यस्य गोत्वसामान्यलक्षणया ग्रहीतुमशक्यत्वादित्यर्थः।

## तत्त्वचिन्तामणिः

यत्तु पाकादौ चिकीर्षा सुखादौ इच्छा न स्यात्, सिद्धे इच्छाविरहात् असिद्धस्याज्ञानात्, तस्मात् सुखत्वादिना ज्ञातेषु सर्वेषु सिद्धं विहाय असिद्धे इच्छा भवतीत्यभ्युपेयम्। तन्न; असिद्धस्याज्ञानेऽपि सिद्धगोचरज्ञानादेव इच्छाप्रवृत्ति-स्वाभाव्यादसिद्धे तयोरुत्पत्तेः।

न चातिप्रसङ्गः; समानप्रकारकत्वेन ज्ञानेच्छाकृतीनां कार्य्यकारणभावात्, न तु समानविषयकत्वेनापि, क्वचिद्व्यभिचारकल्पनात्। समानविषयकत्वे सत्यपि

(१) 'अवश्यवाच्यत्वे' इति पाठान्तरम्।

(क) 'निरुक्तस्ये'ति तादृशाप्रतियोगित्वविशेषितस्य गवेतरासमवेतस्येत्यर्थः। अथवा तादृशात्यन्ताभावाप्रतियोगित्वस्येत्यर्थः।

(ख) 'प्रतियोगित्वाश्रये'त्यादिः,—तथा हि विशिष्टाभावादेः स्वप्रतियोगिसमानाधिकर-णत्वान्न पूर्वोक्ताप्रसिद्धिरिति भावः।

(ग) मेयत्वस्य केवलान्वयित्वेन तदभावस्य प्रतियोगिव्यधिकरणत्वासम्भव इति भावः।

(घ) अत्र 'गोनिष्ठाभावस्य प्रतियोगित्वं येन तदन्यत्वमिति व्युत्पत्त्या गोनिष्ठान्योन्या-भावप्रतियोगितावच्छेदकान्यत्वे सतीत्यर्थः। तेन गोत्वस्यापि गोनिष्ठविशिष्टोभयाभावादि-प्रतियोगित्वेऽपि न हेत्वप्रसिद्धिः। अवच्छेदकत्वं तु निरवच्छिन्नं समवायसम्बन्धावच्छिन्नं च ग्राह्यमतो नोक्तदोषतादवस्थ्य'मिति जगदीशानुशीलितः पन्थाः।

(*) 'वृत्त्ये'ति कालिकविशेषणतयेति शेषः।

समानप्रकारकज्ञानाभावेन इच्छाकृत्योरभावात् तस्यावश्यकत्वेन गौरवाभावेऽप्युपपरसिद्धान्तात् ।

न च सर्वज्ञत्वे संशयो न स्यादिति दोषः ; घटः स इति घटत्वप्रकारकं हि ज्ञानं संशयविरोधि, तच्च न वृत्तं स्वसामग्रीविरहात् , अतो घटत्वादिसकलविशेषज्ञानेऽपि स घटो न वेति संशय इति ।

इति श्रीमद्गङ्गेशोपाध्यायकृते तत्त्वचिन्तामणौ अनुमानखण्डे सामान्यलक्षणा-प्रकरणं समाप्तम् ।

## दीधितिः

'न तु समानविषयकत्वेनापी'ति । स्यादेतत्,—समानप्रकारकतामात्रस्य प्रयोजकत्वे क्वचिदेव रजतत्वप्रकारिकेच्छा, क्वचिन्नेति नियमो न स्यात्, तादृशप्रकाराश्रय एव तदुत्पादाभ्युपगमे(१) कथमरजते रजतत्वप्रकारिकेच्छा, अनुपस्थिते चासंसर्गाग्रहोऽपि न नियामकः । वस्तुतोऽसंसर्गाग्रहमपेक्ष्य लघीयसस्तद्विषयतामात्रस्यैव नियामकत्वमुचितम् । सामान्यतश्च तदिच्छायां व्यवस्थितहेतुभावस्य तद्विषयकज्ञानस्य तत्प्रकारकत्वमवच्छेदकं कल्प्यते लाघवात् ।

## दीधितिप्रकाशः

'समानप्रकारकतामात्रस्ये'ति—मात्रपदेन समानविषयत्वव्यवच्छेदः । जनकीभूतज्ञानाविषयस्यापि इच्छाविषयत्वे इच्छामात्रस्यैव सर्वविशेष्यकत्वं स्यादिति भावः ।

ननु यत्र विशेष्यतासम्बन्धेन रजतत्वप्रकारकेच्छा तत्र तत्प्रकारताघटकसम्बन्धेन* स्वप्रकारीभूतरजतत्वाश्रयत्वसम्बन्धेन ज्ञानमिति क्रमेणैव कार्य्यकारणभावो विशेषतानियामकः स्यादित्याशङ्क्य निराचष्टे—'तादृशे'ति, जनकीभूतज्ञानप्रकारीभूतरजतत्वाश्रय एवेत्यर्थः । 'तदुत्पादाभ्युपगमे' रजतत्वप्रकारकेच्छोत्पादाभ्युपगमे । 'कथमरजत' इति—अनागतशुक्तिविषयकाद् इदं रजतमिति भ्रमाद् यत्र रजतत्वप्रकारिका शुक्तीच्छा तत्र व्यभिचारान्न तादृशकार्य्यकारणभाव इत्यर्थः ।

(१) 'पादोपगमे' इति क्वचित् पाठः ।

(*) तत्प्रकारताघटकसम्बन्धेनेत्यस्य स्वप्रकारीभूत-रजतत्वाश्रयत्वांशे अन्वयो बोध्यः ।

ननु रजतत्वासंसर्गाग्रह एव रजतत्वप्रकारकेच्छायां(१)विषयतानियामकोऽस्तु इत्यत आह—'अनुपस्थित' इति २)। असंसर्गाग्रहस्य अनुपस्थिते रजते घटादौ च तुल्यत्वाद् रजतमात्रविषयकज्ञानाद् घटादावपि रजतत्वप्रकारिकेच्छा स्यादिति भावः।

यद्यपि प्रमेयत्वादिना उपस्थितेऽपि असंसर्गाग्रहो न नियामक इत्यनुपस्थित इत्यनुपपन्नम्(३), तथापि अन्यथाख्यात्यनङ्गीकर्त्तृमते ४) इदं रजतमित्याकारक-व्यवहारजनकोपस्थितिविशेष्ये तदसंसर्गाग्रहस्यैव तद्विषयत्वनियामकत्वं सम्भवतीति तद्व्यावर्त्तनाय 'अनुपस्थित' इत्युक्तम्।

ननु रजतत्वप्रकारकेच्छायामगृहीतासंसर्गस्य निखिलस्यैव विषयत्वेऽपि क्षतिविरहः, उपादानप्रत्यक्षा(ङ भावादेव तत्र प्रवृत्त्यभावोपपत्तेरत(५) आह—'वस्तुत' इति। तद्विषयकरजतत्वप्रकारकेच्छायां तदगृहीतासंसर्गक-रजतत्वप्रकारकज्ञानत्वेन कारणत्वकल्पनाम् असंसर्गाग्रहस्य सहकारित्वकल्पनाञ्चापेक्ष्य तद्विषयकरजतत्व-प्रकारकज्ञानत्वेनैव लाघवाद्धेतुत्वं कल्प्यत इति भावः।

कथं नियामकत्वं(६) तद् दर्शयति—'सामान्यत' इति। 'तत्प्रकारकत्वम्', रजतत्वप्रकारकत्वम्। 'लाघवात्' असंसर्गाग्रहादेरवच्छेदकत्वे हेतुत्वमपेक्ष्य लाघवात्।

## दीधितिः

अस्तु वा समानप्रकारकत्वेन व्यवस्थिते कार्य्यकारणभावे अतिप्रसङ्गभङ्गाय सामानाधिकरण्यमिव समानविषयकत्वमपि प्रत्यासत्तिः। असंसर्गाग्रहादेः कारणता-मपेक्ष्य समानविषयत्वस्य अवच्छेदककोटिनिवेशोऽपि लघीयान्, कारणयथार्थत्वा-यथार्थत्वाधीनस्तु कार्य्यस्य तथाविधो विशेषः।

## दीधितिप्रकाशः

नन्वेवं रजतविशेष्यकत्वस्य रजतत्वप्रकारकत्वस्य च परस्परं विशेष्यविशेषण-भावे विनिगमनाविरहात् कारणताद्वयस्यावश्यकत्वे असंसर्गाग्रहस्य हेतुत्वमपेक्ष्य

(१) 'केच्छाविषयता' इति पाठान्तरम्। (२) 'अनुपस्थिते चेति' इति पाठान्तरम्। (३) 'इत्यनुपयुक्तम्' इति पाठान्तरम्। (४) 'कुर्वतां मते' इति पाठान्तरम्। (५) 'पत्तिरत' इति पाठान्तरम्। (६) 'नियामकम्' इति पाठान्तरम्।

(ङ) 'उपादाने'त्यादिः,—प्रवृत्तिं प्रति उपादानप्रत्यक्षस्य कारणत्वादिति भावः। तदुक्तं कारिकावल्यां विश्वनाथेन,—'उपादानस्य चाध्यक्षं प्रवृत्तौ जनकं भवे'दिति।

न लाघवम्(१), किञ्च(च) रजतत्वप्रकारकज्ञानस्य सुखत्वप्रकारकज्ञानस्य च विशेष्य-भेदेनैव कारणताभेदः स्यादत आह—'अस्तु वे'ति ।

'अतिप्रसङ्गे'ति,—अतिप्रसङ्गो द्विरूपः ; एकपुरुषस्य रजतत्वप्रकारकज्ञानात् पुरुषान्तरस्य रजतत्वप्रकारकेच्छापत्तिः, एवम् एकविषये रजतत्वप्रकारकज्ञानसत्त्वे विषयान्तरे रजतत्वप्रकारकेच्छापत्तिः, अत(२)स्तद्भङ्गाय एकस्यामेव कारणतायामुभयं प्रत्यासत्तिः । तथा च यज्ज्ञानं यदात्मसमवेतं(३) यत्र विषये रजतत्वप्रकारकं तदात्मसमवेतं तत्र विषये रजतत्वप्रकारिकामिच्छां जनयतीति भावः ।

न च समानप्रकारकत्वमेव प्रत्यासत्तिरस्तु, समानविषयत्वन्त्ववच्छेदक-मस्त्विति वाच्यम् ; तथा सति सुखव्यक्तिभेदेन सुखत्वप्रकारकभ्रमविशेष्यभेदेन च कार्य्यकारणभावानन्त्यं स्यात् । किञ्च(४) सुखस्य प्रमेयत्वादिना ज्ञाने(५) इच्छा-विरहात् सुखदुःखाभावत्वादिप्रकारकत्वेन फलेच्छायामिच्छाविषयसाधनतावच्छेदक-प्रकारकधीत्वेन उपायेच्छायाञ्च(६) हेतुत्वमावश्यकम् , अतः समानप्रकारकत्वस्य न प्रत्यासत्तित्वमिति ।

ननु विषयतासम्बन्धस्य वृत्त्यनियामकत्वेन तदवच्छिन्नप्रतियोगिताया अभावेन(७) न तेन सम्बन्धेन व्यापकत्वम् , तथा च कथं प्रत्यासत्तिरत आह—'असंसर्गाग्रहादे'रिति ।

यत्तु रजतारजतयो रजतारजते इति समूहालम्बनाद् रजतत्वप्रकारिकेच्छा सर्वत्रैव स्यात् , समानविशेष्यकत्वप्रत्यासत्तेस्तौल्यादिति, तन्न ; रजतत्वप्रकारता-

(१) 'नन्वेव'मित्यारभ्य 'न लाघव'मित्यन्तग्रन्थः पुस्तकविशेषे न दृश्यते । स च सुतरामुपादेयः, अन्यथा समुच्चयार्थकस्य किञ्चेत्यादेरर्थानुपपत्तेः । (२) पुस्तकविशेषे 'अत' इति नास्ति । (३) 'यदात्मनि समवेतम्' इति पाठान्तरम् । (४) 'किञ्चित्' इति पाठभेदः । (५) 'ज्ञानेच्छा' इति पाठान्तरम् । (६) आदर्शविशेषे 'च' नास्ति । (७) 'अभावात्' इति क्वचित् ।

(च) तादृशरीत्या विनिगमनाविरहेण यद्यपि कारणताद्वयाङ्गीकारनिबन्धनं गौरवं, तथापि अवच्छेदकलाघवमभिप्रेत्याह किञ्चेति ।

निरूपितविशेष्यतासम्बन्धेन यत्र ज्ञानं तत्र तत्प्रकारकेच्छा इत्येवमुक्तौ दोषाभावादिति(A)।

यद्यपि यत्र चैत्रस्य रजतत्वप्रकारकज्ञानं रजते, मैत्रस्य शुक्तौ, तत्र चैत्रस्य शुक्तावपि रजतत्वप्रकारकेच्छापत्तिः, विषयतासम्बन्धेन मैत्रीयस्य रजतत्वप्रकारकज्ञानस्य तत्र सत्त्वात्, चैत्रीयस्य च समवायेन तदात्मनि सत्त्वादिति ; तन्न ; उभयप्रत्यासत्त्यवच्छिन्नैककारणतायामुक्तातिप्रसङ्गस्य सुदूरपराहतत्वात्।

नहि विषयतया रजतत्वप्रकारकेच्छायां विषयतया यस्य कस्यापि(१) तत्र रजतत्वप्रकारकं ज्ञानं सहकारीत्युच्यते, येन तादृशसहकारिवशात् यत्किञ्चिद्धर्मिकस्वीय(२) रजतत्वप्रकारकज्ञानेन तत्र रजतत्वप्रकारकेच्छापत्तिः स्यात्, परन्तु एकं रजतत्वप्रकारकं ज्ञानं(३) यत्र विषयतया प्रत्यासन्नं(४) सद् यत्रात्मनि समवायेन स्थितम्(५), तत्र विषये रजतत्वप्रकारिकामिच्छां तदात्मसमवेतां जनयतीति। अन्यथा परामर्शस्य सामानाधिकरण्यप्रत्यासत्त्यानुमितिजनकत्वेऽप्युक्तातिप्रसङ्गः स्यात् ; व्यधिकरणपरामर्शस्य कालिकतया अतीतस्वीयपरामर्शस्य समवायेन प्रत्यासन्नत्वाद् व्यधिकरणपरामर्शसत्त्वेऽप्यनुमित्यापादनसम्भवादिति न किञ्चिदेतत्(६)।

'समानविषयत्वस्ये'ति,— तथा च तद्विषयकरजतत्वप्रकारकेच्छां प्रति तद्विषयक-रजतत्वप्रकारकधीत्वेन कार्य्यकारणभावो विशेष्यभेदेन भिन्न एव वाच्य इति भावः। समानप्रकारकत्वस्यापि अवच्छेदकत्वात् 'कोटा'विति। 'निवेशोऽपी'त्यपिना प्रत्यासत्तित्वं समुच्चितम्।

ननु समानविषयत्वस्य प्रत्यासत्तित्वे रजतत्वप्रकारकज्ञानत्वस्य कारणतावच्छेदकस्याविशेषात् कथं यथार्थत्वायथार्थत्वरूपं कार्य्यवैलक्षण्यम् ? मन्मते(७) तु

(१) एकत्र 'तत्र' इति नास्ति। (२) एकत्र 'स्वीये'ति नास्ति। (३) 'रकज्ञानं' इति क्वचित्। (४) 'विषयताप्रत्यासन्नं' इति क्वचित्। (५) एकत्र 'स्थित'मिति नास्ति। (६) नकारशून्यं 'किञ्चिदेतत्' इति पाठान्तरम्। (७) 'स्वमते' इति पाठान्तरम्।

(A) आशङ्कितस्थले रजतत्व-प्रकारतानिरूपितविशेष्यतासम्बन्धेन रजत एव तादृशसमूहालम्बनज्ञानं वर्त्तते, नत्वरजतेऽपि, अतो न सर्वत्र रजतत्वप्रकारकेच्छोत्पत्त्यापत्तिरिति ध्येयम्।

दोषाभाव-भेदाग्रहाद्यात्मक(क)सहकारिवैलक्षण्यात् तदुपपत्तिः स्यादत आह—'कारणे'ति। 'तथाविधः' यथार्थायथार्थत्वरूपः।

## दीधितिः

एतेन रजतत्वप्रकारकेच्छायां तत्प्रकारकज्ञानं संवादिन्यां तस्यां दोषाभावसहितं, विसंवादिन्यान्तु उपस्थितरजतगतभेदाग्रहसहितं हेतुरिति परास्तम्। त्वद्दिशापि च संवादिन्यामुपस्थितरजतभेदाग्रहस्यैव हेतुत्वौचित्यात्; दोषाणां रजतभेदग्रहप्रतिबन्धकानामभावमपेक्ष्य लघुत्वात्।

## दीधितिप्रकाशः

'एतेन' कारणयथार्थत्वायथार्थत्वस्य [नियम्य] नियामकत्वेन। 'तत्प्रकारकम्' रजतत्वप्रकारकम्। 'दोषाभावसहित'मिति,—तेन रजतत्वप्रकारकज्ञानात् शुक्तौ न संवादिनीच्छा, तत्र दोषस्यैव सत्त्वादिति भावः। उपस्थितं यद् रजतं तत्र यो रजतभेदाग्रहः तत्सहितमित्यर्थः।

'त्वद्दिशापी'ति,—यथा उपस्थितारजतवृत्तित्वविशिष्टरजतभेदाग्रहस्याभावादनुपस्थिते रजतेऽरजते वा न विसंवादिनीच्छा, तथा उपस्थितं यद् रजतं तद्वृत्तित्वविशिष्टभेदाग्रहस्य हेतुत्वकल्पनयैव अनुपस्थिते अरजते रजते वा संवादीच्छाभावोपपत्तौ न दोषाभावस्य गुरोः कारणत्वं कल्पयितुमुचितमिति भावः। तथा च अनागतोप(१)स्थित्यर्थमपि सामान्यलक्षणावश्यकीति हृदयम्।

'भेदाग्रहस्यैव' इत्येवकारेण दोषाभावव्यवच्छेदः। दोषाभावापेक्षया लाघवं दर्शयति—'दोषाणा'मिति। 'रजतभेदग्रहे'ति,—दोषाणामानन्त्यात्तत्त्वेन तत्तदभावानां हेतुत्वकल्पने अनन्तकार्य्यकारणभावापत्तिरतो रजतभेदग्रहप्रतिबन्धकाभावत्वेन(क) हेतुता वाच्या। तथा च तदपेक्षया रजतभेदग्रहाभावत्वेनैव हेतुत्वमुचितमित्यर्थः।

---

(१) 'अनागतरजतोप' इति पाठान्तरम्।

---

(क) आदिपदेन दोषसहितभेदाग्रहः परिगृह्यते।

(क) रजतभेदग्रहप्रतिबन्धकत्वेन दोषाणामनुगमात्त तथा अनन्तकार्य्यकारणभावापत्तिरिति भावः।

न च भवतामपि रजतत्वाभावाविग्रहाभावस्यापि विनिगमनाविरहाद्धेतुत्वं स्यादिति वाच्यम् ; रजतत्वांशे अन्याप्रकारक-रजतत्वप्रकारकेच्छां प्रति रजतत्वाभावग्रहस्याविरोधित्वात् । तथात्वेऽपि अभावद्वयकारणतामपेक्ष्य उक्तदोषाभावस्य गुरुत्वादिति ।

'लघुत्वा'दिति ;—इदमुपलक्षणम् ; दोषाभावस्यात्मनिष्ठतया हेतुत्वे रजतरङ्गयो रजतत्वभ्रमाभ्रमाद् रजते संवादिनीच्छा न स्यात् । विषयनिष्ठतया हेतुत्वे च रङ्गे रजतत्वभ्रमकालेऽपि अनुपस्थिते उपस्थिते वा रजतादौ तादृशदोषाभावस्य सत्त्वात् संवादिनी रजतत्वप्रकारिकेच्छा स्यात् । एवं विसंवादिन्यामुपस्थितारजतभेदाग्रहस्य हेतुत्वेऽपि यथाकथञ्चिदुपस्थितारजतभेदाग्रहसत्त्वात् तादृशेच्छोत्पत्तिः स्यात् । दोषप्रयोज्यभेदाग्रहत्वेन हेतुत्वे दोषस्याननुगमादननुगमतादवस्थ्यमेवेत्यादिकमूह्यम् ।

## दीधितिः

अत्राहुः;—सिद्ध एव सुखे सुखत्वेन रूपेणेच्छा ; लाघवात् तत्प्रकारकेच्छायां तत्प्रकारावच्छेदेन सिद्धत्वज्ञानमेव हि विरोधि, न च तत् प्रकृते, तत्सत्त्वे इच्छोत्पत्तेस्त्वयाप्यनङ्गीकारात् । कथमन्यथा चिरप्रोषितस्य अज्ञातकान्तामरणस्य तत्कान्तावलोकनाद्यविच्छा, जातावलोकनादीनां सिद्धत्वज्ञानात् , अतिरिक्तस्य चासत्त्वादित्यादि बहुतरमूहनीयम् ।

## दीधितिप्रकाशः

सिद्ध एवेत्येवकारेण अनागतव्यवच्छेदः । ननु सिद्धत्वस्येच्छाविरोधित्वात् कथं सिद्धे इच्छेत्यत आह—'लाघवादि'ति । 'तत्प्रकारावच्छेदेने'ति, यत्किञ्चित्सुखे सुखत्वसामानाधिकरण्येन सिद्धत्वग्रहेऽपि सुखत्वावच्छेदेन सिद्धत्वग्रहाभावोऽस्त्येवेति भावः । 'ज्ञानमेवे'ति,—न तु सिद्धत्वमपीत्येवकारार्थः । स्वरूपसत्सिद्धत्वस्य इच्छाविरोधित्वेऽपि अनागतेऽसिद्धत्वज्ञानकाले इच्छानुदयात् सिद्धत्वज्ञानस्य विरोधित्वमावश्यकम् । तथा च कल्पनालाघवात् तस्यैव तथात्वमस्तु, न तु स्वरूपसत्सिद्धत्वस्येति भावः ।

'तत्' सुखत्वावच्छेदेन सिद्धत्वज्ञानम् । 'प्रकृते' सिद्धसुखे । सिद्धत्वं(१) नेच्छाविरोधीत्यत्र युक्तिमाह—'कथमन्यथे'ति । 'अन्यथा' स्वरूपसत्सिद्धत्वस्य

(१) 'सिद्धत्वञ्च' इति पाठान्तरम् ।

(ख) तथात्वेऽपि तादृशाभावग्रहस्य विरोधित्वेऽपीत्यर्थः । 'दोषाभावस्ये'ति तत् कारणताया इत्यर्थः ।

भिन्नरूपेण सिद्धत्वज्ञानस्य चेच्छाविरोधित्वे। 'प्रोषितस्ये'ति—कान्तामरणाज्ञानस्य इच्छासामग्र्याः संघटनाय च। यद्यपि वाधितेऽपीच्छोदयाज् ज्ञातकान्तामरणाना-मपीच्छा भवत्येव, तथापि वाधनिश्चयस्य प्रतिबन्धकत्वमभ्युपेत्याह—'अज्ञातकान्ता-मरणस्ये'ति। असिद्धे कान्तान्तरावलोकने इच्छा नानुपपन्नेत्यतः 'तत्कान्ते'ति। 'अतिरिक्तस्य' सिद्धत्वेन ज्ञातादतिरिक्तस्य।

न च तत्र तत्कान्तावलोकनत्वेनानागतो घटादिरेव इच्छाविषयः(१) स्यादिति वाच्यम्; तत्कान्तावलोकनत्वेन घटादाविच्छोत्पादक(२)दोषाभावात्, अनागतानन्त-पदार्थे तादृशेच्छाविषयत्वकल्पनामपेक्ष्य(३) तत्कान्तावलोकनत्वेन ज्ञाते कतिपया-वलोकन एव इच्छाविषयत्वकल्पने लाघवाच्चेति।

## दीधितिः

अथ सिद्धत्वनिश्चयाभावापेक्षया लाघवादसिद्धत्वज्ञानमेव हेतुः। न च सिद्धत्वेन ज्ञाते तन् सम्भवतीत्यसिद्धत्वज्ञानार्थं सामान्यलक्षणेति चेन्न; विशेषरूपा-वच्छेदेन सिद्धत्वेन ज्ञात एव सामान्यरूपेणासिद्धत्वग्रहसम्भवात्। तदेकं ज्ञानं ज्ञानद्वयं वेत्यन्यदेतत्। सामान्यलक्षणासहस्रेणाप्यसिद्धत्वस्य ज्ञातुमशक्यत्वाच्च।

## दीधितिप्रकाशः

'लाघवादसिद्धत्वज्ञानमेवे'ति,—यद्यपि भ्रमत्वेनाज्ञात-सिद्धत्वनिश्चयाभावा-पेक्षया भ्रमत्वेनानिश्चीयमानासिद्धत्वज्ञानमेव गुरु*, तथापि यत्र विषयविशेषे भ्रमत्वेनाज्ञान एवासिद्धत्वज्ञानं(४) तत्र उक्तलाघवस्योक्तत्वादिति।

(१) 'गतघटाद्येव' इति पाठान्तरम्। (२) 'विच्छोपपादक' इति पाठान्तरम्। (३) 'तादृशविषयत्वकल्पनमपेक्ष्य' इति पाठान्तरम्। (४) 'भ्रमत्वेनाज्ञाते एव सिद्धत्वासिद्धत्वज्ञाने' इति पाठभेदः।

(*) यत्र निश्चयत्वान्यरूपेण कारणता प्रतिबन्धकता वा तत्र अप्रामाण्यज्ञानस्य निश्चयत्वे-नोत्तेजकता, यत्र तु निश्चयत्वेन कारणता प्रतिबन्धकता वा, तत्र ज्ञानत्वेनोत्तेजकतेति नियमात् सिद्धत्वनिश्चयत्वेनेच्छाप्रतिबन्धकत्वकल्पे संशयसाधारणज्ञानत्वेनाप्रामाण्यज्ञानस्योत्तेजकतया अप्रामाण्यज्ञानाभावविशिष्ट-सिद्धत्वनिश्चयाभावत्वेन प्रकृतकारणत्वं व्यवतिष्ठते।

: 'विशेषरूपावच्छेदेन' तत्तत्सुखत्वादिना। 'सामान्यरूपेण' सुखत्वादिना। 'तत्' सिद्धसुखे असिद्धत्वप्रकारकं ज्ञानम्(१)। 'ज्ञानद्वयं वे'ति, तथा च तत्-साधारण्याय स्वतन्त्रोपस्थितासिद्धत्वस्य असंसर्गाग्रह एव अन्यथाख्यात्यनङ्गीकर्त्रा कारणं(२) वक्तव्यमिति भावः।

ननु असंसर्गाग्रहमात्रेणैव भ्रमत्वसम्भवे सप्रकारकप्रत्यक्षमात्रस्यैव भ्रमत्वापात इत्यतो दोषविशेषाणामपि तत्त्वेन हेतुत्वं वाच्यम्। तथा च यत्र सिद्धे असिद्धत्वभ्रमजनकदोषाभावस्तत्र इच्छा न स्यात्, अतोऽसिद्धत्वभ्रमोत्पादाय सामान्यलक्षणा वाच्येत्यत आह—'सामान्यलक्षणे'ति। सुखत्वसामान्यलक्षणया वस्तुगत्या असिद्धसुखस्य सुखत्वेन ज्ञानं भवतु, तदसिद्धत्वज्ञानं तु कुत इति भावः।

## दीधितिः

वस्तुतस्तु सामान्यलक्षणां विनापि अयं कालः सुखप्रागभाववान् सुखोत्पादकालीनध्वंसप्रतियोगी वा कालत्वादेतादृशकालत्वाद्वेत्यनुमानादसिद्धसुखस्य तदसिद्धत्वस्य च ज्ञानं सुलभमेव। निपुणतरमुपपादयिष्यते चेदं शब्दमणिदीधिताविति कृतं पल्लविनेन।

## दीधितिप्रकाशः

ननु सुखत्वेनोपस्थिते अनागतसुखे सुखं वर्त्तमानप्रागभाव(क) प्रतियोगि वर्त्तमानकालावृत्तित्वे सति अतीतकालावृत्तित्वादित्यनुमानादसिद्धत्वं सुग्रहमेवेत्यत आह—'वस्तुतस्त्वि'ति। एतत्कालवृत्तिप्रागभावप्रतियोगित्वरूपस्य एतत्काल-

(१) 'असिद्धत्वज्ञान'मिति क्वचित् पाठः। (२) एकत्र 'कारण'मिति नास्ति। तत्र 'वक्तव्य'मित्यत्र च 'वक्तव्य' इति पाठः।

तत्र कारणतावच्छेदककोटौ अप्रामाण्यप्रकारकत्वमेव प्रविष्टम्। सिद्धत्वनिश्चयत्वन्तु सिद्धत्वाभावाप्रकारकसिद्धत्वप्रकारकज्ञानत्वम्। असिद्धत्वज्ञानत्वेन हेतुताकल्पे तु तेनैव नियमेन अप्रामाण्यनिश्चयत्वेनाप्रामाण्यज्ञानस्योत्तेजकतया अप्रामाण्यनिश्चयाभावविशिष्टासिद्धत्वज्ञानत्वेन हेतुत्वमायाति। एवञ्च कारणतावच्छेदककोटौ असिद्धत्वाभाववद्विशेष्यकासिद्धत्वप्रकारकत्वरूपं यत् ज्ञानगतं प्रकृतमप्रामाण्यं तदभावाप्रकारकतत्प्रकारकज्ञानत्वरूपगुरुतरधर्मस्य प्रवेशात् पूर्वापेक्षया गौरवमिति हृदयम्।

(क) प्रागभावाङ्गीकारपक्षे इदं साध्यम्। तदनङ्गीकारपक्षे तु वर्त्तमानकालध्वंसाधिकरणकालोत्पत्तिकत्वस्य साध्यत्वमवगन्तव्यमिति विशेषः।

प्रतियोगिक(ख)ध्वंसाधिकरणक्षणोत्पत्तिकत्वरूपस्य वा असिद्धत्वस्य पक्षधर्मता-बलात् सिद्धिसम्पादनाय 'अथ'मिति। अतीतसुखादेरपि वर्त्तमानध्वंसादिरूपा-(१) भावप्रतियोगित्वादसिद्धत्वस्वरूपलाभाय साध्ये प्रागभावपर्य्यन्तम्। प्रागभावत्व-मखण्डोपाधिरतो नाननुगमः। प्रागभावे मानाभावे त्वाह—'सुखोत्पादे'ति। सिद्धसुखस्यापि स्वद्वितीयक्षणवृत्तिध्वंसप्रतियोगिप्रथमक्षणवृत्तित्वादसिद्धत्वस्वरूप-लाभः स्यादत 'उत्पादे'ति। अतीतसुखोत्पादाधिकरणस्थूलमहाकालवृत्तिध्वंस-प्रतियोगित्वमादाय उद्देश्या सिद्धिवारणाय कालपदं क्षणपरम्।

न चोत्पत्तेः क्षणस्य च स्वत्वघटितत्वात् सिद्धसुखोत्पत्त्यसिद्धसुखोत्पत्ति-साधारणस्य उत्पत्तित्वस्य तदधिकरणक्षणसाधारणस्य क्षणत्वस्य चैकस्याभावात् कथं व्याप्तिग्रह इति वाच्यम्; स्वोत्पत्तिक्षणवृत्तित्वसम्बन्धेन कालिकतया स्वावच्छिन्नत्वसम्बन्धेन वा अनागतसुखविशिष्टो यो ध्वंसः, तत्प्रतियोगिकाल-त्वस्या(२)नुगतत्वादिति। महाप्रलयाभ्युपगमे त्वाह—'एतादृशे'ति। इदानीन्तन-जन्यभावाधिकरणेत्यर्थः। अन्त्योपान्त्यक्षणयोर्व्यभिचारवारणाय 'इदानीन्तने'ति।

ननु अनागतसुखप्रागभावस्य व्यापकत्वाज्ञानात् कथं तदनुमितिरत आह—'निपुणतर'मिति। सुखप्रागभावत्वेन सिद्धसुखप्रागभावस्य व्यापकत्वज्ञानादसिद्ध-सुखप्रागभावस्यापि पक्षधर्मता(३)बलादनुमितौ भानं समानम्(४)।

## दीधितिः

'घटः स' इत्यादि,—संशयसमानाकारो हि निश्चयस्तद्विरोधी घटो न वेति संशयः कोटितावच्छेदकघटत्वांशे निष्प्रकारकश्च। न च प्रमेयवानिति प्रत्ययस्तथा। अत एव जातिमानिति निश्चयेऽपि घटो न वेति संशयः। घटत्ववानिति निश्चयस्तु घटेतरावृत्तित्वविशिष्टमवगाहमानो घटान्यतासन्देहं विरुणद्धि पुरुषावृत्तिवक्रकोट-रादिनिश्चय इव पुरुषत्वसंशयम्।

'स्वसामग्रीविरहादि'ति,—घट इति निश्चयं प्रति घटत्वांशे निर्विकल्पकं ज्ञानं कारणम्, जातित्वादिना घटत्वादिज्ञानेऽपि तदनुदयात्; सामान्यलक्षणायाश्च सामान्यप्रकारकज्ञानजनकत्वनियमात् विशिष्टज्ञानसामग्रीसत्त्वात्।

इति श्रीमद्रघुनाथशिरोमणिकृतायां दीधितौ अनुमानखण्डे सामान्यलक्षणा-प्रकरणं समाप्तम्।

---

(१) 'ध्वंसादिस्वरूपे'ति पाठान्तरम्। (२) 'प्रतियोगित्वस्ये'ति पाठान्तरम्। (३) 'पक्षता' इति क्वचित् पाठः। (४) 'समान'मिति न सार्वत्रिकम्।

---

(ख) दीधित्युक्त-द्वितीयसाध्यपक्षमनुसृत्याह 'एतत्कालप्रतियोगिकध्वंसे'त्यादि।

# दीधितिप्रकाशः

ननु(१) प्रमेयत्वादिना घटत्वप्रकारकनिश्चयसत्त्वात् कथं घटत्वप्रकारकसंशय इत्यत आह—'संशयसमानाकारो हि' इति। न केवलं प्रकारस्य समानत्वं, किन्तु प्रकारताया अपि तद् वाच्यमिति भावः।

'कोटितावच्छेदकघटत्वे'ति,— घटो न वेति संशये तादात्म्येन घटस्यैव(२) कोटित्वात् घटत्वं कोटितावच्छेदकमिति भावः। 'तथा' कोटितावच्छेदकघटत्वांशे निष्प्रकारकः; तत्र प्रमेयत्वस्यैव घटत्वांशे प्रकारत्वादिति भावः।

'अत एव' समानाकारनिश्चयस्यैव विरोधित्वादेव। नन्वेवं तदंशे घटत्वत्व-प्रकारकत्वाद् घटत्ववानिति निश्चयोऽपि न तादृशसंशयविरोधी स्यादत आह—'घटत्ववानिती'ति। 'घटान्यतासन्देह'मिति,— तत्कोटिकसन्देहं(३) प्रति(क) तदन्या-वृत्तित्वविशिष्टस्य दर्शनं विशेषदर्शनविधया(ख) विरोधीत्यनुभवबलादास्थीयत इति भावः(४)।

यद्यपि तादात्म्येन घटकोटिकसंशयं प्रति घटेतरावृत्तित्वविशिष्टधर्मवत्ताज्ञानं व्याप्यदर्शनमिति स्वातन्त्र्येण विरोधित्वप्रदर्शनमनुचितम्, तथापि यत्र तादात्म्येन घटो न कोटिः, किन्तु घटभेदतदभावौ स्वरूपसम्बन्धेन कोटी, तत्रापि घटेतरावृत्तित्व-विशिष्टधर्मज्ञानस्य विरोधित्वप्राप्त्यर्थं तथोक्तम्। अत एव यत्र केनापि प्रकारेण व्याप्यदर्शनत्वं न सम्भवति तद् दृष्टान्तयति,—'पुरुषावृत्ती'ति।

'घट इति निश्चयं प्रती'ति—निश्चयपदं ज्ञानसामान्यपरम्, निश्चयत्वस्य कार्य्यतानवच्छेदकत्वात् घट इत्याकारकसंशयेऽपि तादृशज्ञानस्य जनकत्वाच्च।

---

(१) 'ननु' इति सर्वत्र नास्ति। (२) 'तादात्म्येनैव घटस्य' इति पाठभेदः। (३) 'कोटिसन्देह'मिति पाठान्तरम्। (४) अत्र क्वचित् 'तत्कोटिकसन्देहं प्रति तद्वदन्यावृत्तित्वविशिष्टस्य दर्शनं यथा तथा तदितरावृत्तित्वविशिष्टस्यापि दर्शनं व्यावर्त्तकधर्मदर्शनविधया विरोधीत्यनुभवबलादास्थीयत इति भावः'। इति पाठो दृश्यते।

---

(क) अत्र तादात्म्येन सम्बन्धेनेति योजनीयम्।

ननु प्रमेयत्वसामान्यलक्षणयैव यावत्प्रमेयगोचरं निर्विकल्पकं जन्यतामत आह—'सामान्ये'ति।

ननु प्रमेयत्वप्रकारकप्रमेयप्रत्यक्षत्वापेक्षया प्रत्यक्षत्वस्य(१) लघुत्वात् तदेव जन्यतावच्छेदकम्, तच्च निर्विकल्पकसाधारणमत आह—'विशिष्टज्ञाने'ति। प्रमेयत्वज्ञानस्यैव प्रत्यासत्तित्वात् विशिष्टज्ञानसामग्रीसत्त्वादर्थवशसम्पन्नमेव विशिष्टज्ञानमिति भावः।

यद्यपि घटो न वेति संशयानुरोधेन घटत्वांशे निर्विकल्पकं ज्ञानमावश्यकम्, न च तादृशनिर्विकल्पकसत्त्वेऽपि दोषादेव घटः स इति न ज्ञानमिति वाच्यम्; घटत्वांशे निर्विकल्पकाभावाच्च तादृशज्ञानमित्यस्यासङ्गतत्वापातात्। तथापि यत्र प्रमेयवानिति सामान्यलक्षणाजन्यनिर्णयोत्पत्तिकाले तादृशदोषाभावोऽनन्तरक्षणे निर्विकल्पकमेककोटिस्मरणम् संशयजनकदोषोत्पत्तिश्च ततो घटो न वेति संशयः, तत्र प्रमेयवानिति निर्णयस्य घट इत्याकारत्वे संशयो न स्यादित्याक्षेपे घटत्वांशे निर्विकल्पकाभावात् तादृशनिर्णयस्य च घट इत्याकारकत्वमिति समाधानं सम्यगिति मन्तव्यम्।

वस्तुतस्तु सामान्यलक्षणाव्यवस्थापकं प्रति सोपहासमयमाक्षेपः, सामान्यलक्षणया विश्वस्यैव घटत्वप्रकारकतादृशज्ञानसत्त्वात्। आत्मत्वमेव तादृशज्ञानवत्त्वस्य व्याप्यं गृहीतम्। तथा च सामान्यलक्षणां व्यवस्थापयितुः तावकीयज्ञानविषयो घटो न वा परस्तादृश-घटज्ञानवान्नवेति संशयो न स्यात् विशेषदर्शनसत्त्वात्। अत एव पूर्वपक्षे परकीयज्ञानविषय इत्युक्तम्। सर्वस्य सामान्यलक्षणया घटत्वप्रकारकज्ञानसम्भवेऽपि घटत्वांशे अन्यप्रकारकतादृशज्ञानासम्भवेन आत्मत्वं तादृशघटत्वप्रकारकज्ञानवत्त्वव्याप्यमिति विशेषदर्शनाभावात् तादृशज्ञानस्य संशयो नानुपपन्न इति सिद्धान्ततात्पर्यमिति वयं ब्रूमः।

इति श्रीमद्भवानन्दीये तत्त्वचिन्तामणिदीधितिप्रकाशे अनुमानखण्डे सामान्यलक्षणाप्रकरणव्याख्या समाप्ता।

(१) 'प्रमेयप्रत्यक्षत्वस्य' इति पाठान्तरम्।

# अथ उपाधि-प्रकरणं

## तत्त्वचिन्तामणिः

उपाधिज्ञानाद् व्यभिचारज्ञाने सति न व्याप्तिनिश्चय इत्युपाधिर्निरूप्यते। तत्रोपाधिः साध्यत्वाभिमतव्यापकत्वे सति साधनत्वाभिमताव्यापकः। अनौपाधिकत्वज्ञानञ्च न व्याप्तिज्ञाने(१) हेतुः, अतो व्यापकत्वादिज्ञाने नान्योन्याश्रयः।

## दीधितिः

प्रसङ्गादुपाधिं निरूपयितुमाह—'उपाधी'ति। सोपाधौ साध्यत्वसाधनत्वे न सम्भवतोऽतः 'अभिमते'ति। यो यद्व्यापकत्वे सति यदव्यापकः, स तत्र उपाधिरिति निर्गलितोऽर्थः। व्यापकत्वाव्यापकत्वे एकरूपेण विवक्षिते।

## दीधितिप्रकाशः

मूले व्यभिचारज्ञाने सति उपाधिज्ञानादिति योजनायां(क) कल्पनागौरवात् व्याप्तिनिश्चय इत्यस्यासङ्गतत्वाच्च(ख) उपोद्घातस्यासम्भवादाह—'प्रसङ्गादि'ति। स्मृतस्य अनुपेक्षणीयत्वं प्रसङ्गः। ततः(२) पूर्वग्रन्थे येन क्रमेण स्मृतत्वं तत्-प्रदर्शनायोपाधिज्ञानादित्यादि मूलम् पूर्वस्यैव विवरणम्(३)। 'व्याप्तिग्रहोपाये 'सा च क्वचिदुपाधिसन्देहा'दित्यत्र व्याप्तिनिश्चयाभावप्रयोजकीभूत-व्यभिचारशङ्काकारण-

(१) 'व्याप्तिधीहेतुः' इति पाठान्तरम्। (२) तत्पूर्वग्रन्थ' इति पाठान्तरम्।
(३) पुस्तकविशेषे 'पूर्वस्यैव विवरणम्'इति अंशो नास्ति।

---

(क) तथा योजनायां कृतायां व्यभिचारज्ञानं व्याप्यज्ञानविधया उपाधिज्ञानजनकमिति लभ्यते। तेन च उपाधेर्व्यभिचारव्यापकत्वमवसीयते। एवञ्च उपाधिविरहस्य व्यापकाभावविधया व्यभिचारविरहज्ञानजनकत्वलाभादुपाधिज्ञानस्य तदभावज्ञानजनकत्वाच्च, उपाधेः व्यभिचाराभावरूपव्याप्तिज्ञानप्रयोजकज्ञानविषयत्वलक्षणज्ञापकत्वस्वरूपोपपादकत्ववत्त्वात् व्याप्तिनिरूपितोपोद्घातसङ्गतिसमन्वय इति ज्ञेयम्।

(ख) प्रामाणिकस्य गौरवस्यादोषत्वात् कल्पान्तरमाह।'न व्याप्तिनिश्चय' इत्यादि। 'असङ्गतत्वा'दिति उपाधिज्ञानस्य व्याप्तिनिश्चयाभावप्रयोजकत्वानुपपत्तेरित्यर्थः।

ज्ञानविषयत्वेनोपाधेः स्मारितत्वादिति भावः। इत्थञ्च मूले 'न व्याप्तिनिश्चय इती'त्यनन्तरमुक्तमत इति शेषः।

साध्यत्वसाधनत्वे व्याप्यत्वव्यापकत्वरूपे। अभिमानस्य विशेषणत्वे यत्र न तदभिमानस्तत्राव्याप्तिः(ग), साध्यतावच्छेदकादीनां(घ) प्रवेशावश्यकत्वे वैयर्थ्यञ्चेत्यत आह—'यो यदि'ति। यदवच्छिन्नव्यापकत्वे सति यदवच्छिन्नाव्यापक इत्यर्थः। तेन गुणकर्मान्यत्वे सति सत्तावान् जातेरित्यादौ संयोगी गुणकर्मान्यत्वे सति सत्त्वादित्यादौ न द्रव्यत्वादौ (१) अव्याप्त्यतिव्याप्ती।

'एकरूपेणे'ति,—एकप्रकारेण एकसम्बन्धेनेत्यर्थः। तेन द्रव्यत्वत्वेन समवायसम्बन्धेन वह्निं धूमं प्रति वा व्यापकस्य द्रव्यत्वस्य द्वित्वादिना संयोगादिसम्बन्धेन वा धूमं वह्निं वा प्रति अव्यापकत्वेऽपि वह्निमान् धूमादित्यत्र धूमवान् वह्नेरित्यत्र च द्रव्यत्वादौ नातिव्याप्तिः।

## दीधितिः

ननु उपाधेः साध्यव्यापकत्वं साध्यनिष्ठव्याप्तिनिरूपकत्वम्, सा च यावदुपाधिव्यापकव्यापककत्वरूपानौपाधिकत्वज्ञानादेव ग्राह्या। उपाधिव्यापकयावदर्थान्तर्गतस्य चोपाधेः साध्यव्यापकत्वग्रहः(२) साध्यनिष्ठव्याप्तिग्रहादित्यन्योन्याश्रय इत्यत आह—'अनौपाधिकत्वे'ति। व्यापकत्वं व्याप्तिनिरूपकत्वम्, सा च अनौपाधिकत्वग्रहाद्गृहीतव्या, तद्घटितव्याप्तिज्ञानमपि अनौपाधिकत्वान्तरग्रहादित्यनवस्थेत्यत आह—'अनौपाधिकत्वे'ति। अन्योन्याश्रयपदमनवस्थापरमिति तु(३) सम्प्रदायः।

---

(१) 'द्रव्यत्वादौ नाव्याप्त्यतिव्याप्ती' इति पाठान्तरम्। क्वचित् 'द्रव्यत्वे' इति। (२) 'ग्रहश्च' इति पाठान्तरम्। (३) एकत्र 'तु' इति नास्ति।

(ग) दोषनिरासाय सर्वत्रैव तादृशाभिमानः कल्पनीय इत्यतः कल्पान्तरमाह 'साध्यतावच्छेदकादीना'मित्यादिना।

(घ) 'साध्यतावच्छेदकादीना'मित्यादिपदात् साधनतावच्छेदकादिपरिग्रहः। साध्यतावच्छेदकाप्रवेशे गुणकर्मान्यत्वे सति सत्तावान् जातेरित्यादौ द्रव्यत्वरूपोपाधावव्याप्तिः; द्रव्यत्वस्य सत्तारूपसाध्याव्यापकत्वाभावात्। साधनतावच्छेदकाप्रवेशे संयोगी गुणकर्मान्यत्वे सति सत्त्वादित्यादिसद्धेतुस्थले द्रव्यत्वे अतिव्याप्तिः; तस्य सत्तारूपसाधनाव्यापकत्वात्। तत्तदवच्छेदकप्रवेशे तु न तथा; द्रव्यत्वस्य गुणकर्मान्यत्वविशिष्टसत्तात्वावच्छिन्नव्यापकत्वात्।

## दीधितिप्रकाशः

तन्निष्ठात्यन्ताभावाप्रतियोगित्वरूपव्यापकत्व(१)प्रवेशे व्याप्तेरप्रवेशे(२)नान्योन्याश्रयस्या(३)सिद्धेराह—'साध्यनिष्ठव्याप्ती'ति। धूमवान् वह्नेरित्यत्र आर्द्रेन्धनरूपोपाधेः साध्यव्यापकत्वं साध्यनिष्ठव्याप्तिनिरूपकत्वम्, धूमनिष्ठार्द्रेन्धनव्याप्तिग्रहे च आर्द्रेन्धनव्यापकतत्सामग्रीरूपोपाध्य(४)भावज्ञानं कारणम्। आर्द्रेन्धननिष्ठतत्सामग्रीव्याप्तिग्रहे च द्रव्यत्वरूपोपाध्यभावज्ञानं कारणमिति क्रमेण अनवस्थाया एव सम्भवादन्योन्याश्रय एव न सम्भवतीत्यतस्तदुपपादयति 'सा चे'ति। सा(५) उपाधिनिरूपिता साध्यनिष्ठा व्याप्तिः।

'यावदुपाधिव्यापकव्यापककत्वरूपानौपाधिकत्वे'ति,— यावत्स्वव्यभिचारिव्यभिचारिसाध्यसामानाधिकरण्यरूपानौपाधिकत्वज्ञानहेतुत्वे व्याप्तेरप्रवेशेनान्योन्याश्रयासम्भवादिति। अत एव 'ज्ञानादेवे'त्येवकारेण उक्तरूपसाध्यव्यापकत्वाघटितानौपाधिकत्वान्तरज्ञानव्यवच्छेदः।

धूमनिष्ठार्द्रेन्धनव्याप्तिग्रहे, यावदार्द्रेन्धनव्यापकव्यापकको धूम इति ज्ञानं कारणं वाच्यम्। आर्द्रेन्धनव्यापकञ्च आर्द्रेन्धनमपीति तत्रापि धूमनिष्ठव्याप्तिनिरूपकत्वज्ञानमपेक्षितम्। तथा च आर्द्रेन्धने धूमनिष्ठव्याप्तिनिरूपकत्वग्रहे सति धूमनिष्ठतद्व्याप्तिग्रहः, धूमनिष्ठतद्व्याप्तिग्रहे च सति विशेषणज्ञानात् तद्व्याप्तिनिरूपकत्वमार्द्रेन्धने ग्राह्यमित्यन्योन्याश्रयः। धूमनिष्ठव्याप्तेस्तन्निरूपकत्वस्य च ग्राह्यस्य भेदादात्माश्रयः। अत एव यावदुपाधिव्यापकव्याप्यत्वमनुपेक्ष्य तद्व्यापककत्वमित्युक्तम्।

मतान्तरमाह—'व्यापकत्व'मित्यादिना। अविशेषितव्यापकत्वकथनेन यत्र यद्व्यापकत्वं निविष्टम्, तत्र तन्निष्ठव्याप्तिनिरूपकत्व(६)रूपमेव इत्यनवस्था। अन्यथोपाधिव्यापकेत्यत्र तन्निष्ठात्यन्ताभावाप्रतियोगित्वरूपतद्व्यापकत्वस्य प्रवेशे(७) अनवस्थाया असम्भवात्।

---

(१) 'व्यापकत्वस्य' इति पाठान्तरम्। (२) क्वचित् 'व्याप्तेरप्रवेशे' इति सप्तम्यन्तपाठः। (३) 'श्रयस्याप्रसिद्धेराह' इति पाठान्तरम्। (४) 'रूपोपाधेरभाव' इति पाठान्तरम्। (५) एकत्र 'सा' इति नास्ति। (६) एकत्र 'रूप' शब्दो नास्ति। (७) प्रवेशेनानवस्थाया' इति पाठान्तरम्।

स्वमते तु उपाधिनिष्ठसाध्यव्यापकत्वमात्रं साध्यनिष्ठव्याप्तिनिरूपकत्वरूपम्, तद्व्यापकत्वस्य प्रवेशे(१) उपाधि-व्यापकत्वादावन्यादृशव्यापकत्वस्य प्रवेशेऽपि अन्योन्याश्रयापरीहारात्। अत एव 'उपाधेः साध्यव्यापकत्व'मिति विशेषितमेव स्वयमुक्तम्। 'तत्प्रविष्टे'ति, — अनौपाधित्वशरीरनिविष्टोपाधित्वप्रविष्टेत्यर्थः। 'सम्प्रदाय' इति,—अपदार्थव्याख्यैवास्वरसः।

## तत्त्वचिन्तामणिः

यद्वा व्यापकत्वं तद्वन्निष्ठात्यन्ताभावाप्रतियोगित्वम्। तत्प्रतियोगित्वञ्चा-व्यापकत्वम्। प्रतियोगित्वञ्च तदधिकरणानधिकरणत्वमिति वदन्ति। तन्न ; साधन-पक्षधर्मावच्छिन्नसाध्यव्यापकोपाध्यव्याप्तेः। न च तयोरनुपाधित्वम् ; दूषकताबीज-साम्यात्। मित्रातनयत्वेन श्यामत्वसाधने शाकपाकजत्वस्य, प्रत्यक्षस्पर्शाश्रयत्वेन वायोः प्रत्यक्षत्वे साध्ये(२) उद्भूतरूपवत्त्वस्य च शास्त्रे प्रयोजकत्वेनोपाधित्व-स्वीकाराच्चेति(३)।

## दीधितिः

अव्याप्यवृत्तीनां व्यापकत्वमुपपादयितुमाह 'प्रतियोगित्वञ्चेति। 'तदधि-करणानधिकरणत्वम्' तदधिकरणाधिकरणत्वविरोधि यत् प्रतियोगित्वं प्रतियोगि-व्यधिकरणाभावप्रतियोगित्वं, तदिह ग्रहीतव्यम्। प्रतियोगिव्यधिकरणत्वेनाभावो विशेषणीय इति फलितोऽर्थः। 'साधने'ति,—अनयोरसङ्करोऽग्रे दर्शयिष्यते(४)।

## दीधितिप्रकाशः

ननु तदधिकरणानधिकरणत्वमुपाधिताघटकसम्बन्धेन तदधिकरणा-वृत्तित्वम्, अन्यथा सम्बन्धभेदमादाय अव्याप्तेः(क)। तथा च द्रव्यं सत्त्वा-

(१) ग्रन्थविशेषे 'तद्व्यापकत्वस्य प्रवेशे' इत्ययमंशो नास्ति। (२) 'प्रत्यक्षत्व-साधने' इति पाठान्तरम्। (३) 'स्वीकाराच्च' इति इतिशब्दं विना पाठभेदः। (४) 'प्रदर्शयिष्यते' इति क्वचित्।

(क) 'अव्याप्ते'रिति,—आर्द्रेन्धनादेरपि वह्न्यादिमन्निष्ठार्द्रेन्धनाभावाधिकरणे कालादौ कालिकादिसम्बन्धेन वृत्तेः साधनाव्यापकत्वानुपपत्तेरिति भावः। न चैवमसम्भवसम्भवे कथ-मव्याप्तिदानमिति वाच्यम्, जन्यं द्रव्यत्वादित्यादौ गगनान्यत्वादावेव लक्षणसमन्वयात्। द्रव्यत्वादिसमानाधिकरणगगनान्यत्वाभावाधिकरणगगनादौ सम्बन्धसामान्येनैव गगनान्य-त्वादेरवृत्तितया प्रकृतसाधनाव्यापकत्वानुपपत्तिनिरासात्।

दित्यादौ सत्त्वाधिकरणगुणनिष्ठद्रव्यत्वाद्यभावाधिकरणावृत्तित्वस्य संयोगे सत्त्वात् साधनाव्यापकत्वसमर्थनेऽपि जातिमान् मेयत्वादित्यादौ सत्तादेः समवायेनोपाधित्वं न स्यात्, मेयत्वाधिकरणसामान्यादिनिष्ठसत्ताभावाधिकरणसामान्यादौ समवायेन वृत्तेरप्रसिद्धत्वात् तदधिकरणावृत्तित्वस्य सत्तायामसम्भवात्। एवं द्रव्यं सत्त्वादित्यादौ विशिष्टसत्त्वस्य उपाधित्वं न स्यात्, विशिष्टस्यानतिरेकेण गुणाद्यवृत्तित्वस्य तत्रासत्त्वादत आह—'तदधिकरणे'ति। विरोध्यर्थकनञा(ख) तदधिकरणाधिकरणत्वविरोधित्वं लभ्यम्। तच्च प्रतियोगित्वविशेषणमिति दर्शयति—'यत् प्रतियोगित्व'मिति।

तदधिकरणे ज्ञायमानमधिकरणत्वं तदधिकरणाधिकरणत्वं, सप्तम्या ज्ञेयत्वार्थकत्वेन ज्ञानविषयत्वलाभात्। विरोधित्वञ्च ग्रहप्रतिबन्धकग्रहविषयत्वम्। यादृशप्रतियोगित्वज्ञाने यदधिकरणे प्रतियोग्यधिकरणत्वग्रहप्रतिबन्धस्तादृशप्रतियोगित्वमिति फलितोऽर्थः।

कीदृशं तदित्याह—'प्रतियोगी'ति। प्रतियोगित्वपदस्यैव प्रतियोगिव्यधिकरणाभावप्रतियोगित्वार्थकत्वे(१) 'तन्निष्ठाभावे'त्यत्र अभावेत्यस्य वैयर्थ्यमत आह—'प्रतियोगिव्यधिकरणत्वेने'ति।

न च कालः कालपरिमाणवान् मेयत्वादित्यादौ कालिकसम्बन्धेनोपाधौ घटाद्यव्याप्तिः, तेन सम्बन्धेन काले प्रतियोगिव्यधिकरणस्याभावस्याप्रसिद्धेरिति वाच्यम्; प्रतियोगितावच्छेदकसम्बन्धेन निरुक्तप्रतियोग्यनधिकरणसाध्यवन्निष्ठाभावप्रतियोगितायां यद्धर्मावच्छिन्नत्व-यत्सम्बन्धावच्छिन्नत्वोभयाभावस्तेन सम्बन्धेन तद्धर्मावच्छिन्नस्यैव साध्यव्यापकत्वादिति भावः।

स्वयं वक्ष्यमाणस्य 'स श्यामो मित्रातनयत्वा'दित्यत्र साधनावच्छिन्नसाध्यव्यापकस्य शाकपाकजत्वस्य साधनस्य(२) पक्षधर्मत्वात् पक्षधर्मावच्छिन्न-

(१) 'प्रतियोगित्वार्थकतया' इति पाठान्तरम्। (२) 'साधनस्यापि' इति पाठान्तरम्।

(ख) तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः। इति।

साध्यव्यापकत्वसम्भवात्, वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यादौ बहिर्द्रव्यत्वावच्छिन्नसाध्यव्यापकस्य उद्भूतरूपस्य प्रत्यक्षस्पर्शाश्रयत्वरूप-साधनावच्छिन्नसाध्यव्यापकत्वसम्भवाच्च साङ्कर्य्यमत आह—'अनयो'रिति। 'अत्र' इति 'यत्र(१) पक्षे हेतुमति च साध्य' मित्यादिग्रन्थ(क) इत्यर्थः।

## तत्त्वचिन्तामणिः

पक्षेतरेऽतिव्याप्तिश्च(२)। न च व्यतिरेके पर्वते(३)तरान्यत्वादित्यत्र इतरान्यत्वस्यासिद्धिवारणार्थं(४) पर्वतपदं(५) विशेषणमिति व्यतिरेके व्यर्थविशेषणत्वान्न स उपाधिः, बाधोन्नीतस्या(६)प्यनुपाधितापत्तेः। न चेष्टापत्तिः; इतरान्यत्वस्याप्रसिद्ध्या विशेषणं विना व्याप्तिग्रहेण(७) तत्सार्थक्यात्(८)।

## दीधितिः

'पक्ष'(९) इति,—पक्ष इतरो यस्मादिति बहुव्रीहिर्भावप्रधानश्च निर्देशः। पक्षमितरयति व्यावर्त्तयतीति व्युत्पत्त्या तदवृत्तिधर्मवचन इत्यपि कश्चित्। तादात्म्येन धर्मिण एव व्यापकत्वमिति तु परमार्थः। अत एवाग्रे पर्वतेतरान्यत्वादिति साधु सङ्गच्छते। इतरथा तु व्यापकाभावस्यैव व्यापकवदन्योन्याभावस्यापि गमकत्वमाश्रित्य सङ्गमनीयम्। 'व्यतिरेक' इति,—यद्यपि व्यापकाभावमुद्रया गमकत्वे तथा वैयर्थ्यं न दोषाय, तथापि वास्तव(१०)वैयर्थ्यशून्यत्वमेव विशेषणं देयमिति भावः।

(१) एकत्र 'यत्र' इति नास्ति। (२) 'व्याप्तेश्च' इति पाठान्तरम्। (३) 'पक्षेतरे'ति पाठान्तरम्। (४) 'वारणाय' इति पाठान्तरम्। (५) 'पर्वतादि' इति पाठान्तरम्। (६) 'बाधोन्नीतपक्षेतरस्ये'ति पाठान्तरम्। (७) 'ग्रहे' इति सप्तम्यन्तपाठः क्वचित्। (८) 'सार्थकत्वा'दिति पाठान्तरम्। (९) 'पक्षेतरेति' इति पाठान्तरम्। (१०) 'वास्तवतथावैयर्थ्य' इति पाठान्तरम्।

(क) तथा हि तत्र स्पष्टमेवोक्तं दीधितिकृता 'यथा घटः प्रत्यक्षो नित्यद्रव्यत्वाद् विभुत्वादित्यादौ साधनावच्छिन्नसाध्यव्यापकमात्मत्वं पक्षधर्मावच्छिन्नसाध्यव्यापकमुद्भूतरूपवत्त्वं प्रत्यक्षस्पर्शाश्रयत्वं वा मिथोऽसङ्कीर्णमुपाधि'रिति।

## दीधितिप्रकाशः

पक्षावितर इति पञ्चमीतत्पुरुषे सर्वनामकार्य्ये पक्षेतरस्मिन्निति स्यादतो बहुव्रीहिमाह। पक्षेतरस्य प्रमेयत्वादेः पक्षेऽपि सत्त्वात् साधनव्यापकत्वमत आह—'भावप्रधान' इति।

न च भावप्रधाननिर्द्देशेनैव(१) सर्वनामकार्य्याभावे बहुव्रीह्याश्रयणमसङ्गतम्, सर्वनामशक्तिमूलकलक्षणया अर्थान्तरोपस्थापनेऽपि सर्वनामकार्य्यस्य सम्भवात्, बहुव्रीहौ तथात्वेऽपि निषेधानुशासनबलादेव सर्वनामकार्य्याभावादिति।

पक्षेतरपदस्य पक्षावृत्तिधर्मार्थकत्वे अग्रे पर्वतेतरान्यत्वादित्यत्र पर्वतावृत्तिधर्मान्यत्वादित्यर्थे मूलासङ्गतिः, तत्र धर्मिलक्षकत्वे प्रथमत एव धर्मिलक्षकत्वं स्यादित्यस्वरसः केचिदित्यनेन सूचितः। भावप्रधानं विनैवोपपत्तिमाह,—'तादात्म्येने'ति। बहुव्रीहिस्तु आवश्यक इति भावः।

'अत एव' तादात्म्येन व्यापकत्वस्य तात्पर्य्यविषयत्वादेव। पर्वतेतरस्य तादात्म्येन साध्यव्यापकत्वे तादात्म्यावच्छिन्नपर्वतेतराभावः पर्वतेतरान्यत्वरूपो व्यापकाभावतया वह्न्यभावसाधने हेतुरुपपद्यत इति भावः। 'इतरथा' भावप्रधाननिर्द्देशेन प्रकृतग्रन्थस्य पर्वतेतरत्वाद्युपाधिपरत्वे। 'व्यापकवदि'ति,—पर्वतेतरत्वरूपव्यापकवतोऽन्योन्याभावः पर्वतेतरान्यत्वरूपः, तस्यापीत्यर्थः। 'गमकत्वम्' व्याप्याभावसाधकत्वम्। 'सङ्गमनीयम्' 'पर्वतेतरान्यत्वादिती'त्यनुषज्यते। 'यद्यपी'ति,—व्यर्थविशेषणत्वं हि तद्विशेषणा(२)वच्छेदेनान्वयव्याप्तिधीविरोधितया अनुमाने(३) दोषः, अत्र तु व्यतिरेकव्याप्तिरेव गमकतोप(४)योगिनीति व्यर्थविशेषणत्वमकिञ्चित्करमिति भाव। 'तथा वैयर्थ्यम्',—पर्वतेतरव्यतिरेकस्य वह्न्यभावव्याप्यत्वे पर्वतांशस्य वैयर्थ्यम्। 'तथापि' अनुमानदूषकव्यर्थविशेषणत्वस्य अभावेऽपि। 'वास्तवे'ति,—यद्व व्यतिरेकत्वं साध्याभावव्याप्यतानवच्छेदकविशेषणाघटितं तत्त्वे सति साध्यव्यापकत्वाद्विशालित्वं(५) विवक्षितमिति(६) भावः।

---

(१) 'निर्देशादेव' इति पाठान्तरम्। (२) 'तद्विशेषणतावच्छेदेन' इति पाठान्तरम्। (३) 'अनुमानदोष' इति पाठान्तरम्। (४) 'गमकतौपयिकीति' पाठान्तरम्। (५) 'शालित्वमुपाधित्वम्' इति पाठभेदः। (६) 'उपाधित्वमिति वाच्यम्' इति पाठान्तरम्। तत्र 'इति भाव' इत्ययमंशो नास्ति।

## दीधितिः

यत्तु ययोर्व्यतिरेक-(१) व्याप्तिस्तयोरेव व्याप्यवृत्ति व्यतिरेकिणोरन्वय-(२) व्याप्तिरिति नियमः। इह तु(३) व्यर्थविशेषणतया व्यतिरेके व्याप्त्यभावादन्वयेऽपि न तथा, अतः साध्याव्यापकत्वान्नायमुपाधिरिति भाव इति। तन्न; अहेतुकत्व-शरीराहेतुकत्वयोर्व्यभिचारात्, एवमपि संयोगादौ केवलान्वयिनि च साध्ये पक्षे-तरातिव्याप्तितादवस्थ्याच्च।

## दीधितिप्रकाशः

प्रगल्भमतमाह—'ययो'रिति। व्याप्यवृत्तिव्यतिरेकित्वं व्याप्यकोटौ अन्वय-व्याप्तौ साध्यसाधनयोर्विशेषणम्, न तु व्यापककोटौ व्यतिरेकव्याप्ताविति दर्शयितुं व्यापकव्यतिरेकव्याप्तिमेव प्रथममुपन्यस्य व्याप्तिर्दर्शिता। अन्यथा व्याप्यवृत्ति व्यतिरेकिणोर्ययोरन्वय(४)व्याप्तिस्तयोरवश्यं व्यतिरेक(५)व्याप्तिरित्युक्तौ तच्छब्देन पूर्वोपस्थितपरामर्शे व्याप्यवृत्तिव्यतिरेकित्वं व्यापककोटावपि लब्धं स्यादिति। हेतुतावच्छेदकरूपेण हेतुतावच्छेदकसम्बन्धेन व्याप्यवृत्तिव्यतिरेकप्रतियोगित्वे सति यः साध्यतावच्छेदकसम्बन्धावच्छिन्नतादृशाभावप्रतियोगितावच्छेदकयद्धर्मावच्छिन्न-निरूपितव्याप्यत्ववान् स तत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नतत्प्रतियोगिताकाभावत्वा-वच्छिन्नव्याप्यतानिरूपितव्यापकतावच्छेदकतद्रूपावच्छिन्नतत्सम्बन्धावच्छिन्नप्रतियोगि-ताकाभावत्वावच्छिन्नप्रतियोगीति व्याप्त्यर्थः।

संयोगि प्रमेयं वा द्रव्यत्वादित्यादौ व्यभिचारवारणाय साध्यदिशि व्याप्य-वृत्तिव्यतिरेकप्रतियोगित्वमुक्तम्। संयोगस्यापि समवेतसामान्याभावरूपव्याप्य-वृत्तिव्यतिरेकप्रतियोगित्वात् साध्यतावच्छेदके तादृशप्रतियोगितावच्छेदकत्व-पर्यन्तानुधावनम्। प्रमेयत्वादेरपि कालिकसम्बन्धावच्छिन्नव्याप्यवृत्त्यभावप्रति-योगित्वात् साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वं तादृशप्रतियोगितायां विशेषणम्। द्रव्यं संयोगादित्यादौ व्यभिचारवारणाय हेतुदिशि सत्यन्तम्।

संयोगाभावस्य केवलान्वयितया तन्निरूपितव्याप्यतायां द्रव्यत्वाभावत्वस्य द्रव्यत्वविशेषणवैयर्थ्येनानवच्छेदकत्वात्, संयोगस्यापि समवेतत्वेन रूपेण व्याप्य-

(१) 'व्यतिरेके' इति पाठान्तरम्। (२) 'अन्वये' इति पाठान्तरम् 'व्यतिरेके' इति पाठमते। (३) एकत्र 'तु' इति न दृश्यते। (४-५) 'अन्वये' इति तन्मते उत्तरत्र 'व्यतिरेके' इति च पाठान्तरे

वृत्तिव्यतिरेकप्रतियोगित्वात् व्यधिकरणसम्बन्धेन संयोगाभावस्य व्याप्यवृत्तित्वाच्च(१) तथैव दोष इत्यतो हेतुतावच्छेदकरूपेण हेतुतावच्छेदकसम्बन्धेनेति च(२)।

पर्वतेतरत्वाभावस्य तद्व्यक्तित्वादिना वह्न्यभावव्याप्यत्वे व्यर्थविशेषणत्वाभावादुद्देश्यसिद्ध्यर्थं व्यापककोटौ तद्रूपावच्छिन्नाभावत्वावच्छिन्नव्याप्यत्वस्य सम्बन्धभेदस्य चानुधावनम्। अन्यथा प्रमेयत्वादीनामपि कालिकसम्बन्धावच्छिन्नाभावस्य संयोगादीनामपि स्वसमानाधिकरणद्रव्यत्वादिरूप-परम्परासम्बन्धादिना अभावस्य व्याप्यत्वव्यापकत्वयोः सम्भवात् व्याप्यवृत्तिव्यतिरेकित्वं साध्यसाधनयोर्व्यर्थमेव स्यात्।

न च व्याप्यवृत्तित्वं व्यतिरेकित्वञ्च विशकलितमेव(३) विशेषणमस्तु, व्याप्यवृत्तेर्यो(क) व्यतिरेकस्तत्प्रतियोगित्वमित्यनुसरणं किमर्थमिति वाच्यम्; आकाशाभाववान् द्रव्यत्वादित्यादौ व्यभिचारात्, आकाशाभावस्य प्राचां मते आकाशरूपव्यतिरेकप्रतियोगित्वात्। व्याप्यवृत्तित्वे सति वृत्तिमद्व्यतिरेकप्रतियोगित्वस्य निवेशे च प्रयासगौरवात्(४)। अत एव व्याप्यवृत्तिव्यतिरेकप्रतियोगित्वं साध्ये विशेषणमस्तु, हेतौ व्याप्यवृत्तित्वमात्रं निवेश्यताम्, तावतैव द्रव्यं संयोगादित्यादौ व्यभिचारवारणसम्भवादिति दूषणं प्रत्युक्तम्, यथासन्निवेशे वैयर्थ्याभावात्(५)।

केचित्तु स्वसमानाधिकरणतादृश(ख) धर्मान्तराघटितस्य लघुरूपसमनियत-(६) गुरोरपि व्याप्यतावच्छेदकत्वमिति मते द्रव्यं कम्बुग्रीवादिमत इत्यादौ कम्बुग्रीवादि-

(१) 'संयोगाभावस्यापि व्याप्यवृत्तित्वात्' इति क्वचित् पाठः। (२) क्वचित् पुस्तके 'प्रतियोगित्वात्' इत्यनन्तरं 'हेतुतावच्छेदकरूपेणे'ति पाठः, उत्तरांशे च 'हेतुतावच्छेदकरूपेणे'ति नास्ति। (३) 'एव'कारशून्य एव क्वचित् पाठः। (४) 'प्रायेण गौरवात्' इति क्वचित् पाठः। (५) 'यथासन्निवेशेन वैयर्थ्यासम्भवात्' इति पाठान्तरम्। (६) 'लघुसमनियते'ति पाठान्तरम्।

(क) अत्रेदमवधेयम्—प्रकृते व्यतिरेकांशे विशेषणीभूतं व्याप्यवृत्तित्वं स्वसमानाधिकरणाभावाप्रतियोगित्वरूपमेव, न तु निरवच्छिन्नवृत्तिकत्वरूपम्। तथा सति संयोगाभावस्य गुणादौ निरवच्छिन्नवृत्तिकत्व वारयितुमशक्यत्वात्। नापि अवच्छिन्नवृत्तिकान्यत्वरूपं, तथा सति आकाशादिरूपस्य व्यतिरेकस्यावारणादिति।

(ख) 'तादृशे'ति—साध्यव्याप्यतावच्छेदकेत्यर्थः।

मत्त्वावच्छेदेन द्रव्यत्वव्याप्तिसत्त्वेऽपि कम्बुग्रीवादिमत्त्वावच्छिन्नाभावस्याप्रसिद्ध्या व्यतिरेकव्याप्तेरसम्भवात् व्यभिचार इत्यतो व्याप्यवृत्तित्वस्य स्वातन्त्र्येण हेतौ विशेषणत्वेऽपि हेतुतावच्छेदकरूपेण व्यतिरेकप्रतियोगित्वं विशेषणमावश्यक-मित्याहुः(क)।

वस्तुतस्तु व्याप्यवृत्तिव्यतिरेकिणोर्हेतुसाध्ययोरिति यथासंख्यमन्वयः(१)। तथा च व्याप्यवृत्तित्वं हेतौ व्यतिरेकित्वञ्च साध्ये विशेषणम्। अन्वयव्याप्तिश्च प्रतियोगिवैयधिकरण्याघटितत्वेन उपादेया। इत्थञ्च संयोगी द्रव्यत्वादित्यादौ द्रव्यत्वे प्रतियोगिवैयधिकरण्याघटित-संयोगव्याप्त्यभावसत्त्वादेव न व्यभिचारः। व्यतिरेकित्वञ्च वृत्तिमदत्यन्ताभावप्रतियोगित्वम्, तेनाकाशाभावसाध्यके न व्यभिचारः।

इत्थञ्चात्रावधेयम्(२); पर्वतेतरत्वं न वह्नित्वावच्छिन्नव्याप्यतानिरूपित-व्यापकताशालि वह्न्यभावत्वावच्छिन्नव्यापकतानिरूपिता या व्याप्यता तदवच्छेदकी-भूताभावत्वावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नत्वाभावात्(३)। तादृशप्रतियोगिता-वच्छेदकं च वह्निसामग्रीत्वादिकं(४) प्रसिद्धम्।

यदि च पर्वतेतरत्वेऽपि तद्व्यक्तित्वरूपमेवावच्छेदकमादाय(५) हेत्वसिद्धिराश-ङ्क्यते, तदा पर्वतेतरत्वत्वं न तादृशव्यापकतावच्छेदकम्, वह्न्यभावत्वावच्छिन्न-व्यापकतानिरूपित(६)व्याप्यतावच्छेदकस्वावच्छिन्नाभावत्वकत्वाभावादिति प्रयोगः। तादृशं स्वं वह्निसामग्रीत्वादिकमेव प्रसिद्धमिति। इदञ्च चिन्त्यम्; पर्वतभेदत्वा-दिनोपाधित्वस्यैवं वारणेऽपि तद्व्यक्तित्वेन तस्य(७) दुर्वारमिति दिक्।

(१) 'यथासंख्येनान्वय' इति पाठान्तरम्। (२) 'अत्र बोध्यम्' इति 'इदञ्चात्र बोध्यम्' इति च पाठान्तरे। (३) 'वह्न्यभावत्वावच्छिन्ननिरूपितव्याप्यतावच्छेदकीभूता-भावत्वावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नत्वाभावात्' इति पाठान्तरम्। (४) 'वह्नि-सामग्रीत्वादिकमेव' इति पाठान्तरम्। (५) 'रूपमवच्छेदकमादाय' इति पाठान्तरम्। (६) 'वह्न्यभावत्वावच्छिन्ननिरूपित' इति पाठान्तरम्। (७) 'तद्व्यक्तित्वादिना तथात्वम्' इति पाठान्तरम्।

(क) आहुरित्यनेन निरुक्तकल्पे अस्वरसः सूच्यते। स च लघुसमनियतगुरोर्व्याप्यताव-च्छेदकत्वसिद्धान्ते हेतौ हेतुतावच्छेदकरूपेण व्यतिरेकप्रतियोगित्वविशेषणस्यानुपादेयतया तदपेक्षया प्रकृतमते गौरवादिति।

'अहेतुकत्वे'ति,—इदं शरीराहेतुकम् अहेतुकत्वादित्यत्र व्यतिरेके शरीर-विशेषणवैयर्थ्येन व्याप्त्यभावेऽपि अन्वयव्याप्तिसत्त्वादित्यर्थः।

धूमाभाववान् वह्न्यभावादित्यादौ धूमाभावाभावत्वादिना व्याप्तिविरहेऽपि न क्षतिः। तत्र धूमव्यापकवह्न्यभावादिनैव धूमाभावानुमानसम्भवे धूमाभावत्वा-वच्छिन्नं(क)वह्न्यभावनिष्ठव्याप्तेरनभ्युपगमस्यापि सम्भवादिति तन्नोदाहृतम्।

ननु व्यतिरेकपदेन सप्तमपदार्थरूपो(१)ऽभावो वाच्यः। न चैवं प्रकृता-सङ्गतिः, पर्वतेतरत्वाद्यभावस्यापि पर्वतत्वरूपत्वादिति वाच्यम्, पर्वतनिष्ठ(२) भेदप्रतियोगित्वाभावस्य पर्वतत्वसमनियतस्यापि प्राचां मते प्रतियोगिभेदेन भिन्नस्य सप्तमपदार्थरूपत्वादत आह—'एवमपी'ति। केचित्तु(३) स्वविशेषणाघटित(ख) विशेष्यतावच्छेदकावच्छिन्नाधिकरणवृत्तिस्वविशिष्टतद्विशेष्यतावच्छेदकावच्छिन्नाभावकं यद्विशेषणं तदवच्छिन्नतद्विशेष्याभावत्वभिन्नत्वेन साध्यतावच्छेदकं विशेषणीयम्। अन्वयव्याप्त्यनभ्युपगमो वास्वरस इत्यप्याह(४)। 'एवमपि'—उक्तव्याप्तिस्वीकारे-ऽपि। 'केवलान्वयिनी'ति,—व्याप्यवृत्तिव्यतिरेकित्वविशेषणेनैव तत्रोक्तव्याप्तेरव-याप्य-(५) नभ्युपगमात्। तथा च पक्षेतरसामान्ये वृत्ता अतिव्याप्तिरनेन प्रकारेण वारयितुमशक्येति भावः(६)।

## तत्त्वचिन्तामणिः

वस्तुगत्या साध्यव्यापकः पक्षेतर उपाधिरिति चेत्, अस्तु तथा, तथापि पक्षातिरिक्ते साध्यव्यापकताग्रहादुपाधेर्दूषकत्वम्, तच्च तत्राप्यस्ति, अन्यथा पक्षे साध्यसन्देहादनुपाधित्वे उपाधिमात्रमुच्छिद्येत।

---

(१) 'पदार्थोऽभाव' इति पाठान्तरम्। (२) 'निष्ठस्वभेद' इति पाठान्तरम्। (३) ग्रन्थविशेषे 'केचित्तु' इति नास्ति। (४) 'इत्यप्याहुः' इति पाठान्तरम्। (५) पुस्तकभेदे 'अपि' शब्दो नास्ति। (६) 'वारयितुं न शक्या' इति पाठान्तरम्।

(क) 'धूमाभावत्वावच्छिन्ने'ति—धूमाभावत्वावच्छिन्ननिरूपितेत्यर्थः। तस्यश्च व्याप्ता-वन्वेति।

(ख) अत्र स्वविशेषणघटितविशेष्यतावच्छेदकावच्छिन्नाधिकरणावृत्तिस्वविशिष्टेत्यादि-पाठं केचित् समीचीनमामनन्ति। तथा हि स्वं विशेष्यतावच्छेदकं हेतुकत्वरूपं; तद्विशेषणं शरीरं, तद्घटितविशेष्यतावच्छेदकं शरीरहेतुकत्वत्वं, तदवच्छिन्नाधिकरणघटाद्यवृत्तिशरीरहेतुकत्वत्वा-वच्छिन्नाभावकं शरीरविशेषणं, तदवच्छिन्नतद्विशेष्याभावत्वं शरीरहेतुकत्वाभावत्वं, तद्भिन्नत्वं न शरीराहेतुकत्वत्वे साध्यतावच्छेदक इति भावः।

## दीधितिः

'वस्तुगत्ये'ति,—तथा च पक्षे साध्यवति तदितरत्वं साध्याव्यापकम्, तद्रहिते च बाधोन्नीतत्वादुपाधिरेवेति भावः। यद्विषयतया ज्ञानस्य अनुमितिप्रति-(१) बन्धकत्वम्, तदेव प्रकृते उपाधित्वं वाच्यम्, नान्यदनुपयुक्तत्वात्। तच्चेदुक्तं रूपम्, तदा तद्रूपतया पक्षेतरस्यापि प्रकृतानुमितिमात्रोच्छेद इत्यभिप्रायवानाह—'अस्त्वि'ति। 'उपाधिमात्र'मिति—सत्प्रतिपक्षोन्नायकतया दूषकत्वमिति मते। इतरथा तु पक्षावृत्तेरुच्छेदो बोध्यः।

## दीधितिप्रकाशः

'तद्रहिते' साध्यरहिते पक्षे। 'उपाधिरेवे'ति,—यत्र साधनाव्यापकत्व-सम्भवः तत्रोपाधिरेवेति भावः (२)। सत्प्रतिपक्षोन्नायकत्वाभिप्रायेण चेदम्।

ननु 'अस्तु तथे'त्यादिना तत्रोपाधित्वज्ञानं स्यादित्युक्तम् तच्च न लक्षण-दूषकम् (३), अलक्ष्ये लक्षणगमनस्यैव अतिव्याप्तिपदार्थत्वादत आशयं पूरयति—'यद्विषयतये'ति। 'नान्यत्' इतरभेदानुमापकम्। 'अनुपयुक्तत्वात्' अनुमानदूषणप्रसङ्गे तस्य अनुपयोगात्। 'तत्' प्रतिबन्धकज्ञाने विषयतया(४) अवच्छेदकम्। 'उक्तं रूपम्'(५) साध्यव्यापकत्वे सति साधनाव्यापकत्वम्। 'अनुमितिमात्रे'ति,—तथा च 'उक्तं रूपं न प्रतिबन्धकतावच्छेदक'मित्यभ्युपेयम्। तथा च न तदुपाधित्व-स्वरूपमिति भावः।

मूले 'अनुपाधित्वे' उपाधित्वघटकसाध्यव्यापकत्वानिश्चये। 'उपाधिमात्रम्' उपाधित्वनिश्चयः। पक्षवृत्तित्वेन निश्चितस्यैव उपाधित्वनिश्चयसम्भवादुपाधि-मात्रमिति न सङ्गच्छते अत आह—'सत्प्रतिपक्षे'ति। पक्षवृत्तित्वेन निश्चये तदभावस्य पक्षे अनिश्चयेन सत्प्रतिपक्षत्वाभावादिति भावः। 'इतरथा'

---

(१) पुस्तकविशेषे 'अनुमिति' इति नास्ति। (२) 'वेत्यर्थे' इति पाठान्तरम्। (३) 'दूषणम्' इति पाठान्तरम्। (४) 'ज्ञानविषयताया' इति पाठभेदः। (५) उक्तरूपम् इति पाठान्तरम्।

व्यभिचारोन्नायकतया दूषकत्वमते। 'उच्छेदः' विशेषदर्शिनां साध्याव्यापकत्व-निश्चयः(१)। 'पक्षावृत्ते'रित्यस्य वा पक्षावृत्तित्वेन निश्चितस्येत्यर्थः।

## तत्त्वचिन्तामणिः

विपक्षाव्यावर्त्तकविशेषणशून्यत्वं विशेषणम्। तेन बाधोन्नीतपक्षेतरस्य परिग्रहः; तत्र पक्षस्यैव विपक्षत्वात्; न तु पर्वतेतरत्वादेरिति चेन्न; न हि वस्तु विपक्षाव्यावर्त्तकविशेषणशून्यं; सर्वत्र प्रमेयत्वादेः सत्त्वात्। तत्रोपात्तेति विशेषणे सिद्ध्यसिद्धिव्याघातः। न हि(२) तत्रोपात्तं तेन शून्यञ्चेति सम्भवति।

## दीधितिः

'विपक्षे'ति,—विपक्षाव्यावर्त्तकधर्मान्तरविशिष्ट(३)पक्षेतरत्ववारणाय निषेधद्वय-गर्भता।

## दीधितिप्रकाशः

विपक्षाव्यावर्त्तकधर्मवत्त्वस्योपेक्षायां बीजमाह,—'विपक्षे'ति। द्रव्यान्यत्व-विशिष्टपर्वतेतरत्वादेरित्यर्थः(क)। विपक्षाव्यावर्त्तकत्वञ्च यत्किञ्चिद्विपक्षवृत्तिता-वच्छेदकं यत् स्वविशेष्यतावच्छेदकं स्वविशिष्टतदवच्छिन्नाभाववत्तद्विपक्षकत्त्वम्, तद् यथा आर्द्रेन्धनादे(४)रार्द्रत्वादि. तद्धि धूमसाध्यक(५) विपक्षायोगोलकवृत्तिता-वच्छेदकं यदिन्धनत्वम्, तदवच्छिन्न-स्वविशिष्टाभाववदयोगोलकात्मकतद्विपक्षकं भवति, तादृशविपक्षाव्यावर्त्तकान्यत्वं पर्वतान्यत्वादौ पर्वतादेरिति।

द्रव्यं सत्त्वादित्यादौ गुणाद्युपाधौ गुणत्वमप्येवं विपक्षाव्यावर्त्तकम्, तद्विशे-ष्यतावच्छेदकाभावेन निरुक्तव्यावर्त्तकत्वायोगात्, अतो विपक्षाव्यावर्त्तकविशेषणान-

---

(१) 'साध्यव्यापकत्वानिश्चय' इति पाठान्तरम्। (२) 'नहि' इत्यारभ्य 'सम्भवति' इत्यन्त मूलसन्दर्भः पुस्तकविशेषे न दृश्यते। (३) 'धर्मान्तरावच्छिन्न' इति पाठान्तरम्। (४) 'आर्द्रेन्धनत्वादे' इति पाठान्तरम्। (५) 'धूमसाध्ये' इति पाठान्तरम्।

(क) 'पर्वतेतरत्वादे'रिति षष्ठ्यन्तपदेन व्याख्यया 'पक्षेतरत्ववारणाये'त्यत्र पक्षेतरत्वस्य वारणायेति पाठः सूच्यते। यथाश्रुते तु प्रकृते षष्ठीसमासविग्रहवाक्यस्थ-षष्ठ्यन्तपदद्वयै-वेदमर्थविवरणं बोध्यम्।

वच्छिन्नेत्यत्र विशेषणपदम्। यत्किञ्चिद्धर्मितावच्छेदकावच्छिन्नविशेषणत्वञ्च तदर्थः। तेन गुणत्वादिनिरासः।

वस्तुतस्तु यत्किञ्चिद्विपक्षभेदव्याप्यतावच्छेदककोट्यप्रविष्टत्वं(क) विपक्षाव्यावर्त्तकत्वम् आर्द्रेन्धनादौ सर्वमेव विशेषणं तदयोगोलकभेदव्याप्यतावच्छेदकम्, पर्वतेतरत्वादौ पर्वतादिविशेषणन्तु न किञ्चिद्विपक्षभेदव्याप्यतावच्छेदकमिति। अत एव उपाधिताघटकसम्बन्धेन(ख) विपक्षवृत्तित्वस्य विवक्षायां द्रव्यं सत्त्वादित्यादौ संयोगादिसम्बन्धेनोपाध्यव्याप्तिरित्यादि दूषणमनवकाशम्।

## तत्त्वचिन्तामणिः

तथापि च साध्यव्यापकत्व-साधनाव्यापकत्वे तत्र स्त इति तद्व्यावृत्त्या पक्षे साध्यव्यावृत्तिरतो हेतोर्व्यभिचार एव; व्यभिचारे चावश्यमुपाधिरिति पक्षेतर एव तत्रोपाधिः स्यात्। तावन्मात्रस्यैव दूषकत्वाच्च व्यर्थं विशेषणम्।

अत एव अनुमानमात्रोच्छेदकतया जातित्वाच्च पक्षेतर उपाधिरित्यपास्तम्; दूषणसमर्थत्वेन जातित्वाभावात्। एतेन पक्षेतरव्यावृत्त्यर्थं प्रकारान्तरमपि निरस्तम्। उपाधित्वाभावेऽपि दूषणसमर्थत्वात्।

## दीधितिः

विपक्षाव्यावर्त्तकविशेषणानवच्छिन्न-साध्यव्यापकत्व-साधनाव्यापकत्वशालित्वं तद्विवक्षितमित्याशङ्क्य पक्षेतरस्य(१) उपाधित्वमनङ्गीकुर्वतस्तव मतेनातिव्याप्तिरभिहिता।

(१) 'पक्षेतरत्वस्य' इति पाठान्तरम्।

---

(क) अत्र तादृशव्याप्यतावच्छेदककोट्यप्रविष्टत्वं तादृशव्याप्यतावच्छेदकविषयकप्रतीत्यविषयत्वरूपं बोध्यम्। तेन द्रव्यं सत्त्वादित्यादौ तादृशव्याप्यतावच्छेदकाभिन्नस्यापि गुणत्वादेर्न प्रकृतविपक्षव्यावर्त्तकत्वानुपपत्तिः।

(ख) उपाधितावटकसम्बन्धेन विपक्षवृत्तिताया अभिवेशे वह्नित्वादेरपि कालिकादिसम्बन्धेन ह्रदादिरूपविपक्षवृत्तितावच्छेदकत्वेन निरुक्तरीत्या पर्वतावृत्तित्वविशिष्टवह्न्यादेरुपाधित्वस्य वारयितुमशक्यत्वात्।

वस्तुतो दूषकताप्रयोजकरूपवतस्तस्यानुपाधित्वाभ्युपगमः, तद्वारणाय च विशेषणोपादानं द्वयमपि न युक्तमित्यभिप्रायवानाह 'तथापी'ति।

'तावन्मात्रस्य' साध्यव्यतिरेकोन्नयनक्षमस्य(१)साध्यव्यापकतामात्रस्य। 'दूषकत्वात्'दोषोन्नयनोपयोगित्वात्। 'जातित्वा'दिति(२)त्वदुत्तरस्येत्यादिः। 'उपाधित्वाभावेऽपी'ति,—उपाधित्वानङ्गीकारेऽपीत्यर्थः।

## दीधितिप्रकाशः

'विशेषणानवच्छिन्ने'ति — साध्यव्यापकत्वसाधनाव्यापकत्वयोरन्यतरमात्रान्वयि। न चैवं पर्वतेतरत्वादावपि वह्निविशिष्टत्वेन साध्यव्यापकत्वस्य महानसत्वविशिष्टत्वेन साधनाव्यापकत्वस्य विपक्षाव्यावर्त्तकविशेषणानवच्छिन्नस्य सत्त्वात् तत्रातिव्याप्तिरिति वाच्यम्, एकरूपावच्छिन्नसाध्यव्यापकत्वादिविवक्षणेनैव तन्निरासादिति। 'तद्विवक्षितम्' तस्य विशेषणदातुर्विवक्षितम्। इत्याशङ्क्य इत्यभिप्रायवानाह इत्यन्वयः।

ननु 'तथापी'त्यादिना पक्षेतरेऽव्याप्तिदानं(३) न घटते, स्वयमेव तत्रातिव्याप्तेरुद्भावनेन तस्यालक्ष्यत्वस्वीकारादत आशयं पूरयति 'पक्षेतरस्ये'ति(४)। 'वस्तुतः' वस्तुगत्या। 'दूषकताप्रयोजकरूपवतः' तत्त्वेन ज्ञायमानस्य। इदञ्च उपाधेः सत्प्रतिपक्षवदित्यदोषत्वाभ्युपगमेन यदा यत्र साध्यव्यापकत्वादिज्ञानं तदा स उपाधिरित्यभिप्रायेण। मूले च सर्वत्र साध्यव्यापकत्वादिपदं तत्तज्ज्ञानपरम्(५)।

'तस्य' पक्षेतरत्वस्य। 'वारणाय चे' त्यत्रापि 'तस्ये'(६)त्यन्वयः 'तथापी'त्यादिना सत्प्रतिपक्षोन्नायकत्वस्योपक्रमात् तत्र साधनाव्यापकत्वस्यानुपयोगात् तत्साधारण्याय 'तावन्मात्रस्ये'तिपदं व्याचष्टे – 'साध्यव्यतिरेकोन्नयनक्षमस्ये'ति(७)। तथा च मूले मात्रपदेन 'विपक्षाव्यावर्त्तकविशेषणानवच्छिन्ने'त्यस्य व्युदासः।

---

(१) 'क्षमसाध्य' इति समस्तपदं क्वचिद् दृश्यते। (२) 'तदुत्तर' इति पाठान्तरम्। (३) 'अव्याप्तेरभिधानम्' इति पाठान्तरम्। (४) 'पक्षेतरत्वस्येति' इति पाठान्तरम्। (५) 'तज्ज्ञान' इति पाठान्तरम्। (६) 'तस्यैवान्वय' इति पाठान्तरम्। (७) 'क्षमेति' इति पाठान्तरम्।

साध्यव्यापकत्वमात्रं न दूषकम्, पक्षे साध्यव्यापकाभावस्य साधने वा साध्यव्यापकव्यभिचारस्य सत्प्रतिपक्षस्य व्यभिचारस्य वा उन्नायकत्वादत आह—'दोषस्य' सत्प्रतिपक्षस्य व्यभिचारस्य वा। 'उन्नयनोपयोगित्वात्' उन्नयनोपयुक्तत्वादित्यर्थः।

पक्षेतरस्य(A) न जातित्वं दूषणासमर्थोत्तरस्यैव जातित्वादत आह—'त्वदुत्तरस्ये'ति(१)। एवञ्च उपाधेर्दूषकत्वं व्यभिचारानुमानद्वारा, अनुमानमात्रस्योच्छेदे च व्यभिचारानुमानस्याप्युच्छेदात्। पक्षेतरोत्तरस्य दूषणासमर्थत्वेन(२) जात्युत्तरत्वमिति तद्वारणाय 'विपक्षाव्यावर्तके'त्यादि विशेषणं नानुचितमित्यत एवेति मूलार्थः।

मूले 'दूषणसमर्थत्वेने'ति,—अनुमानप्रवृत्तिस्तु तदज्ञानदशायामेवेति नानुमानमात्रोच्छेद इत्याशयः। पूर्वपक्षिणा उपाधित्वस्यैवाभ्युपगमात् 'उपाधित्वाभावेऽपी'ति तदुक्तिर्न युक्तेत्यत आह—'उपाधित्वानङ्गीकारेऽपी'ति। तवेति शेषः।

## तत्त्वचिन्तामणिः

अथोपाधिः स्वव्यतिरेकेण सत्प्रतिपक्षोत्थापकतया(३) दूषणम्। पक्षेतरत्वव्यतिरेकश्च न साध्याभावसाधकः असाधारणत्वात्(४)। न तु व्यभिचारोन्नायकतया दूषणम्(५)।

यथा हि(६) साध्यव्यापकोपाधव्याप्यतया हेतोः साध्याव्याप्यत्वम्, तथा साध्यव्याप्यहेत्वव्यापकतया उपाधेर्न(७) साध्यव्यापकत्वमपि सिध्येत्, व्याप्तिग्राहकस्य उभयत्रापि साम्येन(८) विनिगमकविरहात्(९)। तस्माद् यथा साध्य-

(A) 'पक्षेतरत्वस्य इति पाठान्तरम्। (१) 'तदुत्तरस्येति' इति पाठान्तरम्। (२) क्वचित् सप्तम्यन्तपाठः। (३) 'सत्प्रतिपक्षतया' इति क्वचित् पाठः। (४) 'असाधारण्यात्' इति पाठान्तरम्। (५) पुस्तकविशेषे 'दूषणम्' इति नास्ति। (६) 'यथा हि' इत्यतः पूर्वं 'तथा हि' इत्यतिरिक्तः पाठः क्वचिद् दृश्यते। (७) 'उपाधेः साध्याव्यापकत्वमपि सिध्येत्' इति पाठान्तरम्। (८) 'सत्त्वेन' इति पाठान्तरम्। (९) 'विनिगमकाभावात्' इति पाठान्तरम्।

(क) तदुक्तं 'साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जाति'रिति जातिसूत्रव्याख्यायां विश्वनाथेन 'व्याप्तिनिरपेक्षाभ्यां साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं दूषणाभिधानं जातिरित्यर्थः। ······ तेन च सम्दर्भेण दूषणासमर्थत्वं स्वव्याघातकत्वं वा दर्शितम्। तथा च छलादिभिन्नदूषणासमर्थमुत्तरं स्वव्याघातकमुत्तरं वा जातिरिति सूचितमिति।

व्याप्येन हेतुना साध्यं साधनीयम्, तथा साध्यव्यापकोपाधिव्यावृत्त्या साध्याभावोऽपि साधनीयः, व्याप्तिग्रहतौल्यादिति दूषकताबीजम्, सोऽयं सत्प्रतिपक्ष एवेति।

मैवम्; एवं हि सत्प्रतिपक्ष उपाध्युद्भावनं न स्यात्; सत्प्रतिपक्षान्तरवत्। किञ्चैवं बाधोन्नीतोऽपि पक्षेतरो नोपाधिः(१) स्यात्, व्यतिरेके असाधारण्यात्।

## दीधितिः

दूषकताबीजसत्त्वे तस्योपाधित्वम्। दूषकताबीजञ्च न व्यभिचारादेरुन्नायकत्वम्, अपि तु सत्प्रतिपक्षस्य, तच्च तत्र(A) नास्तीत्यतो न स उपाधिरिति शङ्कते(२) 'अथे'ति। 'व्यभिचारोन्नायकतया' व्यभिचाराद्युन्नायकतया। 'अव्याप्यतया' अव्याप्यत्वादिना। 'अव्याप्यत्वम्' अव्याप्यत्वादि। 'सत्प्रतिपक्षान्तरव'दिति,—व्याप्तिपक्षधर्मतारूपबलसत्त्वेनैकेनापि बहूनां प्रतिरोधसम्भवाद् बहुत्वस्याबलत्वात्।

यत्तु प्रमाणतत्त्वबोधादौ बहुत्वमपि बलमुक्तम्, तन्न सत्प्रतिपक्षतायाम्, किन्त्वेकत्राङ्गभङ्गप्रसङ्गे(३)। बहुषु तत्कल्पना-(४)गौरवम्, एकत्र च लाघवमिति तर्कोत्थापकतयेति, नोपाधेः सत्प्रतिपक्षोत्थापकतया(५) तत्र दूषणत्वसम्भव इति भावः। 'एवम्' सत्प्रतिपक्षोन्नायकतया दूषकत्वे।

## दीधितिप्रकाशः

'न स उपाधि'रिति,—तथा च तद्वारकं(६) विशेषणं नायुक्तमिति भावः। व्यभिचारोन्नायकत्वाभावमुपक्रम्य 'यथा ही'त्यादिना व्याप्यभावोन्नायकत्वाभावे हेतुवचनमसङ्गतमतो न्यूनत्वभङ्गाय(७) प्रथममेव पूरयति—'व्यभिचारादी'ति। आदिना व्याप्यत्वाभावपरिग्रहः। उभयस्यैवोपक्रमे(८) व्यभिचारोन्नायकत्वाभावे हेत्वप्रदर्शनान्न्यूनत्वमतो हेतुं पूरयति—'अव्याप्यत्वादिने'ति। साध्यं पूरयति,—'अव्याप्यत्वादी'ति।

(१) उपाधिर्न स्यात्' इति पाठान्तरम्। (A) 'तत्रे'ति न सार्वत्रिकम्। (२) 'रित्याशङ्कते' इति पाठान्तरम्। (३) 'प्रसक्तौ' इति पाठान्तरम्। (४) 'कल्पने' इति पाठान्तरम्। (५) 'सत्प्रतिपक्षमुद्रया' इति पाठान्तरम्। (६) 'तद्वारकविशेषणम्' इति क्वचित् पाठः। (७) न्यूनता' इति पाठान्तरम्। (८) सर्वत्र 'एव' शब्दो नास्ति।

ननु प्रतिपक्षबहुत्वरूपबलसम्पत्तये सत्प्रतिपक्षोद्भावनं(१) युक्तमेव इत्यत आह—'व्याप्ती'ति। 'बहुत्वस्य' प्रतिपक्षबहुत्वस्य। 'न सत्प्रतिपक्षताया'मिति,—सप्तम्यर्थश्चोपयोगित्वम्, तथा च अनुमितिप्रतिबन्धकतोपयुक्तं न बहुत्वं बलमित्यर्थः।

'अङ्गभङ्गे'ति,—व्याप्तिपक्षधर्मताभङ्गेत्यर्थः(२)। तर्कोत्थापकतया बहुत्वं बलमित्यर्थः। तथा च यत्रैता(३)दृशतर्कोत्थापकं(४) न वृत्तम्, तत्र सत्प्रतिपक्षान्तर(५)-बहुपाध्युद्भावनं व्यर्थमेव स्यादिति मूलार्थः। 'किञ्चै'वमित्यस्यैवमिति व्याचष्टे 'एव'मिति।

## तत्त्वचिन्तामणिः

ननु बाधे नोपाधिनियमः, धूमेन ह्रदे वह्निसाधने तदभावात्। न तु(६) हेतुमति पक्षे बाधे पक्षेतरोपाधिनियमः, प्रत्यक्षे(७) वह्नौ कृतकत्वेन अनुष्णत्वे साध्ये अतेजस्त्वादेरुपाधित्वसम्भवादिति चेन्न; तेजोमात्रस्य पक्षत्वे(८) अतेजस्त्वं विना अन्यस्य उपाधेरभावात्।

## दीधितिः

बाधस्यानिश्चये असाधारण्यान्निश्चये च वैयर्थ्यान्मा भूत् सोऽप्युपाधिरित्यभिप्रायेण शङ्कते 'नन्वि'ति। 'हेतुमती'ति,—न चासङ्कीर्णबाधस्थले व्यभिचारः, प्रतियोगिव्यधिकरणसाध्याभावस्यैव प्रकृते बाधत्वात्, तदनभ्युपगमाद्वा। 'अतेजस्त्वं विने'ति,—तत्समशीलं विना शुद्धसाध्यव्यापकस्योपाधेरभावादित्यर्थः। तेन भास्वररूपशून्यत्वादे रूपवत्त्वावच्छिन्नसाध्यव्यापकगुरुत्वादेश्च सत्त्वेऽप्यदोषः।

## दीधितिप्रकाशः

'व्यतिरेकेऽसाधारण्या'दित्यत्रापि हेतुं प्रदर्शयन् 'नन्वि'त्यादेस्तात्पर्यार्थे हेतुं पूरयति 'बाधस्यानिश्चय' इत्यादिना। 'असाधारण्यात्' व्यतिरेके असाधारण्यात्। 'वैयर्थ्यात्' उपाध्युद्भावनवैयर्थ्यात्।

---

(१) पुस्तकविशेषे 'सत्प्रतिपक्षे सत्प्रतिपक्षोद्भावन'मिति क्वचित्। (२) धर्मतारूपाङ्गभङ्गेति' इति पाठान्तरम्। (३) 'यत्रेदं तर्कोपस्थापनं न वृत्तम्' इति पाठान्तरम्। (४) 'कोत्थापनम्' इति पाठान्तरम्। (५) सत्प्रतिपक्षे 'सत्प्रतिपक्षवदि'ति पाठान्तरम्। (६) क्वचित् 'न तु' इत्यत्र 'न च' इति 'पक्षेतरोपाधिनियम' इत्यनन्तरञ्च 'वाच्यम्' इति पाठो दृश्यते। (७) 'प्रत्यक्षत्वेन गृहीते' इति पाठान्तरम्। (८) 'मात्रपक्षत्वे' इति क्वचित्।

यद्वा 'व्यतिरेक'इत्यनन्तरं 'बाधस्यानिश्चय' इति, 'असाधारण्यादि'त्यनन्तरञ्च 'निश्चय' इत्यादिकं पूरयन् फलाभावात् मा भूत् सोऽपीत्यत्रापि हेतुं पूरयति—'बाधस्यानिश्चय' इत्यादिना।

ननु वैयर्थ्येऽपि व्याप्तिबलादेव तत्रोपाधिर्भविष्यतीत्यतस्तादृशी व्याप्तिरपि नास्तीत्याह मूले 'बाधे नोपाधिनियम' इति। 'हेतुमती'ति, हेतुमति पक्षे बाधे उपाधिनियम इत्येव व्याप्तिः. उपाधेश्चान्यस्यासत्त्वात्(१) परिशेषात् पक्षेतर एवोपाधिर्भविष्यतीत्याशयः। 'अतेजस्त्वादेरुपाधित्वसम्भवा'दिति,—तथा च न परिशेषावकाश इति भावः। 'तेजोमात्रे'ति,—अत्रैव(२) परिशेषादुक्तनियमबलेन पक्षेतरे उपाधित्वसम्भव इति भावः।

दीधितौ 'न चासङ्कीर्णे'ति'—व्यभिचारासङ्कीर्णेत्यर्थः(३)। गन्धप्रागभावावच्छिन्नो घटो गन्धवान् पृथिवीत्वादित्यादौ प्रसिद्धस्य वह्नेर्महानसीयत्वे लाघवमिति लाघवज्ञानसहकारेण(४) महानसीयवह्न्यादेर्बाधादसाधके वह्निमान् धूमादित्यादौ च हेतुमति पक्षे बाधसत्त्वेऽपि उपाधेरभावान्न व्यभिचार इत्यर्थः। 'साध्याभावस्यैवे'ति—साध्यतावच्छेदकावच्छिन्नसाध्याभावस्यैवेत्यर्थः(५)। 'प्रकृते' प्रकृतनियमे।

अभिप्रायसङ्कोचभयादाह 'तदनभ्युपगमाद्दे'ति. असङ्कीर्णबाधानभ्युपगमात्। पक्षतावच्छेदकसामानाधिकरण्यमात्रस्यैव अनुमितिविषयत्वेन पक्षतावच्छेदकस्यावच्छेदकस्यावच्छेदकताया(६) अनुमित्यविषयत्वात् समानप्रकारकविरोधिनिश्चयस्यैव विरोधितया महानसीयवह्नित्वेनाभावनिश्चयस्य वह्नित्वेन तदनुमितावविरोधित्वात्(७) सल्लिङ्गपरामर्शस्य गुणतया बाधितार्थलाघवप्रतिसन्धानदशायामपि(८) तत(क)स्तथानुमित्यसम्भवादिति भावः।

---

(१) 'अन्यस्यासम्भवात्' इति पाठान्तरम्। (२) 'तत्रैव इति पाठान्तरम्। (३) व्यभिचाराद्यसङ्कीर्णेत्यर्थ' इति पाठान्तरम्। (४) ग्रन्थविशेषे 'प्रसिद्धस्ये'त्यनन्तरं 'वह्ने'रित्यादिः 'सहकारेण' इत्यन्तो ग्रन्थो न दृश्यते। (५) 'च्छिन्नाभावस्यैवेत्यर्थ' इति पाठान्तरम्। (६) 'तया' इति पाठान्तरम्। (७) 'वविरोधात्' इति पाठान्तरम्। (८) 'सन्धानवशादपि' इति पाठान्तरम्।

---

(क) 'ततः' सल्लिङ्गपरामर्शात्। 'तथानुमित्यसम्भवा'दिति-महानसीयवह्नित्वेन तदनुमित्यसम्भवादित्यर्थः।

'तत्समशील'मिति,—असाधारणव्यतिरेकप्रतियोगित्वेन (१)तत्तुल्यमित्यर्थः। 'शुद्धसाध्यव्यापकस्ये'ति,—इत्थञ्च 'उपाधिनियम' इति मूलस्य(२) शुद्धसाध्यव्यापकोपाधिनियम इति भावः(३)।

## दीधितिः

नचैतद्व्यतिरेको नासाधारणः, पक्षे साध्यस्यासिद्धौ सपक्षाभावात्। सिद्धौ(४) च तत्रैव सपक्षे वर्त्तमानत्वादिति वाच्यम्; पक्षमात्रवृत्तिरसाधारण इत्यभिप्रायात्।

जलादावुष्णत्वभ्रमदशायां तथात्वमित्यपरे। ग्रीष्मोष्मणि तेजस्त्वाग्रहदशायामप्रतीतसाध्यतदभावसहचारत्व(५)रूपमसाधारण्यमित्यन्ये।

## दीधितिप्रकाशः

'एतद्व्यतिरेकः' अतेजस्त्वादिव्यतिरेकः। 'पक्षे' तेजोमात्रे। 'साध्यस्य' अनुष्णत्वव्यतिरेकस्य उष्णत्वस्य। 'असिद्धौ' अनिश्चये(६)। 'सपक्षे' निश्चितसाध्यवति। 'जलादा'विति,—साध्यनिश्चयविषयत्वं सपक्षत्वम्, न तु निश्चितसाध्यवत्त्वं, तस्य तु(७) नाप्रसिद्धिरिति भावः।

'ग्रीष्मोष्मणी'ति,—उद्भूतरूपवत्तेजसि(८) उष्णत्वनिश्चये तेजस्त्वनिश्चयस्यापि सम्भवादप्रतीतसाध्यसहचारत्वासम्भवादनुद्भूतरूपानुधावनम्। सपक्षसिद्धिमनुरुध्य ग्रीष्मोष्मणि उष्णत्वनिश्चयानुसरणम्।

न च अप्रतीतसाध्यतदभावसहचारत्वमित्यत्र साध्यनिश्चयस्याघटकत्वात्तदनुसरणं(क) किमर्थमिति वाच्यम्; निश्चितसाध्यतदभाववद्व्यावृत्तत्वमसाधारण्यमित्यस्य निश्चितसाध्यतदभाववद्वृत्तितया अनिश्चितत्वमित्यर्थकरणाभिप्रायेण

(१) 'त्वेन तुल्य' इति पाठान्तरम्। (२) 'इत्यस्य' इति पाठान्तरम्। (३) 'इत्यर्थः' इति पाठान्तरम्। (४) 'सिद्धौ तु' इति पाठान्तरम्। (५) 'चाररूपत्व' इति पाठान्तरम्। (६) 'सिद्धौ निश्चये' इति क्वचित् पाठः। (७) 'तस्यातो' इति क्वचित्। (८) 'रूपवति तेजसि' इति पाठान्तरम्।

(क) 'तदनुसरण'मिति ग्रीष्मोष्मणि उष्णत्वनिश्चयानुसरणमित्यर्थः।

तदनुसरणादिति(१)। यदा जलादावुष्णत्वभ्रमो ग्रीष्मोष्मणि तेजस्त्वाग्रहश्च नास्ति, तदा तत्रोक्तपक्षेतरव्यतिरेकस्य उक्तरूपासाधारण्याभावादुपाधित्वमक्षतमिति किञ्चैव-मित्यादि—पूर्व(२)मूलस्यासङ्गतिरित्यस्वरसो'ऽन्ये'ऽ'पर' इत्यनेन सूचितः।

## तत्त्वचिन्तामणिः

किञ्च पर्वतावयववृत्त्यन्यत्वं पर्वतेतरद्रव्यत्वम् ह्रदपर्वतसंयोगानाधारत्वम् ह्रदपर्वतान्यत्वादिकमुपाधिः स्यादेव, व्यतिरेके असाधारण्याभावाद् व्यतिरेकिणा सत्प्रतिपक्षसम्भवाच्च।

न चासाधारण्यम्, तस्यापि सत्प्रतिपक्षोत्थापकतया दोषत्वात्। तस्मा-दुभयोरपि व्याप्तिग्राहकसाम्ये विरोधान्न व्याप्तिनिश्चयः, किन्तूभयत्र व्यभिचारसंशयः। तथा च व्यभिचारसंशयाधायकत्वेनोपाधेर्दूषकत्वम्, तच्च पक्षेतरेऽप्यस्ति। तदुक्तम् 'उपाधेरेव व्यभिचारशङ्के'ति।

## दीधितिः

असाधारण्ये हि साध्यसहचारग्रहप्रतिबन्धेन व्याप्तिग्रहप्रतिबन्धः। व्यतिरेक-व्याप्त्यादरे तु साध्यतदभावयोर्द्वयोरपि(३) तदविशेषात् सत्प्रतिपक्षो दूषकताबीजम्। न चेहाद्यः, व्यतिरेकित्वात्। न द्वितीयः, सत्प्रतिपक्षे तदनवकाशात्। अतः पक्षेतरोऽपि सत्प्रतिपक्षोन्नायकतया उपाधिरेवेत्याह—व्यतिरेकिणेत्यादिना।

नन्वेवं प्रागुक्तरीत्या व्यभिचाराद्युन्नायकत्वस्य सत्प्रतिपक्षे अनुद्भावनीयता-परया च सत्प्रतिपक्षोन्नायकत्वस्य दूषकतायामबीजत्वे उपाधिर्दूषणमेव न स्यात् बीजाभावादत आह—'तस्मादि'ति। तदुक्तम् 'उपाधेर्व्यभिचारशङ्के'ति।

## दीधितिप्रकाशः

'व्यतिरेकिणा सत्प्रतिपक्षसम्भवाच्चे'ति मूलमवतारयितुमाह—'असाधारण्ये ही'त्यादिना। 'व्याप्तिग्रहप्रतिबन्धो दूषकताबीज'मित्यग्रेतनेनान्वयः(४)।

---

(१) 'तथानुसरणादिति' इति पाठान्तरम्। (२) 'पूर्व' शब्दः सर्वत्र नास्ति। (३) 'तदभावयोरपि' इति पाठः क्वचित्। (४) 'तनेन सम्बन्ध' इति पाठान्तरम्।

ननु, अन्वयव्याप्तिग्रहप्रतिबन्धेऽपि व्यतिरेकसहचारबलाद् व्यतिरेकव्याप्तिग्रहादेवानुमितिः स्यादत आह—'व्यतिरेके'ति। 'तदविशेषात्' असाधारणहेतुव्यतिरेकव्याप्तिग्रहाविशेषात्।

'न चेहे'ति,—इह पक्षेतरस्यव्यतिरेके(१) अन्वयव्याप्तिग्रहप्रतिबन्धो न दूषकताबीजमित्यर्थः। 'व्यतिरेकित्वा'दिति, — व्यतिरेकव्याप्तिग्रहाधीनसत्प्रतिपक्षतायामन्वयव्याप्त्यग्रहस्य(२) अकिञ्चित्करत्वादित्यर्थः। अत एव मूले 'व्यतिरेकिणा' इत्युक्तम्। 'न च असाधारण्यम्, तस्यापि सत्प्रतिपक्षोत्थापकतया दोषत्वादि'ति मूलार्थं दर्शयितुमाह 'न द्वितीय' इति। इह सत्प्रतिपक्षो दूषकताबीजमिति नेत्यर्थः। 'तदनवकाशात्' सत्प्रतिपक्षानवकाशात्।

'प्रागुक्तरीत्ये'ति,—यथा साध्यव्यापकव्यभिचारित्वेन साध्यव्यभिचारित्वमुन्नेयम्, तथा साध्यव्याप्याव्यापकत्वेन साध्याव्यापकत्वमप्युपाधौ(३) स्यादिति रीत्येत्यर्थः।

'व्यभिचाराद्युन्नायकत्वस्ये'ति 'दूषकतायामबीजत्वे' इत्यग्रिमेणान्वयः। उपाधेरन्यतोऽपि शङ्कोदयादन्ययोगव्यवच्छेदासम्भवात् प्रकृतानुपयोगाच्च एवकारस्य भिन्नक्रमं दर्शयितुं तथैव मूलमनुवदति 'उपाधे'रित्यादि।

## तत्त्वचिन्तामणिः

भवतु वोक्तन्यायेन सकलानुमानभङ्गभिया(४) पक्षेतरोऽनुपाधिः(५)। तथापि लक्षणमतिव्यापकम्(६)। नापि साध्यसमव्याप्तत्वे सति साधनाव्यापकत्वमुपाधित्वम्, दूषकताबीजस्य व्यभिचारोन्नयनस्य सत्प्रतिपक्षस्य वा साम्येन विषमव्याप्तस्यापि उपाधित्वात्, तथा दूषकतायां साध्यव्याप्यत्वस्याप्रयोजकत्वाच्च।

(१) 'तद्व्यतिरेके' इति पाठान्तरम्। (२) 'व्याप्तिग्रहस्य' इति पाठान्तरम्। (३) साध्याव्यापकत्वमुपाधौ' इति पाठान्तरम्। (४) 'भयात्' इति पाठान्तरम्। (५) 'नोपाधिः' इति पाठान्तरम्। (६) 'व्यापकमेव' इति पाठान्तरम्।

## दीधितिः

भवतु वा पक्षेतरो नोपाधिः, उपादीयतां तद्व्यावृत्तये विपक्षाव्यावर्त्तकेत्यादिकं(१) विशेषणम्, तथापि लक्षणमतिव्यापकमेव अणवो जन्याणवो वा सकर्त्तृकाः कार्य्यत्वादित्यादावनणुत्वादौ।

ननु व्यभिचाराद्युन्नायकतामात्रेणोपाधित्वे व्यापकव्यभिचारित्वादावतिप्रसङ्ग इत्यत आह—'तथे'त्यादि(२)। 'तथा' तेन रूपेण, स्वव्यभिचारेण स्वव्यतिरेकेण वा। 'दूषकतायाम्' व्यभिचारस्य सत्प्रतिपक्षस्य वा उन्नायकतायाम् अतिप्रसञ्जन(३)-भञ्जिकायां साध्यव्याप्यत्वस्य व्यर्थत्वात्।

## दीधितिप्रकाशः

भवतु वेत्यादि(४), पक्षेतरे अतिव्याप्तिवारणाय 'विपक्षाव्यावर्त्तके'त्यादि-विशेषणदानात् तद्विशेषातिव्याप्तिपरत्वं मूलस्य दर्शयितुं पूरयति 'उपादीयता'मिति।

'तथापी'ति मूलमनूद्य अतिव्याप्तिस्थलं दर्शयति 'अणव' इति। विपक्षाव्यावर्त्तकेत्यत्र यदि विपक्षत्वं साध्याभाववत्त्वम्, तदा अणुत्वावच्छेदेनापि पक्षतायाम् परमाणोर्विपक्षत्वमक्षतमित्याशयेन(५) 'अणव' इति। यदि निश्चितसाध्याभाववत्त्वम्, तदा आह—'जन्याणव'(क) इति।

न च अणुभिन्नत्वे द्व्यणुकस्याप्यणुत्वेन विशेषणत्वात्तस्य च विपक्षाव्यावर्त्तकत्वमस्त्येवेति वाच्यम्; नहि द्व्यणुकस्य तत्त्वेनोपाधौ प्रवेशः, किन्त्वणुत्वेन, तेन रूपेण परमाणुरूपविपक्ष(६)व्यावर्त्तकत्वमस्त्येवेति भावः।

(१) 'व्यावर्त्तकेत्यादि विशेषणम्' इति पाठान्तरम्। (२) 'तथेति' इति पाठान्तरम्। (३) 'अतिप्रसङ्ग' इति पाठान्तरम्। (४) 'भवतु वेत्यादि' इत्यतः पूर्वं 'भवतु वेत्यादिकं मूलं कतिपयपदानि पूरयित्वा व्याचिख्यासुर्मूलमनुवदति' इत्यधिकः पाठः क्वचित्। (५) 'विपक्षत्वमित्याशयेन' इति क्वचित्। (६) 'विपक्षस्य'इति क्वचित्।

(क) तथाहि अणुत्वावच्छेदेन पक्षतायां परमाणोः साध्याभाववत्त्वानिश्चयेन विपक्षत्वासम्भवात्तद्व्यावर्त्तकत्वमणुविशेषणस्य न स्यादतः पक्षान्तरमाह 'जन्याणवो वेती'ति जगदीशपरिष्कारः।

प्रकृतलक्षणप्रविष्टसाध्यव्याप्यत्वस्य दूषकतायामनुपयोगित्वेऽपि पक्षेतरे(१) अतिव्याप्तिवारकतयैव सार्थकत्वात् तथेत्यादि मूलमनुपपन्नमतस्तदवतारणिकामाह 'नन्वि'त्यादिना ।

'व्यभिचारादी'त्यादिना सत्प्रतिपक्षपरिग्रहः(२) । उन्नायकत्वम् व्याप्यतया व्याप्यीभूतव्यभिचारादिप्रतियोगितया वा । 'मात्रेणे'ति—मात्रपदेन साध्यव्याप्यत्वादिघटितलक्षण(३)व्यवच्छेदः । 'उपाधित्वे' उपाधिपदवाच्यत्वे । 'व्यापकव्यभिचारादा'वित्यादिना सत्प्रतिपक्षोन्नायकव्यापकव्यतिरेकपरिग्रहः(४) ।

'तथे'त्यस्य दूषणसमुच्चायकत्वे चकारवैयर्थ्यात्तदर्थमाह—'तेन रूपेणे'ति । 'दूषकताया'मित्यस्य व्याख्या 'व्यभिचारस्ये'त्यादिः । 'अतिप्रसञ्जने'ति—व्यापकव्यभिचारादावतिप्रसञ्जनेत्यर्थः । तथा च व्यापकव्यभिचारित्वा(५)द्यतिप्रसञ्जनभञ्जकस्य(६) लक्ष्यतानियामकस्य 'स्वव्यभिचारेणे'त्यादिदूषकताबीजस्य(७) विषमव्यापकसाधारण्यवारणार्थं यत् साध्यव्याप्यत्वं विशेषणं भवदभिमतम् , तस्य वैयर्थ्यादिति मूलार्थः ।

## तत्त्वचिन्तामणिः

अथ साध्यप्रयोजको धर्म उपाधिः । प्रयोजकत्वञ्च न न्यूनाधिकदेशवृत्तेः । तस्मिन् सति अभवतः, तेन विनापि भवतस्तदप्रयोजकत्वात् (क), अन्यथा पक्षेतरस्यापि उपाधित्वप्रसङ्गादिति(८) चेन्न, दूषणौपयिकं हि प्रयोजकत्वमिह विवक्षितम् । तच्च साध्यव्यापकत्वे सति साधनाव्यापकत्वमेवेति, तदेव प्रयोजकम् । न त्वधिकं व्यर्थत्वात् ।

(१) 'पक्षेतरातिव्याप्ति' इति पाठान्तरम् । (२) 'सत्प्रतिपक्षग्रहः' इति पाठान्तरम् । (३) 'लक्षणस्य' इति पाठान्तरम् । (४) 'सत्प्रतिपक्षोन्नायकव्यतिरेकग्रह' इति पाठान्तरम् । (५) 'चारित्वादावतिप्रसङ्गभञ्जकस्य' इति पाठान्तरम् । (६) 'द्यतिप्रसङ्गभञ्जकस्य' इति पाठान्तरम् । (७) 'बीजस्यापि' इति पाठान्तरम् । (८) 'उपाधित्वप्रसङ्ग' इति इति पाठान्तरम् ।

(क) 'तदप्रयोजकत्वा'दित्यत्र 'सः अप्रयोजको यस्य तस्य भावः' इति व्युत्पत्त्या तदप्रयोज्यत्वादित्यर्थः । सोसाइटीमुद्रितमथुरानाथटीकाग्रन्थे 'तदप्रयोज्यत्वादित्येव मूलप्रतीकपरिग्रहो दृश्यते । तत्र पादटीकाकारा अपि 'तदप्रयोज्यत्वादित्यत्र तद(प्र)योजकत्वादिति कस्यचिन्मूलपुस्तकस्य पाठः । परन्तु तादृशपाठस्यापि रहस्यकृद्व्याख्यात एवार्थ' इति प्राहुः ।

## दीधितिः

साधनाव्यापकधर्मस्योपाधित्वे साध्यान्वयव्यतिरेकोन्नायकान्वयव्यतिरेक-शालित्वरूपं साध्यप्रयोजकत्वं नियामकम्, अन्यथातिप्रसङ्गादित्याशङ्कते 'अथे'ति। 'अभवतः' असतः। 'भवतः' सतः। 'व्यर्थत्वादि'ति,—न चैवं पक्षेतरे(१) अतिप्रसङ्गः, तथापि पक्षेतर-साध्यवत्त्वादावतिप्रसङ्गात्।

## दीधितिप्रकाशः

मूलोक्तसाध्यप्रयोजकत्वस्य सद्धेतावपि सत्त्वेनातिव्याप्तेः पूरयति— 'साधनाव्यापकधर्मे'ति। जनकजनकत्वादिरूपं प्रयोजकत्वं न विवक्षितमित्याह— 'साध्यान्वये'त्यादि। 'उन्नायकत्वम्' व्याप्यत्वम्। साध्यान्वयोन्नायकान्वयप्रतियोगित्वेन साध्यव्याप्यत्वं साध्यव्यतिरेकोन्नायक(२)व्यतिरेकप्रतियोगित्वेन साध्यव्यापकत्वं लभ्यते। आद्यदलेन पक्षेतरवारणमिति भावः।

'अन्यथा' उक्तरूपप्रयोजकत्वस्य अनियामकत्वे। 'अतिप्रसङ्गात्' विषमव्यापके पक्षेतरादौ विषमव्याप्ततदिन्धनादौ वा अतिप्रसङ्गात्। भूधातोरुत्पत्त्यर्थकत्वे नित्यसाध्यके विषमव्यापकादावतिप्रसङ्गा(३)दित्यतो व्याचष्टे 'अभवतः असित' इति।

मूले 'विवक्षितम्' विवक्षितुमर्हम्। 'प्रयोजकम्' उपाधिपदवाच्यत्वे। दीधितौ 'न चैव'मिति,—'एवम्' दूषणानौपयिकस्य साध्यव्याप्यत्वस्य उपेक्षणे। 'तथापि'(४) साध्यव्याप्यत्वस्य निवेशयितुरपि। 'साध्यवत्त्वादा'वित्यादिना केवलान्वयिसाध्यक-पक्षेतरादिसंग्रहः।

## तत्त्वचिन्तामणिः

अथोपाधिः(५) स उच्यते, यद्धर्मोऽन्यत्र प्रतिबिम्बते, यथा जपाकुसुमं स्फटिकलौहित्ये उपाधिः। तथा च उपाधिवृत्तिव्याप्यत्वं हेतुत्वाभिमते चकास्ति, तेना(६)सावुपाधिः।

(१) 'पक्षेतरत्वे' इति इति पाठान्तरम्। (२) 'व्यतिरेकानुविधायि' इति पाठान्तरम्। (३) 'विषयव्याप्तावतिप्रसङ्गा'दिति पाठान्तरम्। (४) 'तथापि साध्यव्याप्यत्वस्य निवेशनेऽपि' इति पाठान्तरम्। अस्मिन् कल्पे दीधितावपि 'तवापि' इत्यत्र 'तथापि' इति पाठान्तरं ज्ञेयम्। (५) 'ननु उपाधिः' इति पाठान्तरम्। (६) 'तेनायमुपाधिः' इति पाठान्तरम्।

न च, व्याप्यत्वमात्रेण दूषकत्वमिति(१) साध्यव्यापकतापीष्यते। तथा च समव्याप्त एवोपाधिरिति चेत्, तत् किं विषमव्याप्तस्य दूषकताबीजाभावान्नोपाधि-शब्दवाच्यत्वम्? तथात्वेऽप्युपाधिपदप्रवृत्तिनिमित्ताभावाद्वा? नाद्यः; तस्यापि व्यभिचाराद्युन्नायकत्वात्। नापरः; नहि लोके समव्याप्त एवान्यत्र स्वधर्मप्रति-बिम्बजनके एव उपाधिपदप्रयोगः। लाभाद्युपाधिना कृतमित्यादौ लाभादावप्यु-पाधि(२)पदप्रयोगात्।

किञ्च न शास्त्रे लौकिकव्यवहारार्थमुपाधिव्युत्पादनम्, किन्तु अनुमान-दूषणार्थम्। तच्च साध्यव्यापकत्वे सति साधनाव्यापकत्वमात्रमिति शास्त्रे तत्रैवोपाधिपदप्रयोगः।

## दीधितिः

विषमव्याप्तस्य अनुपाधित्वे योगाभावं नियामकमाशङ्कते 'अथे'ति। उप समीपवर्त्तिनि आदधाति स्वीयं धर्ममित्युपाधिः। यद्धर्मबोधकपद(३) समभि-व्याहारेण चोपाधिपदं प्रयुज्यते, तद्धर्मसङ्क्रामकत्वं तद् बोधयति; यथा स्फटिक-लौहित्ये जपाकुसुममुपाधिरित्यत्र लौहित्यसङ्क्रामकत्वम्; प्रयुज्यते च शास्त्रे व्याप्यत्वबोधकपद(४)समभिव्याहारेण तत्, यथा अत्र साधने असावुपाधिरिति; अतो व्याप्तिसङ्क्रामकत्वलाभः।

## दीधितिप्रकाशः

'अनुपाधित्वे' उपाधिपदाप्रतिपाद्यत्वे। ननु स्वनिष्ठधर्मान्तरसङ्क्रामक-तयापि योगोपपत्तौ स्वनिष्ठव्याप्तिसङ्क्रामकत्वस्यालाभात् कथं तद्बलात् साध्य-व्याप्यत्वस्य लाभ इत्यत आह—'यद्धर्मे'ति। यद्धर्मविषयकबोधजनकसप्तम्यन्तपद-समभिव्याहारेणेत्यर्थः। यद्धर्मस्य विषयत्वं विशेष्यतया विशेषणतया वा। 'तत्' उपाधिपदम्। 'यथा स्फटिकलौहित्य' इति,—अत्र स्फटिकविशेष्यकप्रतीतिप्रकारत्व-रूपषष्ठ्यर्थविशिष्टे स्फटिकपदस्य लक्षणा, सप्तम्याश्च उपाधिपदार्थतावच्छेदकीभूत-स्ववृत्तिधर्मान्वयभेदः(५), उपाधिपदस्य च स्ववृत्तिधर्मप्रकारकज्ञानजनकं(६)

(१) 'दूषकत्वमतः' इति पाठान्तरम्। (२) 'लाभादावुपाधि' इति पाठान्तरम्। (३) 'शब्द' इति पाठान्तरम्। (४) 'शब्द' इति पाठान्तरम्। (५) धर्मान्वय-भेदोऽर्थ' इति पाठान्तरम्। (६) 'जनकत्वम्' इति पाठान्तरम्।

भेदश्चार्थः। भेदे च प्रतियोगितया जपाकुसुमादेरनुयोगितया च स्फटिकादेरन्वयः। इत्थञ्च स्वभिन्नस्फटिकविशेष्यक-प्रतीतिप्रकारीभूतलौहित्याभिन्न-स्ववृत्तिधर्मप्रकारक-ज्ञानजनकं जपाकुसुममित्यन्वयबोधः।

वस्तुतस्तु लोहिते स्फटिके जपाकुसुममुपाधिरित्यादावुपाधिपदस्य धर्म-प्रकारकप्रतीतिजनक एवार्थः। जपाकुसुमादिपदोत्तरस्य(१) सुपो वृत्तित्वे भेदे च लक्षणा। वृत्तित्वस्य उपाधिपदार्थैकदेशे धर्मे भेदस्य च स्फटिकादावन्वयो व्युत्पत्तिवैचित्र्यात्, अतो न स्वत्वाननुगमादनन्तशक्तिकल्पनम्।

स्फटिकपदोत्तरसप्तम्या विशेष्यकत्वम् उपाधिपदार्थैकदेशप्रतीत्यन्वितमर्थः। धर्मश्चात्र तात्पर्य्यमर्य्यादया लौहित्यमेव धर्मत्वेन भासते। तथा च स्वभिन्नस्फटिक-विशेष्यक-स्ववृत्तिधर्मप्रकारकप्रतीतिजनकं जपाकुसुममित्यन्वयबोधः। जपाकुसुम-स्फटिकयोर्विप्रकृष्टत्वे तादृशप्रतीतिजनकत्वासम्भवादर्थत एव तत्समीपवर्त्तित्वस्य लाभः।

अस्तु वा तत्रापि सुपो लक्षणा(क)। यदि च विभक्तौ(२) लक्षणायां व्युत्-पत्तिविरोधः, तदा स्फटिकपदस्यैव जपाकुसुमादिभिन्नतत्समीपवर्त्तिस्फटिके लक्षणा, धर्मत्वेनैव स्ववृत्तिलौहित्यादेर्भानम्। नामार्थयोर्भेदान्वयबोधस्य विभक्त्यर्थोपस्थितिं विनापि(३) प्रकृते स्वीकारे तु भेदः सामीप्यञ्च उपाधिपदस्यैवार्थः। तत्र जपाकुसु-मादेर्नामार्थस्य विशेषणतया स्फटिकादेर्विशेष्यतया अन्वयः। एवमुपाधिपदार्थैकदेशे धर्मेऽपि जपाकुसुमादेरधिकरणत्वेनान्वयः। स्फटिकलौहित्ये जपाकुसुममुपाधिरित्यत्र उपाधिपदस्य भेदः सामीप्यं वृत्तित्वं प्रतीतिजनकश्चार्थः। तत्र भेदादेरन्वयः पूर्ववत्। वृत्तित्वे च जपाकुसुमस्य निरूपकतया लौहित्यस्य चाधिकरणतया अन्वयः। स्फटिकपदस्य स्फटिकविशेष्यकत्वं सप्तम्याश्च प्रकारकत्वमर्थः।

---

(१) 'पदोत्तरसुपो' इति पाठान्तरम्। (२) 'सुब्विभक्तौ' इति पाठान्तरम्। (३) पुस्तकविशेषे 'अपि' शब्दो नास्ति।

(क) एतेनानुभवसिद्धस्य तदन्तर्भावेणान्वयबोधस्य नानुपपत्तिरपदार्थस्य शाब्दबोधे अभानादिति भावः।

इत्थञ्च स्वभिन्नस्वसमीपवर्त्तिस्फटिकविशेष्यकस्ववृत्तिलौहित्यप्रकारकप्रतीतिजनकं जपाकुसुममित्यन्वयबोधः ।

अयमत्र साधने उपाधिरित्यत्र प्रथमसप्तम्या विशेष्यकत्वम्, द्वितीयसप्तम्यास्तादात्म्येन प्रकारकत्वम्, साधनपदस्य वा धर्मपरतया व्याप्यत्वमात्रपरत्वम्, उपाधिपदस्य च सामानाधिकरण्यरूपं सामीप्यं, तादात्म्यं वृत्तित्वं(ख) वा, प्रतीतिजनकश्चार्थः । पदार्थानामन्वयः प्रागिव । एवञ्च स्वसमानाधिकरणैतद्विशेष्यकस्वतादात्म्यवद्व्याप्यप्रकारकप्रतीतिजनकोऽयमित्याकारकः, स्वसमानाधिकरणै तद्विशेष्यकस्ववृत्तिव्याप्यत्वप्रकारक-प्रतीतिजनकोऽयमित्याकारको वाऽन्वयबोध इति ।

## तत्त्वचिन्तामणिः

अन्ये तु यदभावो व्यभिचारविरोधी स(१) उपाधिः । न च विषमव्याप्तस्याभावो व्यभिचारं विरुणद्धि(२), तस्याभावेऽपि व्यभिचारात् । अस्ति हि अनित्यत्वव्यापकम् प्रमेयत्वम्, तद्व्याप्यश्च गुणत्वम्, न चानित्यत्वगुणत्वयोर्व्याप्तिरस्ति । समव्याप्तिकस्य च व्यतिरेकस्तथा । न हि साध्यव्यापकव्याप्यीभूतस्य व्याप्यं यत् तत् साध्यं व्यभिचरति । व्यभिचारे वान्ततः साध्यमेवोपाधिः, अभेदेऽपि व्याप्यव्यापकभावात्(३) साधनाव्यापकत्वादिति । अन्यथा कृतकत्वेनानित्यत्वे साध्ये कृतकत्वमुपाधिः स्यात्, अभेदेन व्याप्यव्यापकत्वे तु साधनव्यापकत्वादनुपाधित्वमिति(४)स्वीचक्रुः ।

तन्न ; तवापि हि अव्यभिचारे साध्यव्याप्यव्याप्यत्वं तन्त्रम्, आवश्यकत्वाल्लाघवाच्च, न तु(५) साध्यव्यापकव्याप्यत्वमपि, भवतैव व्यभिचारस्य दर्शितत्वात् ।

न च साध्यव्याप्यव्याप्यत्वमेव अनौपाधिकत्वम्, साध्यव्याप्यमित्यत्रापि हि अनौपाधिकत्वं तदेव वाच्यम्, तथा च अनवस्थेति ।

(१) 'स धर्म' इति पाठान्तरम् । (२) 'व्यभिचारविरोधी' इति पाठान्तरम् । (३) 'व्यापकत्वात्' इति पाठान्तरम् । (४) 'अन्यथा' इत्यत आरभ्य 'व्यापकत्वादनुपाधित्वमिति' एतत्पर्य्यन्तसन्दर्भः सर्वत्र न दृश्यते । (५) 'तु' शब्दो न सर्वत्र ।

(ख) साधनपदस्य व्याप्यार्थकत्वे तादात्म्यमिति, व्याप्यत्वमात्रार्थकत्वे वृत्तित्वमिति । साधनपदस्यार्थभेदमादाय विकल्पो बोध्यः ।

## दीधितिः

'यदभाव' इति ;—अस्ति तावदिह हेतावुपाधिर्नेह हेतावुपाधिरिति प्रतीतिर्व्यवहारश्च, तावालम्ब्य चेदं लक्षणवाक्यम्। तत्र यदि साधने उपाधिव्यभिचाराव्यभिचारौ तद्व्याप्यत्वव्याप्यत्वे वा, यदि वा तेन सम्बन्धेन तद्वृत्त्यवृत्ती एव तदालम्बनम्(१) उभयथापि नेह क्षतिः ; 'यदभाव'शब्देनापि तथैव वक्तुं शक्यत्वात्।

तदभावस्य च व्यभिचारविरोधित्वं तत्सत्त्वेऽवश्यं व्यभिचारविरहः, तद्विरहिणि धर्मे चावश्यं व्यभिचारसत्त्वम्, तत्सत्त्वे अवश्यं व्यभिचारविरहः व्यभिचारविरहिणि धर्मे चावश्यं तत्सत्त्वमिति वा। ईदृशश्च विरोधो न विषमव्यापकाभावस्य, तत्सत्त्वेऽपि व्यापक एव व्यभिचारसत्त्वात्। नापि विषमव्याप्याभावस्य, साध्यएव तद्विरहेऽपि व्यभिचाराभावात्, तादृशधर्मस्य च उक्तसम्बन्धेन उक्ततत्सम्बन्धस्यैव वा(२) यत्र वृत्तिः तत्रायमुपाधिः, स एव च सोपाधिः।

## दीधितिप्रकाशः

सोपाधिनियतस्य उपाधेरभावप्रतियोगितावच्छेदकीभूतस्य प्रसिद्धसम्बन्धस्याभावात संयोगादिना सम्बन्धेन उपाध्यभावस्य व्यभिचारविरोधित्वाभावात 'इहोपाधि'रिति व्यवहारविषयस्याभावः प्रकृते यदभावशब्दार्थो वाच्यः। तत्र अन्वयव्यतिरेकाभ्यां तद्विषयं द्रढयितुमाह(३)– 'अस्ति तावदि'त्यादि।

'इहोपाधि'रित्यत्र उपाधि(४)सामानाधिकरण्यादेर्विषयत्वं निराकर्तुं व्यतिरेकमाह(५)—'नेहोपाधि'रिति।, तथा सति सद्धेतावपि तादृशोपाधिसामानाधिकरण्यसत्त्वात्(६) 'नेहोपाधि'रिति प्रतीतिर्न स्यादिति भावः।

ननु(७) प्रतीतिविषयतामात्रेण न शब्दार्थता, शब्दस्य व्युत्पत्तिबलादेव बोधकत्वादतो व्युत्पत्तिं द्रढयितुं व्यवहारमप्याह—'व्यवहारश्चे'ति। 'तौ'

---

(१) 'एतदालम्बनम्' इति पाठान्तरम्। (२) 'सम्बन्धस्य वा' इति पाठान्तरम्। (३) 'दर्शयितुमाह' इति पाठान्तरम्। (४) 'उपाधेः' इति पाठान्तरम्। (५) 'निराकर्त्तुमाह' इति पाठान्तरम्। (६) 'तादृशसामानाधिकरण्यस्य सत्त्वात्' इति पाठान्तरम्। (७) पुस्तकान्तरे 'ननु' इति नास्ति।

प्रतीतिव्यवहारौ। 'आलम्ब्ये'ति,—उपाधिव्यभिचाराभावादेर्यद्भाव(१)शब्दार्थतायां कल्पकस्य व्युत्पत्तिबलस्य व्यवहाराधीनत्वाद् व्यवहारे च व्यवहर्त्तव्यज्ञानविधया व्यभिचारादेः सम्बन्धत्वकल्पकतया च प्रतीतेरप्युपयुक्तत्वादिति भावः।

उक्तप्रतीत्योर्यथाक्रमं विषयमाह,—'यदी'ति(२)। प्रमेयत्वव्यभिचारा(३)-प्रसिद्धया 'अस्ती'त्याद्यग्रिमग्रन्थस्य यथाश्रुतार्थासङ्गतिरित्यत आह—तद्व्याप्यत्वेति। उभयत्रोपाधिपदस्योपाधेर्व्यभिचारे अव्याप्यत्वे वा लाक्षणिकत्वात् सम्मुखतो व्यवहारोपपादनं न घटत(४) इत्यतो लक्षणां विना प्रकारान्तरमाह—'यदि वे'ति। 'तेन' व्यभिचारेण अव्याप्यत्वेन वा। 'तद्वृत्त्यवृत्ती' साधनवृत्त्यवृत्ती। सप्तम्यर्थस्याभावान्वयमभिप्रेत्य अवृत्तित्वमुक्तम्। इतरथा तु तेन सम्बन्धेन उपाध्यभावः साधननिष्ठो 'नेहोपाधि'रित्यस्यार्थो बोध्यः(५)।

'शक्यत्वा'दिति,—'नेहोपाधि'रित्यस्य उपाधि(६)व्यभिचाराद्यभावार्थकत्वे यत्पदे यद्व्यभिचारादौ लक्षणा। तेन सम्बन्धेन उपाध्यभावार्थकत्वे च अत्रापि तेन सम्बन्धेन यदभावपरत्वमिति भावः।

यथाश्रुतव्यभिचारविरोधित्वे साध्यव्याप्यत्वस्यैव लाभात् साध्यसमव्याप्तत्व-मुपाधेर्न लभ्यत इति तल्लाभाय व्यभिचारविरोधित्वं निर्वक्ति—'तदभावस्ये'त्यादिना। 'तदभावस्य' यद्व्यभिचाराद्यभावस्य। 'तत्सत्त्व' इत्यादौ तत्पदं तादृशयदभाव-परम्। विषमव्यापकाभावस्य साध्यादौ व्यभिचारविरहेण सामानाधिकरण्यसत्त्वा-'दवश्य'मिति। 'तद्विरहिणि' तदभावविरहिणि। विषमव्याप्याभावविरहिणि प्रमेयत्वादौ व्यभिचारसत्त्वाद् 'अवश्य'मिति। अव्याप्यत्वस्य घटकत्वे साध्यसम-व्याप्ताव्याप्यत्वात्मकयदभावविरहिणि गगनादौ व्यभिचारासत्त्वादसम्भव इत्यतो'धर्म' इति। तद्विरहस्य व्यभिचारव्याप्यत्वे तत्र व्यभिचारविरोधित्वं स्वरूपतो न घटत इत्यतस्तदभावनिष्ठमेव दलान्तरं निर्वक्तुं पूर्वदलमनुवदति 'तत्सत्त्व' इत्यादिना।

(१) ग्रन्थविशेषे 'यदभावादेर्यदभावे'ति क्वचित्। (२) उक्तेत्यारभ्य 'यदीति' इत्यन्तग्रन्थो ग्रन्थविशेषे नास्ति। (३) 'व्यभिचाराभावाप्रसिद्धया' इति पाठान्तरम्। (४) 'न स्वतो व्यवहारोपपादनं घटत' इति पाठान्तरम्। (५) 'रिति सप्तम्यर्थो बोध्य' इति पाठान्तरम्। (६) क्वचित् 'उपाधि' शब्दविनाकृतः पाठो दृश्यते।

यद्वा व्यभिचाराभावान्वयव्यतिरेकानुविधाय्यन्वयव्यतिरेकशालित्वरूपं व्यभिचारविरोधित्वमुक्त्वा व्यभिचाराभावसमनियतत्वरूपं तदाह—'तत्-सत्त्व'इत्यादिना। अत्राप्यव्याप्यत्वस्य घटकत्वे व्यभिचारविरहिणि गगनादावुपाधिव्याप्यत्वरूपतद्भावाभावादसम्भव(१) इत्यतो 'धर्मे'ति।

ईदृशव्यभिचारविरोधित्वे आद्यदलाद् विषमव्यापकस्य द्वितीयदलाच्च विषमव्याप्यस्य वारणीयत्वं दर्शयति 'ईदृशश्चे'त्यादिना। 'व्यापक एवे'ति,—धूमस्य विषमव्यापकमार्द्रेन्धनं तत्र स्वव्यभिचाराद्यभावसत्त्वेऽपि धूमव्यभिचारसत्त्वादित्यर्थः।

विषमव्याप्यं धूमस्य तन्महानसत्वम्। 'साध्ये' धूमादौ। 'तद्विरहेऽपि' तन्महानसत्वव्यभिचाराद्यभावरूपयद्भावविरहेऽपि'। धूमव्यभिचारित्वाभावादिति भावः(२)। एतावता समव्याप्तत्वं लब्धम्, न तु साधनाव्यापकत्वमतस्तल्लाभाय(३) 'तादृशधर्मस्ये'ति।

'उक्तसम्बन्धेने'ति,—'उक्तसम्बन्धेन' स्वव्यभिचारित्वेन स्वाव्याप्यत्वेन वा सम्बन्धेन। उक्तसम्बन्धस्य वृत्तिनियामकत्वे मानाभावादाह—'उक्तसम्बन्धस्यैवे'ति। उक्तस्य उपाधित्वेऽपि पारिभाषिकानौपाधिकत्वे प्रतियोगितया तत्प्रवेशालाभाद् यत्र साध्यसमव्याप्तोपाधेरसम्भवः, तत्र अनौपाधिकत्वस्याप्रसक्तौ व्यभिचारे च 'अन्तत' इत्यादिग्रन्थस्यानुत्थानादाह—'स एव चे'ति। तथा च एवकारेण लब्धस्य एतद्भिन्नस्य निरुपाधित्वे तादृशव्यभिचारिण्यपि निरुपाधित्वप्रसक्तौ तद्ग्रन्थावतार इति भावः।

## दीधितिः

अत एव तदभावलक्षणमनौपाधिकत्वं व्याप्तिरिति गीयते। विरोधघटकदलद्वये च एकैकस्य व्याप्तिशरीरघटकता दूषकता वा न स्यादित्युभयोपादानमिति सर्वं सुस्थम्।

यदि च समव्याप्ताकाशोभयमात्रवृत्तिधर्मेणाकाशस्य उपाधित्वं वारणीयम्, तदा यत्पदं वृत्तिमत्परं बोध्यम्। अत्र च व्यभिचारस्य घटकत्वेऽग्रे प्रमेयत्वपदं व्यतिरेकिधर्मोपलक्षकम्(४)।

(१) 'तदभावादसम्भव' इति पाठान्तरम्। (२) 'चारित्वाभावादित्यर्थः' इति पाठान्तरम्। (३) 'भायाह' इति पाठान्तरम्। (४) 'लक्षणम्' इति पाठान्तरम्।

## दीधितिप्रकाशः

'अत एवे'ति,—यत एव उक्तरीत्या उपाधिर्निरुक्तः अत एवेत्यर्थः। साध्य-व्याप्यत्वाघटितप्रकारान्तरेण तस्य निरुक्तौ तु अनौपाधिकत्वं पारिभाषिकं स्यादिति भावः। यत्साध्यके व्यभिचारः प्रसिद्धः, तत्साध्यक एव सद्धेतावनौपाधिकत्वम्। केवलान्वयिसाध्यके व्यभिचाराप्रसिद्ध्या तद्घटितनिरुक्तोपाधेरप्रसिद्ध्या न तत्र अनौपाधिकत्वमिति हृदयम्। केवलान्वय्यनुमित्यनभ्युपगन्तॄणां मीमांसकानां मताश्रयणेन(१) वा अयं ग्रन्थ इति।

ननु विषमव्यापकस्यापि दूषकताबीजसत्त्वात् तद्वारकविशेषणवल्लक्षण-करण(२)मनुचितमित्याक्षेपे जागरूके विना प्रयोजनमुक्तिवैचित्र्यमात्रेण समव्याप्तत्व-घटितलक्षणकरणमनुचित(३)मित्यतः प्रयोजनमाह—'विरोधे'ति। 'एकैकस्य' व्यापकताप्रापकदलमात्रस्य व्याप्यताप्रापकदलमात्रस्य। 'व्याप्तिशरीरघटकता न स्यात्' व्याप्यता न स्यात्। 'दूषकता' दोषोन्नयनोपयोगिता न स्यादित्युभयस्य व्याप्यत्वव्यापकत्वप्रापकदलद्वयस्य 'उपादानम्' लक्षणप्रवेशः।

'समव्याप्ताकाशे'ति,—आकाशपदम् उपाधिताघटकसम्बन्धेन अवृत्तिपरम्। अतिरिक्तवृत्तित्वे निरुक्तलक्षणासम्भवा'न्मात्रे'ति। धूमवान् वह्नेरित्यादावार्द्रेन्धनज-वह्न्याकाशान्यतरत्वादिनेत्यर्थः। तेन रूपेण आकाशादेरुपाधित्वे क्षतिविरहः। आकाशत्वादिना तु लक्षणगमनमसम्भावितमित्यरुचेराह—'यदि चे'ति। अनित्यत्व-विषमव्यापकस्य प्रमेयत्वस्य व्यभिचाराप्रसिद्ध्या तदभावाप्रसिद्धेरुत्तरग्रन्थासङ्गति-माशङ्क्याह—'अत्र चे'ति। 'व्यतिरेकी'ति—गगनान्यत्वादिरेव तादृश(४)धर्म इति।

## दीधितिः

अथैतादृशोपाध्यभावस्य व्याप्तिलक्षणत्वे यत्र व्यभिचारिणि नैतत्सम्भव-स्तत्राव्याप्तिः। तस्यात्यन्तमसत्त्वेनाभावानिरूपणे तु तत्रत्यसद्धेतावव्याप्तिरत आह—'व्यभिचारे चे'ति। यस्य यद्व्यभिचारस्य यद्व्याप्यत्वस्य वा अभावः

---

(१) 'श्रयणेन वा ग्रन्थ इति बोध्यम्' इति पाठान्तरम्। (२) पुस्तकभेदे 'करण' इति नास्ति। (३) 'चितमतः' इति पाठान्तरम्। (४) 'तादृशो' इति पाठान्तरम्।

साध्यव्यापके साध्य(१)व्यभिचारविरोधी, स साधनाव्यापक उपाधिरित्यपि वदन्ति ।

यद्व्यभिचाराभावः(२) साधने साध्यव्यभिचाराभावापादकः, स साध्यव्यापक उपाधिरित्यपि कश्चित्(३) ।

## दीधितिप्रकाशः

'व्याप्तिलक्षणत्व' इति,—केवलान्वयिनि सन्देहाभावादनुमानाभावेन व्याप्तेरभाव इति भावः । 'यत्रे'ति,—अयमेतन्मात्रवृत्तियावद्धर्मवान् प्रमेयत्वादित्यादौ साध्या-(क)तिरिक्तस्य उपाधेरभावादित्यर्थः । 'अतिव्याप्ति'रिति,—स्वव्यभिचारविरोधि-साधनाव्यापकव्यभिचारित्वाभावकं यद्यत् तत्त्वाभाववत्प्रकृतसाध्यकत्वमनौपाधि-कत्वमित्यभिप्रायेण । यदि च निरुक्तोपाध्यभाव एवानौपाधिकत्वम्, तदा अतिव्याप्तेरभावादव्याप्तिमाह 'तस्ये'त्यादिना । 'तस्य' निरुक्तसाध्यव्यभिचार-विरोध्यभावप्रतियोगिनः । 'अभावानिरूपण' इति—सद्भ्यामभावो निरूप्यत इति न्यायादिति भावः । 'तत्रत्यसद्धेतौ' अयमेतद्वृत्तियावद्धर्मवान् एतत्त्वादित्यादौ ।

मतान्तरमाह—'यस्ये'त्यादिना । 'यस्ये'त्यस्य विवरणं यद्व्यभिचार-स्येत्यादि । अग्रिमग्रन्थानुरोधादाह—'यद्व्याप्यत्वस्य वे'ति । साध्यव्यापकत्व-लाभाय पूरयति—'साध्यव्यापक' इति । यद्व्यभिचारित्वाभावस्य साध्यव्यापक-निष्ठतया यत्पदार्थस्य साध्यव्यापकत्वं लब्धम्, साध्यव्यापकव्यापकस्य सुतरां साध्यव्यापकत्वादिति भावः । साध्यव्यापके साध्य(४)व्यभिचारविरोधित्वञ्च यत्र यत्र साध्यव्यापके यद्व्यभिचाराभावस्तत्रावश्यं साध्यव्यभिचाराभाव इत्येवंरूपम्(५) । विषमव्यापकाभावस्य नैतादृशविरोधित्वमिति मूल(ख) एव सुव्यक्तम् ।

(१) 'साध्य'पदं सर्वत्र न दृश्यते । (२) 'चारित्वाभाव' इति पाठान्तरम् । (३) 'केचित्' इति पाठान्तरम् । (४) एकस्मिन् 'साध्ये'ति न दृश्यते । (५) 'रूपेण' इति पाठान्तरम् ।

(क) उपाधित्वेनाभिमतानां सर्वेषामेव साध्यान्तर्गततया अभेदे व्याप्यव्यापकभावा-सम्भवादिति हृदयम् ।

(ख) 'मूल एवे'ति 'न च विषमव्याप्तस्ये'त्यादि-मूलग्रन्थ एवेत्यर्थः ।

न तु साध्यव्यापकवृत्तिर्यदभावः साध्यव्यभिचारविरोधीत्यर्थो(१)ग्राह्यः, तथा सति साध्यवृत्तिर्यदभाव इत्यादेरेव सम्यक्त्वे व्यापक(ग)पदवैयर्थ्यात्। एवमपि साधनाव्यापकत्वालाभात् तदर्थं पूरयति—'साधनाव्यापक' इति।

विरोधस्वरूपनिर्वचने 'नेहोपाधि'रिति प्रतीतिनियामकसम्बन्धालम्बने(२) समव्याप्तत्वस्य साधनाव्यापकत्वस्य च लाभे पदान्तरपूरणे गौरवमित्यस्वरसो 'वदन्ती'(३)त्यनेन सूचितः।

'व्यभिचारविरोधी'त्यस्य व्यभिचाराभावापादक इत्यर्थानुसरणेन(४) मतान्तरमाह—'यदि'त्यादिना। 'साधने' प्रकृतसाधने। व्यभिचाराभावापादकत्वञ्च तद्योग्यता। सा च आपादकस्य पक्षे असिद्धस्य आहार्यज्ञानरूपपक्षधर्मत्वम्, आपाद्यापादकयोर्व्याप्तिः, आपाद्यव्यतिरेकस्य च पक्षे प्रमितत्वमिष्टापत्तिशङ्कावारकमित्येवंरूपा। तेन यथाक्रमं साधनाव्यापकत्वस्य साध्यव्याप्यत्वस्य साधने साध्यव्यभिचारित्वस्य च लाभः। साध्यव्यापकत्वस्य लाभाय पूरयति—'साध्यव्यापक' इति।

अत्रापि साध्यव्यापकपदपूरणेन गौरवम्। साधनस्य साध्यव्यभिचारित्वे लब्धे साध्यविषमव्याप्यस्यापि तत्र यत्किञ्चिद्धर्मावच्छिन्नसाध्यव्यापकरीत्या व्यभिचारोन्नायकत्वेन दूषकत्वसम्भवात् संग्राह्यत्वेन तत्पदपूरणे प्रयोजनाभावश्चेत्यस्वरसः कश्चिदित्यनेन सूचितः।

## तत्त्वचिन्तामणिः

अनौपाधिकत्वे च व्याप्तिलक्षणे यावदिति पदं(५) साध्यव्यापके विशेषणं दत्तमेव। किञ्च यस्मिन् सत्यनुमितिर्न भवति, तदेव तत्र दूषणम्। न तु यद्व्यतिरेके भवत्येवेत्येतद्गर्भम्; विरुद्धत्यादेरप्यदोषत्वापत्तेः।

---

(१) 'साध्यव्यापकवृत्तिर्यदभाव इत्यर्थो ग्राह्य' इति पाठान्तरम्। (२) 'सम्बन्धेन मूलेनैव' इति पाठान्तरम्। (३) 'कश्चिदित्यनेन' इति पाठान्तरम्। अनेन 'वदन्ती'त्यत्र 'कश्चिदि'ति पाठान्तरं सूच्यते। (४) 'सारेण' इति पाठान्तरम्। (५) 'पद'मिति सर्वत्र न दृश्यते।

(ग) यदभावे साध्यवृत्तित्वस्य साध्यव्यभिचारविरोधित्वस्य च निवेशे कृते विषमव्याप्याभावस्य साध्यवृत्तित्वविरहेण विषमव्यापकाभावस्य च साध्यव्यभिचारविरोधित्वाभावेन तयो र्व्यवच्छेदे वारणसम्भवेन व्यापकपदवैयर्थ्यमिति भावः।

नापि पक्षधर्मावच्छिन्नसाध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधित्वम्, साधनावच्छिन्नसाध्यव्यापकोपाध्यव्यापनात्; शब्दोऽभिधेयः प्रमेयत्वादित्यत्र अश्रावणत्वस्य उपाधित्वापत्तेश्च(१); शब्दधर्मगुणत्वावच्छिन्नाभिधेयत्वं यत्र रूपादौ तत्राश्रावणत्वं व्यापकम्, पक्षे प्रमेयत्वस्य साधनस्य अव्यापकं हि तत्। आर्द्रेन्धनवत्त्वादावुपाधौ पक्षनियततादृशधर्माभावाच्च।

## दीधितिः

'न तु यद्व्यतिरेक' इति,—यद्व्यतिरेके(२) अनुमितिप्रयोजकं रूपं व्याप्त्याद्यन्यतमं भवत्येव, यथा असिद्धिव्यतिरेके सिद्धिरित्यर्थः। 'विरुद्धत्वादे' रिति, विपक्षमात्रगामित्व-सपक्षविपक्षगामित्वलक्षणविरोधव्यभिचारयोरेकैकविरहेऽपि व्याप्तेरनियमादित्यर्थः।

## दीधितिप्रकाशः

यस्मिन् सति साक्षात् परम्परया वा अनुमितिप्रतिबन्धो भवतीत्यर्थकतया अत्र अनुमितिपदस्य यथाश्रुतार्थापरि(३)त्यागे(४)ऽपि क्षतिविरहः, यदभावे व्यभिचारविरोधित्वोक्त्या व्यभिचाराभावरूपव्याप्तिसत्त्वा(५)वश्यकत्वलाभेऽप्यनुमितिभवनावश्यकत्वस्यालाभात् तत्र मूले दूषणाभिधानमनुक्तोपालम्भ(६)रूपमतस्तत्प्रतीक एवानुमितिपदमनुमितिप्रयोजकपरतया व्याचष्टे नत्वित्यादिना।

प्रयोजकञ्च जनकीभूतज्ञाने विषयतया अवच्छेदकम्(७)। तच्च व्याप्यत्वम् पक्षधर्मत्वम् अबाधितत्वादि च लक्षणया अनुमितिपदार्थः। उक्तिसम्भवार्थं दृष्टान्तमाह—'यथे'ति। 'असिद्धिव्यतिरेक' इति,—व्याप्यत्वाभावरूपाया व्याप्यत्वासिद्धेः अपक्षधर्मत्वरूपायाः स्वरूपासिद्धेर्वा व्यतिरेके अनुमितिप्रयोजकस्य व्याप्यत्वस्य पक्षधर्मत्वस्य वा यथा सिद्धिरित्यर्थः।

(१) 'उपाधित्वापाताच्च' इति पाठान्तरम्। (२) 'न तु यद्व्यतिरेक' इति क्वचित्। (३) 'श्रुतार्थात्यागेऽपि' इति पाठान्तरम्। (४) क्वचित् 'यथाश्रुतार्थापरित्यागेन' इति पाठः। (५) 'व्याप्तिमत्त्वे'ति पाठान्तरम्। (६) 'धानमप्राप्तोपालम्भनमत' इति पाठान्तरम्। (७) 'ज्ञानविषयतावच्छेदकम्' इति पाठान्तरम्।

'विरुद्धत्वादे'रिति मूलमादिपदोपगृहीतव्यभिचारमन्तर्भाव्य(१) व्याचष्टे 'विपक्षमात्रगामित्वे'त्यादिना। साध्यासमानाधिकरणत्व(२)रूपविरोधस्य व्यतिरेके साध्यसामानाधिकरण्यस्यैवानुमितिप्रयोजकस्य सत्त्वात्(३) तदुपेक्ष्यान्यं विरोध(४) पदार्थमाह—'विपक्षमात्रगामित्वे'(५)ति। तथा च तदभावस्य गगनादौ व्यभिचारिणि च सत्त्वात् तत्सत्त्वे अनुमितिप्रयोजकस्य साध्यसामानाधिकरण्यस्य अव्यभिचारस्य वा न सत्त्वनियम इति भावः।

विपक्षवृत्तित्वरूप(६)व्यभिचाराभावसत्त्वे अनुमितिप्रयोजकस्य अव्यभिचारस्य सत्त्वनियमात्(७)तत्र प्रकृतनियम(८)व्यभिचारो न घटत इत्यतः सपक्षवृत्तित्वपर्य्यन्तं व्यभिचारे निवेशितम्(९)। तथा च उक्तरूपस्य(१०) व्यभिचाराभावस्य विपक्षमात्रगामिनि विरुद्धेऽपि सत्त्वात् तत्सत्त्वे अव्यभिचारस्य न सत्त्वनियम इति भावः।

## दीधितिः

यत्र पक्षे हेतुमति च साध्यम्, हेतुश्च पक्षावृत्तिः, तत्र एकः पक्षावृत्तिर्हेतुसमानाधिकरणः, अपरश्च पक्षनिष्ठः साध्यवति हेत्वसमानाधिकरणः हेत्वसमानाधिकरण एव वोपाधिः, तत्र साधनपक्षधर्मावच्छिन्नसाध्यव्यापकयोरसङ्करो बोध्यः। यथा घटः प्रत्यक्षो नित्यद्रव्यत्वाद् विभुत्वाद्वेत्यादौ साधनावच्छिन्नसाध्यव्यापकमात्मत्वम्, पक्षधर्मावच्छिन्नसाध्यव्यापकमुद्भूतरूपवत्त्वम् प्रत्यक्षस्पर्शाश्रयत्वं वा मिथोऽसङ्कीर्णमुपाधिः। 'अश्रावणत्वे'ति,—घटो मेयो द्रव्यत्वादित्यादौ गन्धवत्त्वाद्यवच्छिन्नसाध्यव्यापकपृथिवीत्वादावतिव्याप्तिर्द्रष्टव्या। न वानेन रूपेण ज्ञातस्य दूषकत्वमित्याह—'आर्द्रेन्धने'ति।

(१) 'गृहीतमन्तर्भाव्य' इति पाठान्तरम्। (२) 'साध्यासमानाधिकरणत्वस्य विरोधस्य' इति पाठान्तरम्। (३) 'सत्त्वनियमात्' इति पाठान्तरम्। (४) 'तदुपेक्ष्यान्यविरोधिपदार्थमाह' इति पाठान्तरम्। (५) 'गामित्वरूपेति' इति क्वचित् पाठः। तन्मते दीधितावपि तथैव पाठो बोध्यः। (६) 'विपक्षगामित्वरूपे'ति क्वचित् पाठः। (७) 'सत्त्वनियमात् तत्र प्रकृतनियम' इति स्थाने केवलं 'सत्त्वनियम' इत्येव पाठः क्वचिद् दृश्यते। (८) क्वचित् 'नियमे' इति पाठान्तरम्। (९) 'सपक्षविपक्षवृत्तित्वपर्य्यन्तं व्यभिचारशरीरे निविष्टम्' इति पाठान्तरम्। (१०) 'रूपव्यभिचाराभावस्य' इति पाठान्तरम्।

'पक्षधर्मे'ति,—विरुद्धस्थलीयोपाध्यव्याप्तिरपि द्रष्टव्या। 'साधनावच्छिन्ने'ति-स्वावच्छिन्नेत्यर्थः। साधनवतीति विशेषणाद्वा न व्यभिचारः।

## दीधितिप्रकाशः

व्याप्यत्वादेरिव पक्षसाध्यभेदेन(१)उपाधेरपि भिन्नत्वात् तत्पक्षकतत्साध्यक-तत्साधनकयावदुपाधिसाधारणस्य एकस्य लक्षणस्य तत्पक्षकोपाधिद्वयस्य असङ्कीर्णत्व(२) एवाव्याप्तिर्घटत इत्यभिप्रेत्य एकपक्षसाध्यसाधनेष्वेवासङ्कीर्ण-मुदाहरणद्वयं प्रदर्शयितुमाह—'यत्रे'त्यादि[ना ?]। पक्षे साध्यासत्त्वे साधना-वच्छिन्नसाध्यव्यापकस्यापि पक्षसाधनवदन्यतरत्वरूपपक्षधर्मावच्छिन्नसाध्यव्यापकत्वेन सङ्कर एव स्यात्। हेतुमति साध्यासत्त्वे च साधनावच्छिन्नसाध्याप्रसिद्ध्या व्यापकत्वासम्भवः। हेतोः(३) पक्षवृत्तित्वे तदवच्छिन्नसाध्यव्यापकस्य पक्षधर्मा-वच्छिन्नसाध्यव्यापकतापि स्यादत-(४)स्त्रय(५)मुक्तम् (क)।

'एकः' साधनावच्छिन्नसाध्यव्यापकः। उपाधेः पक्षवृत्तित्वे पक्षसाधन-वदन्यतरत्वरूपपक्षधर्मावच्छिन्नसाध्यव्यापकतापि स्यादतः 'पक्षावृत्ति'रिति।

साधनावच्छिन्नसाध्यव्यापकत्वो(ख)पपादनायाह—'हेत्वि'ति। इदञ्च पक्षा-वृत्तेर्हेतुसमानाधिकरणोपाधेः(६) पक्षनिष्ठात् हेत्वसमानाधिकरणाच्च उपाधेर्भेदः सुदूरपराहत इत्यसाङ्कर्यस्फुटतरत्वार्थ(७)मुक्तम्, न तु नियमपरत्वेन(८)। तेन विभुत्वसमानाधिकरणस्य तादृशगगनत्वादेः साधनावच्छिन्नसाध्यव्यापकत्वाभावेऽपि न क्षतिः।

---

(१) 'पक्षसाधनादिभेदेन' इति पाठान्तरम्। (२) 'द्वयासङ्कीर्णस्य' इति पाठान्तरम्। (३) 'हेतौ' इति पाठान्तरम्। (४) 'स्यादतः पक्षावृत्तिरिति' इति पाठान्तरम्। तत्रैव 'एक' इत्यारभ्य 'पक्षावृत्तिरिति' पर्यन्तः सन्दर्भो न दृश्यते। (५) 'त्रितयमुक्तम्' इति पाठान्तरम्। (६) 'पक्षावृत्तिहेतुसमानाधिकरणस्योपाधे'रिति पाठान्तरम्। (७) 'स्फुटत्वार्थमुक्तम्' इति पाठान्तरम्। (८) 'परम्' इति पाठान्तरम्।

---

(क) त्रयमुक्तमिति पक्षवृत्तिसाध्यकत्व-हेतुमद्वृत्तिसाध्यकत्व-पक्षावृत्तिहेतुकत्वेत्येतत्त्रय-मित्यर्थः।

(ख) हेतुसामानाधिकरण्यव्यतिरेके साध्यव्यापकत्वस्यानुपपत्तेरिति भावः।

पक्षधर्मावच्छिन्नसाध्यव्यापकमाह—'अपर' इति। पक्षावृत्तेः पक्षनिष्ठतया भेदं दर्शयित्वा हेत्वसमानाधिकरणस्योपाधेः(१) हेत्वसमानाधिकरणत्वेन भेदं दर्शयितुमाह—'साध्यवतो'ति। हेतुसमानाधिकरणस्योपाधित्वे तस्य साध्यवति हेतुसमानाधिकरणत्वमर्थतो लब्धमतस्तस्मादिदं भेदक(२)मित्याशयः।

अलं प्रत्यक्षं नित्यद्रव्यत्वादित्यत्र पक्षावृत्तेर्हेतुसमानाधिकरणस्य पृथिवीत्वस्य गगनपृथिव्यन्यतरत्वावच्छिन्नसाध्यव्यापकतया उपाधित्वेऽपि साध्यवति हेतुसमानाधिकरणत्वाभावा(३)देतस्य न भेदकत्वमतः स्फुटं(४) भेदकमाह—'हेत्वसमानाधिकरण एवे'ति।

साधनपक्षधर्मयो(५)र्द्वन्द्वे साधनपदस्यैव(६) लघ्वक्षरत्वेन पूर्वनिपातसम्भवाभ्मूलोक्तक्रममुपेक्ष्य स्वोक्तक्रमेणैवोदाहरणं दर्शयितुं साधनावच्छिन्नसाध्य(७)व्यापकं प्राक् प्रदर्शितम्। द्व्यणुकादेरनभ्युपगमे नित्यद्रव्यत्वावच्छिन्नप्रत्यक्षत्वस्य त्रसरेणावपि सत्त्वान्न आत्मत्वं तद्व्यापकं स्यादतो 'विभुत्वा'दिति।

'पक्षधर्मे'ति,— बहिर्द्रव्यत्वादिरेव पक्षधर्मः। आद्यहेतौ साध्यवति हेत्वसमानाधिकरणं द्वितीयहेतौ च हेत्वसमानाधिकरणमेव उद्भूतरूपवत्त्वम्। प्रभाया अप्रत्यक्षत्वे वायोः स्पार्शनत्वे च बहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वव्यापकं(८) न उद्भूतरूपवत्त्व(९)मित्यत आह 'प्रत्यक्षस्पर्शे'ति। इदञ्च हेतुद्वयस्यैवासमानाधिकरणम्। समवायेन उपाधित्वमभिप्रेत्य उभयत्र सम्बन्धाभिलापः। दशाविशेषे तथा ज्ञातस्य दोषतायां दृष्टत्वेन ज्ञातातिव्याप्तेरदोषत्वाद् वस्त्वतिव्याप्तिमाह—'घट' इति। तद्धर्मावच्छिन्नसाधनाव्यापकत्वोक्तौ(१०) तु पक्षधर्मपदवैयर्थ्यम्, सिद्धान्तलक्षणतुल्यत्वञ्चेति भावः।

---

(१) ग्रन्थविशेषे 'हेत्वसमानाधिकरणस्योपाधे'रिति पाठो नास्ति। तत्र 'हेतुसमानाधिकरणादभेद'मिति पाठान्तरम्। (२) 'भेदकमाहेत्याशय' इति पाठान्तरम्। (३) 'करणत्वालाभात्' इति पाठान्तरम्। (४) 'समस्त'मिति पाठान्तरम्। (५) 'धर्मयोर्द्वयो' इति पाठान्तरम्। (६) 'एवे'ति सर्वत्र न दृश्यते। (७) ग्रन्थविशेषे 'साध्ये'ति नास्ति। (८) 'व्यापकत्वं न उद्भूतरूपस्ये'ति पाठान्तरम्। (९) 'रूपमित्यत' इति पाठान्तरम्। (१०) 'तद्धर्मावच्छिन्नसाध्यव्यापकत्वोक्तौ' इति पाठान्तरम्।

शुद्धसाध्यव्यापकस्य अन्यतरत्वरूप(१)पक्षधर्मावच्छिन्नसाध्यव्यापकत्वस्य सुतरां सम्भवात् 'आर्द्रेन्धने'त्यादि मूलमसङ्गतमत आह—'न वे'ति। इत्थञ्च 'पक्षनियते'त्यस्य पक्षधर्मत्वेन नियमतो ज्ञानविषयेत्यर्थः।

न्यूनतां परिहरति 'विरुद्धे'ति। अत्र साधनावच्छिन्नसाध्यस्याप्रसिद्धेरिति भावः। मित्रातनयत्वावच्छिन्नश्यामत्वव्यापकशाकपाकजत्वव्यभिचारिणोऽपि काकत्वादेर्न श्यामत्वासाधकत्वमत आह—'स्वावच्छिन्ने'ति। काकत्वं न स्वावच्छिन्नश्यामत्वव्यापकव्यभिचारि शाकपाकजत्वस्य तदवच्छिन्नसाध्यव्यापकत्वाभावात् काकत्वप्रकारकप्रमाविषयत्वादेः काकत्वे व्यभिचाराभावादित्यर्थः। मित्रातनयत्वपक्षकानुमाने(क) च मानुषत्वं दृष्टान्तः। दृष्टान्तपक्षसाधारणस्य स्वत्वस्यैक(२)स्याभावा(ख)दाह—'साधनवतो'ति। काकत्वादेर्मित्रातनयत्ववति(ग) मित्रातनयत्वावच्छिन्नश्यामत्वव्यापकशाकपाकजत्वाभाववद्वृत्तित्वाभावादित्यर्थः।

## तत्त्वचिन्तामणिः

अथ साधनावच्छिन्नसाध्यव्यापकत्वे सति साधनाव्यापक उपाधिः(३), तेन ध्वंसस्य जन्यत्वेन ध्वंसप्रतियोगित्वे साध्ये साधनावच्छिन्नसाध्यव्यापकं भावत्वमुपाधिः, श्यामत्वे शाकपाकजत्वमुपाधि(४)रिति, तन्न; पक्षधर्मावच्छिन्नसाध्यव्यापकोपाध्यव्यापनात्, जलं प्रमेयं रसवत्त्वादित्यत्र रसवत्त्वावच्छिन्नसाध्य-(५)

(१) 'अन्यतरत्वादिपक्षधर्मे'ति पाठान्तरम्। (२) 'स्वत्वस्यैकत्वाभावादाहे'ति पाठान्तरम्। (३) 'उपाधि'रिति सर्वत्र न दृश्यते। (४) पुस्तकविशेषे 'उपाधि'रिति नास्ति। (५) 'प्रमेयत्वव्यापक' इति पाठान्तरम्।

(क) अत्रानुमानाकारो यथा,—मित्रातनयत्वं न श्यामत्वसाधकं स्वावच्छिन्नश्यामत्वव्यापकशाकपाकजत्वव्यभिचारित्वादिति।

(ख) 'स्वत्वस्यैकस्याभावा'दिति,—इत्थञ्च स्वपदेन दृष्टान्तभूतमानुषत्वपरिग्रहे स्वरूपासिद्धिः। मित्रातनयत्वपरिग्रहे च दृष्टान्तासिद्धिरिति भावः।

(ग) 'मित्रातनयत्ववती'त्यत्र सप्तम्यर्थोऽभेदः, तस्य च अग्रिमशाकपाकजत्वाभाववत्पदार्थे अन्वयः। तथा हि मित्रातनयत्ववदभिन्नो यो निरुक्तशाकपाकजत्वाभाववान् तद्वृत्तित्वाभावादित्यर्थः। अथवा मित्रातनयत्ववतीत्यत्र सप्तम्यर्थो निरूपितत्वं, तस्य च अग्रिमवृत्तित्वपदार्थे अन्वयः। तथा हि मित्रातनयत्वनिरूपितं यत् तादृशशाकपाकजत्वाभाववद्वृत्तित्वं तदभावादित्यर्थः।

व्यापकपृथिवीत्वस्योपाधित्वप्रसङ्गात्, सोपाधित्वादसाधकमित्यत्र साधनावच्छिन्न-साध्यव्यापकव्यभिचारित्वे साधनावच्छिन्नेत्यस्य व्यर्थत्वप्रसङ्गाच्च।

किञ्च पक्षद्वयेऽपि विशिष्टसाध्यव्यभिचारं विशिष्टसाध्यव्यतिरेकं वा प्रसाध्य पश्चात् केवलसाध्यव्यभिचारः केवलसाध्यव्यतिरेको वा साधनीयः। तथा च अर्थान्तरम्। केवलसाध्ये हि विवादो, न तु विशिष्टे।

## दीधितिः

ननु शुद्धसाध्याव्यापकस्थल एवासिद्धिशङ्कानिरासाय अवच्छेदकांशोऽपि निवेशनीयः। अखण्डाभावस्य घटकतया च न वैयर्थ्यम्। येन रूपेण उपाधिता विशेषणवति तद्रूपावच्छिन्नव्यभिचारस्यैव वा हेतुत्वम्। शुद्धसाध्यव्यापकस्थले तु साध्यव्यापकव्यभिचारो व्यापकतावच्छेदकार्द्रेन्धनत्वाद्यवच्छिन्नव्यभिचारो वा हेतु-रुपन्यसनीयः। प्रायशस्तद्धर्मवति तद्धर्मविशिष्टसाध्यव्यापकव्यभिचारित्वस्य(१) हेतुत्वेऽपि न वैयर्थ्यम्, अखण्डाभावस्य अतिरिक्तत्वात्।

वस्तुतस्तु उपाधिना असाधकत्वासाधनेऽपि उद्भावितयावद्दोषैरेव तत् साधनीयमिति नियमाभावात्। तदुन्नीतव्यभिचारेण तत्साधनसम्भवात् सन्दिग्धो-पाधिसमशीलः(२) सन्दिग्धो व्यभिचार इत्यत आह—'किञ्चे'ति। 'केवले'ति,—तथा च केवलस्यैव साध्यस्य व्यभिचारो व्यतिरेको वा जिज्ञासितो विरोधित्वात्, न तु विशिष्टस्य, अविरोधित्वादिति भावः।

## दीधितिप्रकाशः

'असिद्धी'ति(३)—'असिद्धिः' अपक्षधर्मत्वम्। व्यभिचारिणि वस्तुगत्या शुद्धसाध्यव्यापकव्यभिचारस्यापि(४) सत्त्वादसिद्धिर्न सम्भवतीत्यतः 'शङ्के'ति। अवच्छेदकांशः साधनपक्षधर्मरूपः। असिद्धिशङ्कानिवारकस्य विशेषणस्य व्याप्ति-

---

(१) 'व्यभिचारस्य' इति पाठान्तरम्। (२) 'सन्दिग्धोपाधिसमशील' इति पुस्तकविशेषे नास्ति। (३) क्वचित् 'असिद्धीती'तिदीधितिग्रन्थप्रतीकधारणं नास्ति। (४) 'व्यभिचारित्वस्यापि' इति पाठान्तरम्।

ग्रहानौपयिकतया व्यर्थत्वमत आह—'अखण्डे'ति। श्यामत्वसमानाधिकरणा(१)-भावप्रतियोगितावच्छेदकत्वाभावात् शाकपाकजत्वत्वाद्य(क)वृत्तेः तद्वृत्तिमित्रातनयत्वावच्छिन्नश्यामत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाभावस्य भिन्नत्वादिति भावः; शुद्धसाध्यव्यापकाभावस्यापि मित्रातनयत्वावच्छिन्नश्यामत्वव्यापकतावच्छेदकरूपावच्छिन्नाभावतया तादृशाभावस्य अखण्डत्वासम्भवादिति।

व्यापकव्यभिचारित्वं व्यापकतावच्छेदकरूपावच्छिन्नाभाववद्वृत्तित्वम्; तथा च शाकपाकजत्वत्वावच्छिन्नाभाववद्वृत्तित्वज्ञानं विना मित्रातनयत्वावच्छिन्नश्यामत्वव्यापकतावच्छेदकरूपावच्छिन्नाभाववद्वृत्तित्वाग्रहः, तज्ज्ञाने(२) तेनैव रूपेण(३) हेतुत्वसम्भवे तादृशव्यापकतावच्छेदकपदोपादाने प्रयासगौरवमित्याशयेनाह—'येन रूपेणे'ति। काकत्वादौ व्यभिचारवारणाय 'विशेषणवती'ति। इत्थञ्च मित्रातनयत्ववति शाकपाकजत्वव्यभिचारित्वादित्यादिरेव हेतुः कर्त्तव्य(४) इत्यर्थः।

प्रागुक्तैवकारव्यवच्छेद्यं स्फुटीकर्त्तुं शुद्धसाध्यव्यापकस्थले प्रकारद्वयेन हेतुमाह—'शुद्धे'त्यादिना। तत्र असिद्धिशङ्काया अभावेन तद्वारणैकप्रयोजनस्य(५) अवच्छेदकांशस्य अनिवेशादिति भावः।

कतिपयस्थलेऽन्येनैकरूपेणैवासाधकतानुमानमाह—'प्रायश' इति। 'तद्धर्मवति' मित्रातनयत्ववति। मित्रातनयत्वावच्छिन्नश्यामत्वव्यापकतावच्छेदकरूपावच्छिन्नाभाववद्वृत्तित्वस्य हेतुत्वे तादृशव्यापकतावच्छेदकत्वस्य शाकपाकजत्वत्व इव श्यामत्वसामग्रीत्वेऽपि सत्त्वेन तेन रूपेण तदवच्छिन्नाभाववद्वृत्तित्वस्यापि हेतुत्वानपायाद् धूमवान् वह्नेरित्यादौ पर्वतायोगोलकान्यतरत्ववति तदवच्छिन्नधूमव्यापकव्यभिचारस्य हेतुत्वे तदवच्छिन्नधूमव्यापकत्वस्य पर्वतत्वादाविव आर्द्रेन्धनादावपि सत्त्वेन तेन रूपेणार्द्रेन्धनादिव्यभिचारस्यापि हेतुत्वलाभादित्यर्थः।

(१) 'करणात्यन्ताभावे'ति पाठान्तरम्। (२) 'तज्ज्ञानेऽपि' इति पाठान्तरम्। (३) 'तद्रूपेणैव' इति पाठान्तरम्। (४) पुस्तकविशेषे 'कर्त्तव्य' इति नास्ति। (५) 'प्रयोजकस्य' इति पाठान्तरम्।

(क) 'शाकपाकजत्वत्वाद्यवृत्ते'रिति पञ्चम्यन्तं श्यामत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाभावादित्यस्य विशेषणम्। 'तद्वृत्ती'ति शाकपाकजत्वत्वादिवृत्तीत्यर्थः। तदेतद् विशेषणद्वयमभावयोरखण्डत्वस्य स्फुटीकरणाय समुपात्तम्।

पतद्धूमवान् वह्नेरित्यादाववच्छिन्नसाध्यव्यापकताघटकस्याभावस्य अखण्डत्वा-सम्भवादवच्छेदकांशस्य वैयर्थ्यमेवेत्यत आह—'प्रायश' इति। ननु अत्र अवच्छेद-कांशस्य वैयर्थ्यात्सिद्धकोपाधिना न असाधकत्वसाधनमित्यत आह—'वस्तुतस्त्व'ति। 'तत्' असाधकत्वम्। तर्हि परहेतोरसाधकत्वं यत्किञ्चिद्दूषणद्वारा साधनीयमिति नियमस्य कुतो रक्षेत्यत आह—'तदुन्नीते'ति—उपाध्युन्नीतेत्यर्थः। 'तत्साधनम्' असाधकतासाधनम्।

ननु व्यभिचारसन्देहस्थले व्यभिचारस्य सन्दिग्धत्वान्न हेतुत्वसम्भव इत्यत आह—'सन्दिग्धे'ति। 'समशीले'ति,—यदि तत्र सन्दिग्धोपाधिकत्वं(१) हेतुस्तदा ममापि सन्दिग्धव्यभिचारकत्वमेव तथा। असाधकत्वानुमानमपि तुल्यमित्यर्थः। मूले 'पक्षद्वयेऽपी'ति(२)—व्यभिचारोन्नयनपक्षे सत्प्रतिपक्षोन्नयनपक्षे चेत्यर्थः। पक्षधर्मावच्छिन्नसाध्यव्यापकत्वगर्भलक्षणपक्षे साधनावच्छिन्नसाध्यव्यापकत्वगर्भ-लक्षणपक्षेऽपीति वार्थः(३)। विशिष्टसाध्यव्यभिचारस्य अनाकाङ्क्षि(क)तत्वमभि-धातुं केवलसाध्यव्यभिचारादेः प्रदर्शनं सङ्गमयति—'तथा चे'त्यादिना। 'अविरोधित्वा'(४)दिति—साध्यनिर्देशानन्तरं प्रतिवादिनस्तत्साधकाकाङ्क्षाया इव साधनोपन्यासानन्तरं वादिनः शुद्धसाध्यानुमितिविरोधिदोषाकाङ्क्षाया एव सम्भवादिति भावः।

## तत्त्वचिन्तामणिः

अथ प्रकृतसाध्यव्यभिचारसिद्ध्यर्थं विशिष्टसाध्यव्यभिचारः साध्य(५)इति चेन्न; अप्राप्तकालत्वात्। प्रथमं साध्यव्यभिचार एवोद्भाव्यः, तत्रासिद्धावुपाधिरिति चेत्, तर्हि प्रकृतानुमाने नोपाधिर्दूषणं स्यात्। किञ्च प्रकृत(६)साध्यव्यभिचार-हेतुत्वेन पक्षधर्मावच्छिन्नसाध्यव्यापकव्यभिचार एवोपन्यसनीयः(७), नोपाधिः।

(१) 'सन्दिग्धोपाधिकत्वमेव' इति क्वचित् पाठः। (२) 'पक्षद्वय इति' इति पाठान्तरम्। (३) 'लक्षणेऽपीति वार्थ' इति पाठान्तरम्। (४) क्वचित् 'विरोधित्वा'दिति अकारशून्यं पाठान्तरम्। (५) 'साध्यत' इति पाठान्तरम्। (६) पुस्तकविशेषे 'प्रकृते'ति नास्ति। (७) 'एवोद्भाव्य' इति पाठान्तरम्।

(क) एतच्च विशिष्टसाध्यव्यभिचारस्य अर्थान्तरदोषग्रस्तताप्रतिपादनार्थम्; अना-काङ्क्षिताभिधानस्यैवार्थान्तररूपत्वादिति ध्येयम्।

# दीधितिः

'उद्भाव्यः'-विशेषणाव्यभिचारित्वे सति विशिष्टसाध्यव्यभिचारेण साधनीयः। 'तत्र' विशिष्टव्यभिचारे। 'असिद्धौ' उद्भावितायाम् तत्सिद्धये 'उपाधि'रुद्भाव्य इति। 'तर्ही'ति,—प्रकृतानुमिति(१) विरोधिशुद्धसाध्यव्यभिचारासाधकत्वादिति भावः।

अथ वक्ष्यमाणरीत्या अवच्छिन्नसाध्यव्यापकेनाप्युपाधिना आहत्यैव साध्यव्यभिचारः साधनीय इत्यत आह—'किञ्चे'ति। पक्षधर्मावच्छिन्नेत्यादिकमुपाधिमात्रव्यभिचारोपलक्षकम्। 'नोपाधिः'—न प्राधान्येनोपाधिः, व्याप्त्यादिविरहेणाहेतुत्वात्।

# दीधितिप्रकाशः

उद्भावने(२) असिद्धिर्नास्त्येव ज्ञातत्वात्तद्विषयस्य साध्यव्यभिचारस्य प्रकृते साध्यत्वात्। तदभावः पक्षे बाध एव, नासिद्धिः। न वा उपाध्युपन्यासेन बाधनिरास इत्यतो व्याचष्टे 'उद्भाव्य'इत्यादिना। 'विशेषणाव्यभिचारित्वे सती'ति विशेषणवतीत्यस्योपलक्षकम्(३)।

तत्रेत्यस्य व्याख्या 'विशिष्टे'त्यादिः। पूरयति 'उद्भाविताया'मिति। 'प्रकृते'ति,—प्रकृतानुमानविरोधी यः शुद्धसाध्यव्यभिचारः, तत्साधको यो विशिष्टसाध्यव्यभिचारः, तस्यैवोपाधिना साधनादित्यर्थः।

'वक्ष्यमाणे'ति,-मित्रातनयत्वं श्यामत्वव्यभिचारि मित्रातनयत्वाव्यभिचारित्वे सति शाकपाकजत्वव्यभिचारित्वादिति क्रमेणेत्यर्थः। 'आहत्यैवे'(४)ति,—साक्षादेव, न तु विशिष्टसाध्यव्यभिचारसाधनद्वारेत्येवकारार्थः(५)। उपाधिमात्र एवैतद्दूषणसम्भवे(६) पक्षधर्मेत्यादिसङ्कोचक(७) विशेषणमनुचितमत आह—'पक्षधर्मे'त्यादि। उपाधिव्यभिचारस्योपन्यासे विशेषणत्वेनैवोपाधेरुपन्यासान्नोपाधिरिति

(१) 'प्रकृतानुमान' इति पाठान्तरम्। (२) 'तद्भाने' इति पाठान्तरम्। (३) 'वतीत्यस्याप्युपलक्षणम्' इति पाठान्तरम्। (४) 'आहत्यैव साक्षादेव' इति पाठान्तरम्। (५) 'द्वारेणैवेत्येवकारार्थं' इति पाठान्तरम्। (६) 'सम्भवात्' इति पाठभेदः। (७) क्वचित् 'सङ्कोचकम्' इत्यसमस्तपाठः।

मूलमसङ्गतमतो नेत्यनन्तरं पूरयति 'प्राधान्येने'ति। तथा च अयमत्रोपाधिरित्युपन्यासो नोचित इति भावः।

हेतुं पूरयति 'व्याप्त्यादी'ति। आदिना पक्षधर्मतापरिग्रहः। व्यभिचारित्वादेः सम्बन्धत्वेऽपि तेन सम्बन्धेन व्याप्यतायाः साम्प्रदायिकैरनभ्युपगमात्(क)। इतरथा तु इहोपाधिरित्यस्य, इहोपाधिव्यभिचार इत्येवार्थो वाच्यः(१)। तथा च स्वायत्ते शब्दप्रयोगे किमित्यवाचकं प्रयुञ्ज्महे(२) इति न्यायात् इहोपाधिव्यभिचार इत्येव वक्तुमुचितमिति भावः। सप्तम्या व्यभिचारप्रतियोगित्वार्थकत्वे इहोपाधिरित्यस्य एतन्निष्ठव्यभिचारप्रतियोग्युपाधिरित्यर्थः(३)। तथा च उपाधिविशेष्यकं व्यभिचारविशेषणकमुद्भावनं नोचितं, किन्तूपाधिविशेषणकव्यभिचारविशेष्यकमेवोद्भावनं युक्तमित्यभिप्रायः(४)।

## तत्त्वचिन्तामणिः

स्यादेतत्,—पर्य्यवसितसाध्यव्यापकत्वे सति साधनाव्यापक उपाधिः। पर्य्यवसितं साध्यं पक्षधर्मताबललभ्यम्। यथा शब्दोऽनित्यत्वातिरिक्तशब्दधर्मातिरिक्तधर्मवान् मेयत्वादित्यत्र पर्य्यवसितं यत् साध्यम् अनित्यत्वम्, तस्य व्यापकं कृतकत्वमुपाधिः।

## दीधितिः

'पर्य्यवसिते'ति,—अत्र लक्ष्यतानियामकं दूषकताबीजं सत्प्रतिपक्षोन्नायकत्वम्। व्यभिचारोन्नायकत्वस्य तत्त्वे(५)साध्यवत्पक्षावृत्तौ व्यभिचारोन्नायकेऽव्याप्तेः, वक्ष्यमाणकृतकत्वोपाधेरदूषकत्वापत्तेश्च। न हि तद्व्यभिचारेण हेतौ शुद्धसाध्यव्यभिचारः शक्योन्नयनः, बाधानवतारदशायां तादृशव्यभिचाराप्रसिद्धेः।

(१) ग्रन्थविशेषे 'वाच्य' इति नास्ति। (२) 'प्रयोक्ष्यामहे' इति पाठान्तरम्। (३) क्वचित् 'रित्यभिप्राय' इति पाठान्तरम्। तत्र च 'तथा च' इत्यादिः 'युक्तमित्यभिप्राय' इत्यन्तग्रन्थो न दृश्यते। (४) 'युक्तमिति वाभिप्राय'इति पाठान्तरम्। (५) 'तत्त्वेन' इति पाठान्तरम्।

(क) आदौ तावद् व्यभिचारित्वस्य सम्बन्धत्वमेव न सर्वसम्मतम्। तत्र सम्बन्धत्वस्य सम्मतत्वेऽपि तस्य वृत्त्यनियामकतया वृत्त्यनियामकसम्बन्धे व्याप्यतावच्छेदकसम्बन्धत्वस्य साम्प्रदायिकैरस्वीकारात् तेन सम्बन्धेन प्रकृते व्याप्यताया न सम्भव इति भावः।

न च पर्य्यवसितसाध्यव्यभिचारः साध्यव्याप्यताबोधविरोधीति ।, नचैवमपि कथं तत्र सङ्केतानुपाधिसम्भवः ? मीमांसकमतेन तदभिधानात्, शब्दशब्दयोर्भाव-प्रधानत्वाद्वा । पक्षतावच्छेदकादेरुपाधितावारणाय पक्षावृत्तित्वे सतीति विशेषणीयम् ।

## दीधितिप्रकाशः

दूषकताबीजनिर्णयं विना लक्ष्यालक्ष्यविभागानुपपत्तेस्तदादौ(क)विचारयति(१) 'अत्रे'त्यादिना । अत एवाह(ख) 'लक्ष्यतानियामकम्' इति । 'तत्त्वे' लक्ष्यता-नियामकत्वे(२) । 'साध्यवदि'ति,—तस्य(३) पक्षधर्मताबललभ्य(४)पक्षीयसाध्य-व्यापकत्वादिति भावः(५) ।

नन्विदमपि दूषणमेतल्लक्षणे भविष्यतीत्यत आह,—'वक्ष्यमाणे'ति । 'बाधा-नवतारे'ति,—पक्षातिरिक्ते सर्वत्रैव साध्यसत्त्वाद् व्यभिचाराप्रसिद्धिः । बाधावतारे च तत एवानुमितिप्रतिबन्धे उपाधिवैयर्थ्यादिति भावः ।

पर्य्यवसितसाध्यव्यभिचारोन्नायकत्वेनैव(६) दूषकतास्तु, अत आह—'न च पर्य्यवसिते'ति । तथा सति पर्वतो वह्निमान् धूमादित्यादौ धूमस्य पर्वतीयवह्नि-व्यभिचारोऽपि विरोधी स्यादिति भावः ।

'एवमपि' सत्प्रतिपक्षोन्नायकत्वस्य लक्ष्यतानियामकत्वेऽपि । 'सङ्केता'-विति,—नैयायिकनये शब्दस्यानित्यत्वेन वास्तवसत्प्रतिपक्षत्वाभावादित्यर्थः(७) । 'मीमांसकमतेने'ति,—तन्मते शब्दस्य नित्यत्वेन साध्याभावसत्त्वे तदुन्नायकत्वस्य(८) सम्भवादिति भावः ।

(१) 'विवेचयति' इति पाठान्तरम् । (२) 'तत्त्वेन लक्ष्यतानियामकत्वेन' इति पाठान्तरम् । (३) 'साध्यवति तस्य' इति पाठान्तरम् । (४) 'पक्षताबललभ्ये'ति पाठान्तरम् । (५) क्वचिद् 'भाव'इत्यनन्तरं 'नन्विदमपि' इत्यतः पूर्वं 'व्यतिरेकोन्नायके घटत्वं प्रत्यक्षं प्रमेयत्वादित्यत्र नहि द्रव्यत्वावच्छिन्नप्रत्यक्षत्वं विपर्ययव्यापकोद्भूतरूपेऽस्य व्यभिचारोन्नायकत्वं वहिर्द्रव्यान्तर्भावेणेति' इत्यतिरिक्तः पाठः समुपलभ्यते । (६) 'न्नायकत्वस्य' इति पाठान्तरम् । (७) 'भावादिति भावः' इति पाठान्तरम् । (८) 'न्नायकत्वसम्भवादिति भाव' इति पाठान्तरम् ।

(क) 'तदि'ति दूषकताबीजमित्यर्थः ।

(ख) 'अत एवे'ति दूषकताबीजस्य लक्ष्यालक्ष्यभावनियामकत्वादेवेत्यर्थः ।

मतद्वय(क)साधारणार्थमाह—'शब्दशब्दयो'रिति, पक्षसाध्यस्य-(१)शब्दपदयो-रित्यर्थः। तथा च शब्दत्वमनित्यत्वातिरिक्त-(२)शब्दत्वधर्मातिरिक्तधर्मवदित्याद्याविति भावः। इदमुपलक्षणम्, यदि चेत्या(ख)दावपि शब्दपदं शब्दत्वपरम्। 'पक्षतावच्छेदकादे'रिति,—पर्वतो वह्निमान् धूमादित्यादौ पर्वतीयवह्निव्यापकस्य धूमाव्यापकस्य पर्वतत्वादेः सत्प्रतिपक्षानुन्नायकत्वेनालक्ष्यत्वादिति भावः। 'पक्षावृत्तित्वे सती'ति,—इत्थञ्च साधनव्यापके दूषकतावीजसत्त्वेऽपि कथकानामुपाधिव्यवहारविरहादेव केवलं साधनाव्यापकत्वं विशेषणमिति भावः।

## तत्त्वचिन्तामणिः

यदि च तथैव कृतकत्वमपि शब्दे साध्यते, तदा अनित्यत्वमुपाधिः। तदुक्तम्,—

"वाद्युक्तसाध्यनियमच्युतोऽपि(A)कथकैरुपाधिरुद्भाव्यः।
पर्य्यवसितं नियमयन् दूषकतावीजसाम्राज्या"दिति।

अनेन साधन पक्षधर्मावच्छिन्न(३)साध्यव्यापकोऽप्युपाधिः(४) संगृह्यते; तादृशसाध्यस्य(५) पर्य्यवसितत्वादिति, तन्न, एवं हि द्व्यणुकस्य सावयवत्वे सिद्धे द्व्यणुकमनित्यद्रव्यासमवेतं जन्यमहत्त्वानधिकरणद्रव्यत्वादित्यत्र निःस्पर्शद्रव्यसमवेतत्वमुपाधिः स्यात्। भवति हि नित्यद्रव्यसमवेतत्वं पर्य्यवसितं साध्यं तस्य व्यापकं साधनाव्यापकञ्च।

---

(१) 'साध्यपक्षस्ये'ति पाठान्तरम्। (२) 'रिक्तधर्मशब्दत्वे'ति पाठान्तरम्। (३) 'पक्षधर्मसाधनावच्छिन्न' इति पाठान्तरम्। (४) 'व्यापकोपाधिः' इति पाठान्तरम्। (५) 'तादृशस्यापि' इति पाठान्तरम्।

---

(क) 'मतद्वये'ति-नैयायिकमतमीमांसकमतोभयेत्यर्थः; तदुभयमत एव शब्दत्वस्य नित्यत्वादिति भावः।

(ख) 'यदि चेत्यादावपी'ति-अनन्तरवक्ष्यमाण 'यदि चे'त्यादिमूलग्रन्थेऽपीत्यर्थः।

(A) 'वाद्युक्ते'त्यादिः—वाद्युक्ते साध्ये यो नियमः व्याप्यत्वं तेन च्युतः निरूपकतासम्बन्धावच्छिन्नतदभाववान् साध्यतावच्छेदकावच्छिन्नसाध्याव्यापक इत्यर्थः। अथवा वाद्युक्तसाध्ये नियमः च्युतो यस्येति बहुव्रीहिणा तदर्थलाभः।

## दीधितिः

'यदि चे'ति,—एतच्च स्वतन्त्रकृतकत्वसाधनदशायां बोध्यम्(१)। अनित्यत्व-साधनोपयोगितया तु कृतकत्वसाधने द्वयोरपि सन्दिग्धत्वेनैकतरव्यतिरेकस्यान्यतर-व्यतिरेकासाधकत्वात्।

'एवं ही'त्यादि,—असमवेतत्वेन द्रव्यासमवेतत्वेन वा अर्थान्तरवारणाय 'सावयवत्व' इति। साध्ये द्रव्यपदं नित्यद्रव्यवृत्तितायाः स्फुटतरसिद्ध्यर्थम्; द्रव्यसमवेते अनित्यद्रव्यासमवेतत्वस्य नित्यद्रव्यसमवेतत्वमादाय पर्य्यवसानात्। हेतौ च जन्यपदं परमाणुनित्यत्वासिद्धिदशायामाकाशादौ व्याप्तिग्रहाय। विशिष्टा-भावस्याति(२)रिक्तत्वान्न वैयर्थ्यम्।

नित्यमहत्त्वव्यावृत्तानित्ययावन्महत्त्ववृत्तिजातिविशेष(३)परिचयाय तदिति तु न; तादृशजातौ मानाभावात्(४), वैभवापेक्षिकापकर्षव्यवहारस्यानुगतजातिभिरेव सम्भवात्, तुल्यन्यायतया त्रसरेणुमहत्त्वापेक्षिको(५)त्कर्षैकजात्या सङ्करप्रसङ्गाच्च।

'निःस्पर्शे'ति;—साध्योपाध्योर्व्याप्तिदार्ढ्य(६)प्रदर्शनाय द्रव्यपदम्। गमकता तु तेन विनापि। पर्य्यवसितसाध्यसमव्याप्त एवोपाधिरिति मतेनेदमित्यपि कश्चित्।

## दीधितिप्रकाशः

'स्वतन्त्रे'त्यादि,—अनित्यत्वसाधनानुपयोगीत्यर्थः। 'उपयोगितये'ति,—कृतकत्वदशायां शब्दे साधने तद्व्यतिरेकस्य सन्दिग्धतया सत्प्रतिपक्षासत्त्वे(७) अनित्यत्वसाधनस्य निष्प्रत्यूहत्वात्। 'द्वयोः' अनित्यत्वकृतकत्वयोः। 'असाध-कत्वा'दिति, पक्षधर्मतांशे सन्देहादिति भावः।

---

(१) 'ज्ञेयम्' इति पाठान्तरम्। (२) 'भावस्य चाति' इति पाठान्तरम्।
(३) 'विशेष' इति पुस्तकविशेषे नास्ति। (४) 'प्रमाणाभावात्' इति पाठान्तरम्।
(५) 'त्रसरेणुत्वापेक्षिक' इति पाठान्तरम्। (६) 'व्याप्तिदार्ढ्य' इति पाठान्तरम्।
(७) 'सत्प्रतिपक्षासम्पादकत्वे' इति पाठान्तरम्।

अत्र(क) पञ्चम्यर्थो 'बोध्य'मित्यनेनान्वेति। इत्थञ्च पक्षे यदा कृतकत्वाभावो निश्चितः, अनित्यत्वं सन्दिग्धम्, तदा तत्साधने कृतकत्वमुपाधिः। यदा च अनित्यत्वाभावो निश्चितः, कृतकत्वं सन्दिग्धम्, तदा तत्साधने अनित्यत्वमुपाधिरित्यर्थः।

'सावयवत्वम्' द्रव्यसमवेतद्रव्यत्वम्। तत्र विशेष्यस्य द्रव्यत्वांशस्य(१) प्रयोजनाभावाद् द्रव्यसमवेतत्वमात्रं विवक्षितम्। तत्र विशेष्यस्य समवेतत्वस्य विशेषणस्य च द्रव्यांशस्य प्रयोजनमाह—'असमवेतत्वेने'त्यादिना।

ननु अनित्यासमवेतत्वमेव(२) साध्यं क्रियताम्, पक्षविशेषणसाहित्यान्नित्यद्रव्यसमवेतत्वे पर्य्यवसानं भविष्यतीत्यत आह—'साध्ये द्रव्यपद'मिति। स्फुटतरत्वं विवृणोति, —'द्रव्यसमवेत' इत्यादिना। द्रव्यसमवेतत्वं द्विविधम्; नित्यद्रव्यसमवेतत्वम् अनित्यद्रव्यसमवेतत्वञ्च; तत्र द्रव्यसमवेतत्वविशिष्टे अनित्यद्रव्यसमवेतत्वाभावप्रकारिकानुमितिर्जायमाना साध्यस्यद्रव्ये अनित्यत्वविशेषणव्यावृत्तिपर्य्यालोचनेनोपस्थितनित्यद्रव्यसमवेतत्वमादायैव विश्राम्यति; अप्रामाण्याभावानुमितौ प्रामाण्यवत्, अन्यथा प्रतीतेरपर्य्यवसानात्।

द्रव्यसमवेते अनित्यासमवेतत्वानुमितौ तु द्रव्यसमवेते नित्यद्रव्य(३)समवेतत्वं भासते। नित्यद्रव्ययोस्त्वरुणान्यायेनाभेद(४) उद्वीक्ष्य इति भावः(A)। विशिष्टाभावस्यानतिरिक्ततया दण्डिमति रक्तदण्डी नास्तीति प्रतीतेर्दण्डे रक्तत्वाभावविषयकत्ववद्(५) द्रव्यसमवेतत्ववति अनित्यद्रव्यासमवेतत्वप्रतीतेरपि द्रव्ये अनित्यत्वाभावपर्य्यवसानेन अनित्यत्वाभाववद्द्रव्यसमवेतत्व एव विश्रामात्। स च साध्ये द्रव्यविशेषणे सत्येव स्यादित्यभिप्रायः(६)।

---

(१) 'विशेष्यद्रव्यांशस्य' इति पाठान्तरम्। (२) 'मित्येव' इति पाठभेदः। (३) ग्रन्थविशेषे 'द्रव्य' इति नास्ति। (४) 'त्वरुणया गवा इति न्यायेनाभेद' इति पाठान्तरम्। (५) 'विषयकत्वाद्' इति पाठान्तरम्। (६) 'स्यादिति भाव' इति पाठान्तरम्।

---

(क) 'अत्रे'ति-'अनित्यत्वसाधनोपयोगितया त्वि'त्याद्य'न्यतरव्यतिरेकासाधकत्वा'दित्यन्तदीधितिग्रन्थ इत्यर्थः।

(A) 'अरुणान्यायेने'ति—मीमांसातन्त्रसिद्धारुणाधिकरणन्यायेनेत्यर्थः। 'उद्वीक्ष्य' इति-उत्तरकालीनमानसप्रतीतिविषय इत्यर्थः।

सावयवत्वसिद्धेरेव परमाणोः सिद्धेरुक्तं 'नित्यत्वे'ति। तत्र नित्यत्वसिद्धौ पक्ष एव(१) सहचारग्रहः सम्भवतीति भावः। व्यभिचारवारकतया अप्रसिद्धिवारकतया वा व्याप्तिग्रहौपयिकविशेषणस्यैव सार्थकता, न त्वन्वयसहचारग्रह(२)सम्पादकस्यापि, व्यतिरेकसहचारेणापि व्याप्तिग्रहसम्भवादत आह—'विशिष्टे'ति।

'जातिविशेषे'ति,—तथा च जन्यत्वस्याप्रवेशान्न वैयर्थ्यमिति भावः। 'तत्' जन्यपदम्। 'मानाभावा'दिति,—न च अवयवबहुत्वजन्यतावच्छेदकतया तादृशजातिसिद्धिः, द्व्यवयवद्रव्ये तदभावात्, अवयवावयवस्य तदवयवत्वात्, हस्तत्वाद्यवान्तरजातिविशेषावच्छिन्नं प्रति अवयवबहुत्वविशेषाणां हेतुत्वस्यावश्यकत्वे तादृशकार्य्यकारणभावे मानाभावाच्चेति।

ननु अणुपरिमाणव्यावृत्त-विभुपरिमाणापेक्षिकापकृष्ट(३)व्यवहारनियामकतया तादृशजातिः स्यादत आह—'वैभवे'ति(४)। 'अननुगते'ति,—हस्तत्ववितस्तित्वादिभिरित्यर्थः। तथा च एकप्रकारकरूपोऽनुगतव्यवहारोऽसिद्धः। एकाकारशब्दप्रयोगस्तु नार्थस्य(५) साधकः(क), वैभवनिष्ठोत्कर्षावधितावच्छेदकजातित्वेन वा तादृशजातीनामनुगम इति भावः।

ननु लाघवादेकैव जातिस्तादृशव्यवहारविषयतावच्छेदिका कल्प्यत इत्यत आह—'तुल्यन्याये'ति(६)। तत्रापि त्रसरेणुमहत्त्वापेक्षिकोत्कृष्टव्यवहारे लाघवादेकस्या एव जातेर्नियामकत्वे गगन-त्रसरेणुमहत्त्वयोः परस्पराभावसमानाधिकरणयोर्जात्योर्घटादिमहत्त्वे सङ्करः स्यादित्यर्थः(७)। एवञ्च तत्रापि(८) त्रसरेणु-

(१) 'तन्नित्यत्वसिद्धौ तत्रैव' इति पाठान्तरम्। (२) 'न त्वन्वयग्रहे'ति पाठान्तरम्। (३) 'क्षिकाप्रकृष्ट' इति पाठान्तरम्। (४) ग्रन्थविशेषे 'वैभवेति' इति पाठो नास्ति। (५) 'न वस्तुसाधक' इति पाठान्तरम्'। (६) 'तुल्यन्यायतयेति' इति पाठान्तरम्। (७) 'स्यादित्यर्थ' इत्यस्मादनन्तरं 'एवञ्चे'त्यतः पूर्वं क्वचित् पुस्तके 'अत्रेदमवधेयम्;—त्रसरेणोः स्पार्शनवारणाय द्रव्यस्पार्शनजनकतावच्छेदकतया त्रसरेणुमहत्त्वव्यावृत्तजातिविशेषं कल्पयित्वा कार्य्यकारणभावकल्पनस्यावश्यकत्वात्। तथा च कथं तुल्यन्यायतयेति सङ्गत' मित्यतिरिक्तः पाठः। (८) 'तत्रापि' इति पाठान्तरम्।

(क) 'एकाकारे'त्यादि,—एतदस्वीकारे सिंहतुरगप्रभृतिष्वपि हरिरित्याद्येकाकारशब्दप्रयोगात्तत्सकलानुगतैकहरित्वादिजातिसिद्धिप्रसङ्ग इति भावः।

महत्त्वनिरूपकतावच्छेदकतया ताद्दशजातेनामनुगमादननुगतव्यवहार इति भावः।

'द्रव्ये'ति'-परमाणुनित्यत्वासिद्धिदशायां नित्यद्रव्यनिःस्पर्शद्रव्ययोस्तादात्म्यग्रहात् तद्वृत्तित्वयोरपि तादात्म्यग्रहेण(ख) व्याप्तिग्रहसम्भवात्। अत एव तादात्म्यतदुत्पत्तिभ्यां व्याप्तिग्रह इति वैशेषिकाः(ग)। 'गमकता' उपाधेः पर्य्यवसितसाध्याभावोन्नयनोपयोगि(१)रूपवत्ता। 'पर्य्यवसिते'त्यादि,—अन्यथा निःस्पर्शसमवेतत्वस्य गुणत्वादौ सत्त्वात् तत्र नित्यद्रव्यसमवेतत्वाभावेन साध्यव्याप्यत्वाभावात्। 'इदं' द्रव्यपरम्। पर्य्यवसितसाध्यव्यापकत्वमेतद्वादिनैवोक्तम्(२), सत्प्रतिपक्षोन्नायकत्वञ्च दूषकताबीजं तदभिमतम्, तदनुपयोगितया पर्य्यवसित-

(१) 'न्नयनौपयिक' इति पाठान्तरम्। (२) 'व्यापकमित्यादिनैवोक्तम्' इति पाठान्तरम्।

(ख) 'तादात्म्यग्रहेण' तादात्म्यग्रहमूलकतर्केणेत्यर्थः।

(ग) 'अत एवे'त्यादिः,—'अत एव' तादात्म्यग्रहमूलकतर्कस्य व्याप्तिग्रहोपयुक्तत्वादेवेत्यर्थः। अत्र 'वैशेषिका' इति स्थाने 'वैनाशिका' इति पाठः समीचीनः प्रतिभाति; वैशेषिकतन्त्रप्रशस्तपादभाष्यस्य व्योमवतीन्यायकन्दलीटीकादिषु स्पष्टतया बहुत्रैव 'तादात्म्यतदुत्पत्तिभ्यां व्याप्तिग्रह' इति सिद्धान्तस्य सपरिकरं प्रतिक्षेपात्, कन्दलीटीकायां 'कोऽयमविनाभावो नाम? अव्यभिचारः। स कस्माद् भवति? तादात्म्यतदुत्पत्तिभ्यामिति सौगता' इत्येतेन सन्दर्भेण स्पष्टतयैव प्रकृतमतस्य बौद्धसिद्धान्ततायाः प्रत्यायनाच्च। 'वैनाशिका' बौद्धाः। तथाप्यस्मद्दृष्टचरेष्वादर्शपुस्तकेषु सर्वेष्वेवात्र 'वैशेषिका' इति पाठस्य समुपलम्भेन स एव पाठः प्रकृते परिगृहीतः। तस्य च प्रकृते सङ्गतिसम्पादनाय वक्ष्यमाणं व्याख्यानमुपक्षिप्यते। तद् यथा,—अत्र 'तादात्म्यतदुत्पत्तिभ्यां व्याप्तिग्रह' इत्येष ग्रन्थो न तादात्म्यतदुत्पत्तिभ्यामेवेत्यवधारणपरः किन्तु तादात्म्यतदुत्पत्तिभ्यामपीति समुच्चयपरः। 'शास्त्रे कार्य्यादिग्रहणं निदर्शनार्थं कृतं, नावधारणार्थम्; कस्माद् व्यतिरेकदर्शना'दित्यादिप्रशस्तपादभाष्यग्रन्थादिरपि तमेव सिद्धान्तमनुकूलयति। तदत्र तादात्म्यतदुत्पत्तिभ्यामित्यस्य तादात्म्यतदुत्पत्तिग्रहाभ्यां तादात्म्यतदुत्पत्तिग्रहमूलकतर्काभ्यामिति यावदित्यर्थकतया तादृशतादृशतर्कस्य च व्याप्तिग्रहप्रयोजकताया वैशेषिकानुमतत्वेन प्रकृते नासङ्गतिः। तादात्म्यग्रहमूलकतर्को यथा 'यदि शिंशपात्वं वृक्षत्वव्यभिचारि स्यात् स्वात्मकमेव न स्यादित्यादिः। तदुत्पत्तिग्रहमूलकतर्को यथा—धूमो यदि वह्निव्यभिचारी स्याद् वह्निजन्यो न स्यादित्यादिः। अथैवमपि तादृशतादृशतर्कस्य व्याप्तिग्रहप्रयोजकताया नैयायिकानामप्यनुमतत्वेन प्रकृते नैयायिका इत्यपहाय वैशेषिका इत्युक्तेरनुपपत्तिरिति चेन्न नव्यन्यायतन्त्रस्य बहुतरं वैशेषिकतन्त्रानुगतत्वेन तदुपपत्तेरिति।

साध्यव्यापकत्वं निष्प्रयोजनकम्; न वाऽन्यस्य कस्यचित् तादृशं लक्षणमस्तीत्यस्वरसः कश्चिदित्यनेन सूचितः।

## तत्त्वचिन्तामणिः

किञ्च पक्षधर्मताबललभ्यसाध्यसिद्धौ निष्फल उपाधिः। तदसिद्धौ च कस्य व्यापकः? न हि सोपाधौ पक्षधर्मताबलात् साध्यं सिध्यति? यस्य व्यापक उपाधिः स्यादिति।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ अनुमानखण्डे
उपाधि-पूर्वपक्षः।

## दीधितिः

ननु भवतां शुद्धसाध्यव्यापकं स्पर्शवदसमवेतत्वं कथं नोपाधिः? अनवस्था(१)भिया कस्यचिन्निरवयवस्य स्पर्शवतः सिद्धौ तत्समवेतद्रव्ये साध्याव्यापकत्वादिति चेत्, तुल्यं ममापीत्यत आह—'किञ्चे'ति। 'सोपाधौ' सोपाधितया निश्चिते।

## दीधितिप्रकाशः

'भवताम्' शुद्धसाध्यव्यापकोपाधित्व(२)मङ्गीकुर्वताम्। 'अनवस्थे'ति,—द्व्यणुकावयवस्यापि(३) अवयव-तदवयवादिकल्पने अनवस्था(४) स्यादित्यवश्यं कश्चिन्निरवयवस्पर्शवति विश्रान्तिरिति तत्समवेते द्रव्ये अनित्यद्रव्यासमवेतत्वमस्ति, न तु स्पर्शवदसमवेतत्वमिति शुद्धसाध्याव्यापकत्वमनित्यद्रव्यसमवेतत्वरूपपर्यवसितसाध्यस्यापि तत्र सत्त्वान्निःस्पर्शद्रव्यसमवेतत्वस्य चासत्त्वात् पर्य्यवसितसाध्याव्यापकत्वमपि तत्रैवेत्यर्थः।

सोपाधावुपाधे(५)रज्ञानदशायां साध्यं सिध्यतीत्यत आह—'सोपाधितया निश्चित' इति। उपाधिसन्देहाधीनव्यभिचारसन्देहकालेऽपि(६) अनुकूलतर्कसत्त्वे व्याप्तिनिश्चयसम्भवान्निश्चयपर्य्यन्तानुधावनम्।

---

(१) 'अनवस्थिति' इति पाठान्तरम्। (२) 'व्यापकस्योपाधित्व'मिति पाठान्तरम्। (३) पुस्तकविशेषे 'अपि' शब्दो नास्ति'। (४) 'अवयवानवस्था' इति पाठान्तरम्। (५) सोपाधावप्युपाधेरिति पाठान्तरम्। (६) 'स्थलेऽपि' इति पाठान्तरम्।

## दीधितिः

ननु लभ्यत्वं लाभयोग्यता, पक्षे यादृशं साध्यं सेद्धुमर्हति, तद्व्यापकत्वे सति पक्षावृत्तित्वम्, पक्षे साध्यसिद्धिविरोधिव्यापकताशालित्वमिति यावत्। स्वव्यतिरेकेण पक्षे साध्यसिद्धिविरोध्युन्नायकत्वमिति तु निर्गलितोऽर्थः। भवति च शब्दधर्मातिरिक्तधर्मरहिते शब्दे अनित्यत्वाभावसिद्धिर्यथोक्तसाध्यसिद्धिविरोधिनी। तथा साधनादिमति साधनाद्यवच्छिन्नसाध्याभावसिद्धिरपि।

## दीधितिप्रकाशः

मतं परिष्करोति 'नन्वि'त्यादिना। लाभयोग्यता, न तु फलोपधानम्, येन सोपाधावित्यादिना दोषः स्यादिति(घ) भावः। 'यादृशम्' यद्रूपावच्छिन्नम्। 'अर्हती'ति,—यथा पर्वतो वह्निमान्(१) धूमादित्यादौ पर्वतीयवह्नित्वावच्छिन्नमेव पर्य्यवसितं साध्यम्, पर्वतावृत्तिवह्नेः पर्वते बाधितत्वेन सिद्ध्यनर्हत्वादिति भावः।

ननु बाधानवतारदशायां महानसीयवह्न्यादेरपि सिद्धियोग्यता, तथा च तद्व्यापकतया महानसत्वं पर्वतो वह्निमान् धूमादित्यादावुपाधिः स्यादतः—'पक्षे साध्यसिद्धी'ति। 'विरोधित्वम्' विरोधिप्रमाविषयत्वम्। प्रमा च सर्वांशे ग्राह्या। तेन(ङ) पक्षवृत्तिधर्मस्य पक्षे अभावभ्रमदशायां(२) पर्वतीयवह्निव्यापकताशालित्वेऽपि नातिव्याप्तिः।

इत्थञ्च पक्षवृत्त्यत्यन्ताभावप्रतियोगितावच्छेदकरूपेण पक्षे साध्यसिद्धिविरोधिज्ञानविषयव्यापकताशालित्वं पर्य्यवसितम्। व्याप्य(३)विशेषानुपादाने व्यापकत्वं दुर्वचमत आह—'स्वव्यतिरेकेणे'ति। एवञ्च पक्षविशेष्यकसाध्यसिद्धिविरोध्यनुमितिजनकज्ञानविषयतावच्छेदकरूपवद्(४)व्यतिरेकप्रतियोगित्वं पर्य्यवसितम्। तादृशज्ञान-

---

(१) 'वह्निमानित्यादा'विति पाठान्तरम्। (२) 'भ्रमदशाया'मिति पाठान्तरम्।
(३) 'अत्र च व्याप्यविशेषे'ति पाठान्तरम्। (४) 'विषयतारूपव'दिति पाठान्तरम्।

---

(घ) तथा हि सोपाधित्वनिश्चयदशायां साध्यसिद्धेरनुपपत्तावपि कालान्तरीणसाध्यसिद्धिमुपादाय साध्ये पक्षधर्मताबललभ्यत्वोपपत्त्या न निरुक्तरूपासम्भव इति भावः।

(ङ) 'तेने'ति ज्ञानत्वमपहाय प्रमात्वनिवेशेनेत्यर्थः।

विषयतावच्छेदकत्वञ्च जनकतायां(१) प्रकारतासम्बन्धेन अवच्छेदकत्वपर्य्याप्त्यधिकरणत्वम्। व्याप्यविशेष्यक(च)परामर्शे च व्याप्तिपक्षधर्मतयोस्तत्त्वमविकलम्।

ननु पक्षे(२) अनित्यत्वातिरिक्तशब्दधर्मातिरिक्तधर्मवत्त्वसिद्धौ अनित्यत्वाभावसिद्धेरसमानप्रकारिकायाः कथं(छ) विरोधित्वम्? एवं स श्यामो मित्रातनयत्वादित्यादौ शाकपाकजत्वाभावाधीनाया मित्रातनयत्वावच्छिन्नश्यामत्वाभावसिद्धेः कथं शुद्धश्यामत्वसिद्धिं प्रति विरोधित्व(ज)मत आह—'भवति चे'ति(३)। 'रहिते' तत्त्वेन(४) निश्चिते(झ)। 'यथोक्तसाध्ये'ति,—तथा च समानविषयत्वेनैव विरोधित्वमिति भावः। 'साधनादिमति',—तत्त्वेन निश्चिते, सिद्धिरपि यथोक्तसाध्यसिद्धिविरोधिनीत्यन्वयः।

## दीधितिः

वस्तुतस्तु पक्षधर्मावच्छिन्नसाध्यव्यापकत्वे सति पक्षावृत्तित्वमेवोपाधित्वम्। सिध्यति च विशेषणवति विशिष्टसाध्यव्यापकव्यतिरेकेण शुद्धसाध्यव्यतिरेकः। तादृशश्च साधनव्यापकः संग्राह्यः; व्यभिचारोन्नायक इव पक्षवृत्तिरितरेषाम्। अपरेषां सत्प्रतिपक्षोन्नायकस्य(५) साधनव्यापकस्येव अस्माकमपि व्यभिचारोन्नायकस्य पक्षवृत्तेरसंग्रहो न दोषाय। परेषां साधनभेदादिव अस्माकमपि पक्षभेदादुपाधिभेद इति चेत्, अत्र वक्ष्यते ग्रन्थकृतैव।

इति श्रीरघुनाथशिरोमणिकृतायाम् अनुमानखण्डतत्त्वचिन्तामणिदीधितौ उपाधि-पूर्वपक्षः।

---

(१) 'तादृशज्ञानहेतुताया'मिति पाठान्तरम्। (२) पुस्तकविशेषे 'पक्षे' इति नास्ति। (३) 'भवति हीति' पाठान्तरम्। एतेन दीधितौ स एव पाठस्तन्मते प्रतिपत्तव्यः। (४) 'रहितत्वेन' इति पाठान्तरम्। (५) 'सत्प्रतिपक्षोन्नयनक्षमस्य' इति पाठान्तरम्।

---

(च) 'व्याप्यविशेष्यकपरामर्श' इति साध्याभावव्याप्य उपाध्यभावः पक्षवृत्तिरित्याकारकपरामर्श इत्यर्थः। 'तत्त्व'मिति निरुक्तरूपमवच्छेदकत्वमित्यर्थः।

(छ) तथा च कृतकत्वादावव्याप्तिरिति भावः।

(ज) तथा च शाकपाकजत्वादावव्याप्तिरिति भावः।

(झ) स्वरूपतस्तद्धर्मराहित्यस्याकिञ्चित्करत्वात् तत्त्वेन निश्चयानुधावनम्।

# दीधितिप्रकाशः

ननु समानप्रकारकज्ञानस्यैव विरोधितया नोक्तक्रमेण साध्याभावसिद्धेर्यथोक्त-साध्यसिद्धिविरोधित्वम्। एवं मूलीय'पर्यवसिते'त्याद्यपेक्षणे उद्दत्तरत्वम्, साधनाव्यापकत्वश्च मूलोक्तं निरर्थकमतो निष्कृष्याह—'वस्तुतस्त्वि'ति।

ननु व्यापकव्यतिरेकात् पक्षधर्मावच्छिन्नस्यैव साध्यस्याभावसिद्धिः(१)। सा च न विरोधिनी, भिन्नप्रकारकत्वादत आह—'सिध्यति चे'ति। 'विशेषणवती'ति—संमुग्धाकारलिखनम्, तेन विशिष्टाभावस्य अनतिरिक्तत्वे सामान्यतो दृष्टस्यैकविशेष-बाध(२) विशेषान्तरप्रकारकानुमितिजनकत्वे विशेषणवत्त्वेन निश्चिते विशिष्टसाध्या-भावसिद्धिरेव शुद्धसाध्याभावसिद्धिः। इतरथा तु विशेषणवत्त्वे सति विशिष्टसाध्य-व्यापकाभावेन हेतुना शुद्धसाध्याभावस्यानुमितिरिति।

ननु व्यभिचारोन्नायकतावादिभिरसंगृहीततया अलक्ष्ये साधनव्यापके ह्रदो वह्निमान्(३)धूमादित्यादौ वह्निसामग्र्यादौ निरुक्तलक्षणस्यातिव्याप्तिरत आह—'तादृशश्चे'ति। 'तादृशः' निरुक्त(अ)लक्षणाक्रान्तः। 'संग्राह्य' इति,—लक्ष्यता-नियामकदूषकताबीजसत्त्वं लक्ष्यतायां तन्त्रम्, न तु लक्षणान्तरकर्तृसंगृहीतत्वम्। तथा सति सत्प्रतिपक्षोन्नायकतावादिभिरसंगृहीते पक्षवृत्तौ पर्वतो धूमवान् वह्नेरित्यादावार्द्रेन्धनादौ साधनाव्यापकत्वघटितलक्षणस्यातिव्याप्तिः स्यादिति भावः। 'इतरेषाम्' व्यभिचारोन्नायकत्ववादिनाम्।

ननु भवतु साधनव्यापकस्य संग्रहः, तथापि व्यभिचारोन्नायकस्य पक्षवृत्ते-रसंग्रहो दोषायैव स्यादत आह—'अपरेषाम्'(४) इति–व्यभिचारोन्नायकत्ववादिनाम्। तथा च यथा सत्प्रतिपक्षोन्नायकस्य साधनव्यापकस्य व्यभिचारोन्नायकत्वरूप-लक्ष्यतानियामक-दूषकताबीजाभावादलक्ष्यत्वम्, तथास्माकमपि व्यभिचारोन्नायकस्य पक्षवृत्तेर्लक्ष्यतानियामक-सत्प्रतिपक्षोन्नायकत्वाभावादलक्ष्यत्वमिति भावः।

---

(१) 'पक्षधर्मावच्छिन्नसाध्याभावस्यैव सिद्धि'रिति पाठान्तरम्। (२) 'एक-विशेषबाधे'त्ययमंशो ग्रन्थविशेषे नास्ति। (३) 'वह्निमानित्यादा'विति पाठान्तरम्। (४) 'अपरेषा'मित्यत्र 'परेषा'मिति क्वचित् पाठान्तरम्।

---

(अ) 'निरुक्ते'ति 'वस्तुतस्तु' इत्याद्युपक्रम्य दीधितिकारेण निरुक्तेत्यर्थः।

ननु भवतां वह्नौ साध्ये एकस्यैव धूमत्वावच्छिन्नस्य पर्वतादिपक्षतायां निरुपाधित्वम्, ह्रदादिपक्षतायाञ्च सोपाधित्वं स्यादित्यस्यापि साधनभेदेन साम्यं दर्शयति—'परेषा'मिति। 'परेषाम्' व्यभिचारोन्नायकत्ववादिनाम्। पर्वतो वह्निमानित्यत्र धूमे साधने निरुपाधित्वम्, द्रव्यत्वादिसाधने सोपाधित्वं यथा न दूषणावहम्, अस्माकमपि पक्षभेदात्तथा नायं दोषावह इति(१) भावः।

'वक्ष्यत' इति,—सिद्धान्तग्रन्थे 'केचित्तु साधनव्यापकोऽप्युपाधि'रित्यादिना ग्रन्थकृतैवेदं(२)वक्तव्यम्, अतो नात्र(३)दूषणमस्तीति भावः।

इति श्रीमद्भवानन्दसिद्धान्तवागीशकृते अनुमानखण्डतत्त्वचिन्तामणिदीधितिप्रकाशे उपाधि-पूर्वपक्षः।

## तत्त्वचिन्तामणिः

अत्रोच्यते;—यद्व्यभिचारित्वेन साधनस्य साध्यव्यभिचारित्वं स तत्रोपाधिः(४)।

## दीधितिः

लक्ष्यतावच्छेदकमाह—'यद्व्यभिचारित्वेने'त्यादि। उन्नीयत इति शेषः। उन्नायकत्वं तद्योग्यता। सा च व्याप्तिपक्षधर्मते इति। तथा च यद्व्यभिचारो यद्धर्मावच्छिन्नाभावाधिकरणीभूत-यत्किञ्चिदधिकरणवृत्तित्वं(५) साध्यव्यभिचार-व्याप्यं साधनवृत्ति च तद्धर्मावच्छिन्नं तत्रोपाधिरित्यर्थः। तेनार्द्रेन्धनाभाववद्-वृत्तित्वेन वह्नौ धूमव्यभिचारसाधनेऽप्यार्द्रेन्धनं द्रव्यत्वादिना न तत्रोपाधि'। तद्रूपावच्छिन्नाभाववद्वृत्तित्वस्य वह्न्यवृत्तित्वात्। शुद्धसाध्यव्यापके तदभाव-वन्मात्रवृत्तित्वं साध्यव्यभिचारव्याप्यम्, अवच्छिन्नसाध्यव्यापके तु अवच्छेदकाधि-करणीभूततदभावाधिकरणवृत्तित्वमित्युभयत्रापि सङ्गतिः। द्रव्यत्वेन रूपवत्त्वे(६)

(१) 'पक्षभेदात्तथात्वं न दोषावह'मिति पाठान्तरम्। (२) 'कृतैव वक्तव्यम्' इति पाठान्तरम्। (३) 'न तत्र' इति पाठान्तरम्। (४) 'स उपाधिः' इति पाठान्तरम्। (५) 'वृत्तित्वसामान्य'मिति पाठान्तरम्। तच्च न प्रकाशकाराभिमतम्, वृत्तित्वपदस्यैव वृत्तित्वसामान्यार्थकतायास्तेन विवरणात्। (६) 'रूपवत्त्वेन' इति पाठान्तरम्।

साध्ये सत्ताद्रव्यत्वजलत्वमात्रविशेषिका या धीः, तद्विशेष्यत्वे जलसमवेतनित्यत्वे वा सति पृथिवीत्ववद्वृत्तित्वादित्यादिना प्रकारेण(१) व्यभिचारोन्नयनसमर्थोऽपि पृथिवीत्वाभावादिर्नोपाधिः।

नहि पृथिवीत्वात्मकतदभावाधिकरणं तादृशं किञ्चिदस्ति, यद्वृत्तित्वसामान्यं साध्यव्यभिचारव्याप्यम्, पृथिवीत्वादावेव व्यभिचारात्। न च व्यभिचारोन्नायकतामात्रेण प्रकृतोपाधित्वस्य(२) निर्वाहः, अपि तु कथकानां तान्त्रिकाणाञ्च तथाविधव्यवहारविषयत्वेन। तदवच्छेदकञ्चोक्तरूपम्। व्याप्यत्वासिद्ध्युन्नायकत्वादिकं सम्भवदपि न तथा, गौरवात्। अत एव इदं जलमाकाशादित्यत्र स्वाव्याप्यत्वेन जलत्वाव्याप्यत्वोन्नायकस्यापि द्रव्यत्वादेरसंग्रहो न दोषाय।

## दीधितिप्रकाशः

'यद्व्यभिचारित्वेन' इत्यादेर्लक्षणस्वरूपत्वे 'लक्षणन्त्वि'त्यादिकं वक्ष्यमाणं पुनरुक्तं स्यादत आह—'लक्ष्यते'ति। तृतीयार्थः करणत्वम्, निरूपकतया तदन्वयश्च न साध्यव्यभिचारित्वे, यद्व्यभिचारित्वस्य साध्यव्यभिचारित्व(३)करणत्वबाधादतः पूरयति 'उन्नीयत' इति। तथा च उन्नयने(ट) तस्य(४) करणत्वं न बाधितमिति भावः। उन्नायकत्वस्य फलोपधानरूपत्वे अव्याप्त्यतिव्याप्ती(ठ) स्यातामत आह—'उन्नायकत्व'मिति। व्याप्त्यादिभ्रमेणोन्नायकस्यानुपाधेरपि व्याप्त्यादिमत्त्वेन ज्ञायमानत्वरूपयोग्यतासत्त्वात्(५) तथैवातिव्याप्तिरतो योग्यताविशेषं दर्शयति—'सा चे'ति।

ननु यद्व्यभिचारित्वेनेत्यत्र उपाधितावच्छेदकामिश्रितोपाधेः(६) स्वरूपमात्रस्य यत्पदार्थत्वे द्रव्यं जातेरित्यादौ गुणान्यत्वविशिष्टसत्ताया गुणान्यत्व-

(१) 'वृत्तित्वादिति प्रकारेण' इति पाठान्तरम्। (२) 'पाधितानिर्वाह' इति पाठान्तरम्। (३) क्वचित् 'व्यभिचारित्वे' इति सप्तम्यन्तपाठः। (४) पुस्तकविशेषे 'तस्य' इति नास्ति। (५) 'सत्त्वा'दिति पाठान्तरम्। (६) 'पाधि' इति पाठान्तरम्।

(ट) 'तस्ये'ति यद्व्यभिचारित्वस्येत्यर्थः।

(ठ) उन्नयनरूपफलानुपहितोपाध्यव्याप्तिः। अतिव्याप्तिश्च व्याप्त्यादिभ्रमेणोन्नयनरूपफलोपहितानुपाधाविति ध्येयम्।

विशिष्टसत्तात्वादिनोपाधिता न स्यात्(१), सत्ताव्यभिचारित्वस्य जातावभावात्, आर्द्रेन्धनादेरप्यतिप्रसक्तेन द्रव्यत्वादिनोपाधितापत्तिश्च, लक्षणेन रूपविशेषस्य नियमालाभात्(२)।

एवमप्यवच्छिन्नसाध्यव्यापक(३) शाकपाकजत्वादावव्याप्तिः, तद्व्यभिचारस्य शुद्धश्यामत्वव्यभिचाराव्याप्यत्वादतो व्याचष्टे 'तथा चे'ति। 'यद्धर्मः' उपाधितावच्छेदकत्वेनाभिमत आर्द्रेन्धनत्वादिः। शाकपाकजत्वसंग्रहाय 'यत्किञ्चिदि'ति। 'वृत्तित्वं' हेतुतावच्छेदकसम्बन्धेन वृत्तित्वसामान्यम्। तेन कालिकादिसम्बन्धेनायोगोलक-(४) वृत्तित्वस्य धूमव्याप्येऽपि सत्त्वात् तस्य धूमव्यभिचाराव्याप्यत्वेऽपि न क्षतिः। सामान्यपदोपादानाच्च(ड) रूपवान् द्रव्यत्वादित्यादा-(५) वसंग्राह्यस्य पृथिवीत्वाभावादेरभावाधिकरणीभूतपृथिवीवृत्तित्वविशेषस्य सत्ताद्रव्यत्वादिनिष्ठस्य रूपव्यभिचारव्याप्यत्वेऽपि नातिव्याप्तिः। पृथिवीत्वादिनिष्ठस्य पृथिवीवृत्तित्वस्य तदव्याप्यत्वादिति।

व्याप्यादिपदसमभिव्याहारेण अवच्छेदकावच्छेदेनान्वयो व्युत्पत्तिबलात्(६)। तथा च यत्किञ्चिदधिकरणवृत्तित्वत्वावच्छेदेन व्याप्यत्वं व्युत्पत्तिबलाल्लभ्यते। अन्यथा(ढ) वह्निर्धूमव्याप्य इत्यप्यबाधितं स्याद् वह्नित्वसामानाधिकरण्येन तत्सत्त्वात्(ण)। वृत्तित्वादिपदसमभिव्याहारे तु आधेयतावच्छेदकसामानाधिकरण्येन(७), तेन वृत्तित्वसामान्ये साधनवृत्तित्वोक्तावपि तदाश्रययत्किञ्चिद्व्यक्तौ

(१) 'गुणान्यत्वविशिष्टसत्तात्वादिना सत्ताया उपाधिता न स्यात्' इति पाठान्तरम्। (२) 'विशेषस्यानियमा'दिति पाठान्तरम्। (३) 'व्यापके' इति पाठान्तरम्। (४) 'कालिकादिसाधारणायोगोलके'ति पाठान्तरम्। (५) 'द्रव्यत्वात् सत्त्वाद्वा इत्यत्राग्राह्यस्य' इति क्वचित्। (६) 'व्युत्पत्तिवैचित्र्यात्' इति पाठान्तरम्। (७) 'व्याहारेणाधिकरणतावच्छेदकवृत्तित्वत्वसामानाधिकरण्येन' इति पाठान्तरम्।

(ड) 'सामान्यपदोपादाना'दिति स्वकृतवृत्तित्वपदविवृताविति शेषः। तेन दीधितौ सामान्यपदाभावेऽपि न क्षतिः।

(ढ) 'अन्यथे'ति व्याप्यादिपदसमभिव्याहारे सति तादृशावच्छेदकावच्छेदेनान्वयस्य व्युत्पत्तिबललभ्यत्वविरह इत्यर्थः।

(ण) 'तत्सत्त्वा'दिति व्याप्यत्वसत्त्वादित्यर्थः।

तत्सत्त्वेनैव कृतार्थता। तद्वृत्तित्वसामान्यस्य साधनावृत्तित्वात् साधनवृत्तित्वेत्यनेनानन्वयापातात् प्रकृते तन्नोपात्तम्।

'यद्धर्मे'त्यस्य प्रयोजनमाह—'तेने'ति। 'तत्र' वह्नौ। 'तद्रूपे'ति—द्रव्यत्वादीत्यर्थः। 'अभाववद्वृत्तित्वस्य(१) वह्न्यवृत्तित्वा'दिति,—यथाश्रुतमिदं समवायेन वह्नेर्हेतुत्वाभिप्रायेण, संयोगेन हेतुतायां च तद्रूपा(त)वच्छिन्नाभावघति संयोगेन वृत्तित्वस्याप्रसिद्धतया व्याप्त्याद्यभावादिति बोध्यम्।

यत्किञ्चित्पदस्य प्रयोजनं दर्शयन्नेवोभयत्र लक्षणं सङ्गमयति 'शुद्धसाध्ये'ति। 'तदभाववन्मात्रे'ति—मात्रपदं सामान्यार्थकम्। 'अवच्छेदके'ति,—अवच्छेदकाधिकरणीभूतं यदुपाध्यभावाधिकरणीभूतं तद्वृत्तित्वमित्यर्थः। 'उभयत्र' शुद्धसाध्यव्यापके अवच्छिन्नसाध्यव्यापके च।

ननु विशेषितमविशेषितं वा यद्व्यभिचारित्वं साध्यव्यभिचारित्वव्याप्यं साधनवृत्ति चेत्यपेक्ष्य(२) यत्किञ्चिदधिकरणवृत्तित्वसामान्यगर्भतायां गौरवसहिष्णुतायां बीजमादर्शयति 'द्रव्यत्वेने'त्यादिना। तत्र पृथिवीत्वाभावस्य व्यभिचारोन्नायकत्वं यथाश्रुतलक्षणार्थं दर्शयितुमाह—'सत्ते'ति। द्रव्यत्वं रूपव्यभिचारि सत्तेत्यादिविशेष्यत्वे सति पृथिवीत्ववद्वृत्तित्वात् सत्तावदिति(३) क्रमेणेत्यर्थः। तत्र 'सत्ते'ति दृष्टान्तार्थम्। 'द्रव्यत्वे'ति स्वरूपासिद्धिवारणार्थम्(४)। 'जलत्वे'ति विशेष्यदलसार्थक्यार्थम्। अन्यथा सत्ताद्रव्यत्वोभयमात्रविशेष्यकधीविशेष्यत्वादित्यस्य तद्विशेष्यत्वे सति वृत्तित्वादित्यस्य वा सार्थक्ये(५) पृथिवीत्ववद्वृत्तित्वस्य वैयर्थ्यात्। मात्रपदञ्च घटत्वादिकमादाय या धीः, तद्विशेष्यत्वे सति पृथिवीवृत्तित्वस्य घटत्वादावेव व्यभिचार इति तन्निरासायोपात्तम्। तन्मात्रविषयकबुद्धिरप्रसिद्धा इति।

---

(१) पुस्तकविशेषे 'अभाववद्वृत्तित्वस्ये'ति पाठो नास्ति। (२) 'चेत्युपेक्ष्य' इति पाठान्तरम्। (३) पुस्तकविशेषे 'सत्तावद्' इति पाठो नास्ति। (४) 'स्वरूपसिद्ध्यर्थम्' इति पाठान्तरम्। (५) 'सामर्थ्ये' इति पाठान्तरम्।

---

(त) 'तद्रूपावच्छिन्ने'ति द्रव्यत्वाद्यवच्छिन्नेत्यर्थः।

(थ) ज्ञाने जातिविषयकत्वस्य धर्मिविषयकत्वनियतत्वादिति भावः।

तद्विशेष्यकबुद्धिविषयत्वञ्च द्रव्येतरावृत्तित्वघटितद्रव्यत्वत्वघटकजन्यपृथिवी-स्वरूपद्रव्येऽपि गतमतो विशेष्यद्वयम्। लघुप्रकारान्तरमाह—'जलसमवेते'ति। पृथिवीत्वादेर्वारणाय सत्यन्तम्। तस्यापि सम्बन्धान्तरेण जलवृत्तित्वात् 'समवेते'ति। जलपृथिवीसंयोगवारणाय 'नित्ये'ति। जलत्वादौ व्यभिचारवारणाय विशेष्यमिति। 'नोपाधिः' नोपाधिलक्षणेन संग्राह्यः।

संग्रहाभावं दर्शयति 'नही'त्यादिना। 'तादृशं' साध्यव्यभिचारनिरूपकम्। 'यद्वृत्तित्वसामान्य'मिति,—सत्ताद्रव्यत्वादिनिष्ठस्य पृथिवीवृत्तित्वस्य व्याप्यत्वेऽपि तत्सामान्यस्याव्याप्यत्वादिति भावः। दूषकताबीजसत्त्वे तद्वारणमेव तव कुत इत्यत आह—'न च व्यभिचारे'ति। मात्रपदेन तथाविधव्यवहारविषयत्वस्य(१) व्यवच्छेदः। 'प्रकृतोपाधित्वस्य' प्रकृतोपाधिलक्षणस्य। 'निर्वाहः' नियम्यत्वम्। तथा च व्यभिचारोन्नायकत्वं यत्र तत्रावश्यमुपाधिलक्षणमिति नियमो नेत्यर्थः।

'कथकानाम्' वादजल्पवितण्डासु कथासु निपुणानाम्। 'तथाविधव्यवहारः' उपाधिव्यवहारः। तथा च तद्विषयत्वमेव(२) प्रकृतोपाधित्वस्य नियामकम्। तदभावात् पृथिवीत्वाभावादेर्नोपाधित्वमिति तद्व्यावृत्तमुपाधिलक्षण-(३) मुचितमिति भावः। ननु पृथिवीत्वाभावादिव्यावृत्तस्य व्यवहारविषयतावच्छेदकस्याभावे तद्व्यावृत्तत्वेन व्यवहारविषयत्वमपि दुर्णिरूपमत आह—'तदवच्छेदकञ्चे'ति—तथाविधव्यवहारविषयता(४)वच्छेदकञ्च।

ननु यद्धर्मावच्छिन्नाभावाधिकरणीभूत यत्किञ्चिदधिकरणवृत्तित्वसामान्यं साध्याव्याप्यत्वव्याप्यम् साधनवृत्ति च तद्धर्मावच्छिन्नं तत्रोपाधिरित्येवंरूपव्याप्यत्वा-सिद्ध्युन्नायकत्वमेव लक्षणं पृथिवीत्वाभावादिव्यावृत्तं कथं न तादृशव्यवहार-विषयतावच्छेदकम्? अत आह—'व्याप्यत्वासिद्धी'ति। 'सम्भवदपि' पृथिवीत्वा-भावादिव्यावृत्तं सम्भवदपि। 'न तथा' न व्यवहारविषयतावच्छेदकम्।

(१) विषयत्वव्यवच्छेद इति पाठान्तरम्। (२) 'तद्विषयोपाधित्वमेव' इति क्वचित् पाठः। (३) 'तद्व्यावृत्तलक्षणमुचितमिति' इति पाठान्तरम्। (४) पुस्तकविशेषे 'तथाविधव्यवहारविषयतावच्छेदकञ्चे'ति पाठो नास्ति।

'गौरवा'दिति,—अव्यभिचरितत्व(१) विशिष्टसामानाधिकरण्यरूपव्याप्यत्वाभावापेक्षया व्यभिचारस्य लघुत्वादिति भावः।

केचित्तु व्याप्यत्वासिद्ध्युन्नायकत्वम् स्वाव्याप्यत्वेन विशेषिताविशेषित-साधारणेन व्याप्यत्वाभावोन्नायकत्वं(२) सम्भवदपीत्यर्थः। 'गौरवा'दिति, स्वमते पृथिवीत्वाभावादावतिप्रसङ्गस्य दोषत्वसम्भवेऽपि पूर्वपक्षिणां(३) पृथिवीत्वाभावादे-रप्युपाधिव्यवहारस्य इष्टत्वात्तदतिप्रसङ्गो नोपदर्शित इति व्याचक्रुः(द)। 'अत एव' निरुक्तव्याप्यत्वासिद्ध्युन्नायकत्वस्य आकाशहेतुके द्रव्यत्वाद्यपसंग्राहकस्य व्याप्यत्वा-सिद्ध्युन्नायकव्याप्यत्वासिद्धिप्रतियोगित्वस्य गौरवेण व्यवहारविषयतानवच्छेद-कत्वादेव(४)। 'स्वाव्याप्यत्वेने'ति,—आकाशं जलत्वाव्याप्यं द्रव्यत्वाव्याप्यत्वादिति क्रमेणेति भावः।

## दीधितिः

अथैवं स्वव्यभिचारेण व्यभिचारोन्नायकत्वमेव तथास्तु लाघवात्। तच्च उक्तोपाधावप्यस्तीति चेत्, एवं तर्हि साध्याभावसाधनोभयाधिकरणवृत्त्यभाव-प्रतियोगित्वमेव तथास्तु अतिलाघवात्, अस्तु च सहार्थतृतीयाश्रयणेनास्यापि स एव फलितोऽर्थः।

एतद्रूपमात्रज्ञाने तेषां नोपाधिव्यवहार इति चेत्, तुल्यं त्वदुक्तेऽपि। अत एव शुद्धसाध्याव्यापकस्थले साध्ये व्याप्यतावच्छेदकं नियमतस्तादृशं धर्ममनुसरन्ति ते, यद्वति साध्यव्यभिचारनियमो भवत्युपाधिव्यभिचारस्य।

(१) 'चारित्वविशिष्टे'ति पाठान्तरम्। (२) क्वचित् 'व्याप्यत्वाभावोन्नायकत्व'-मित्यनन्तरं छेदः, तदनन्तरं 'सम्भवदपीति, पृथिवीत्वाभावादिसाधारणं सम्भवदपीत्यर्थ' इति पाठः। (३) 'पक्षिणा' इति पाठान्तरम्। (४) क्वचित् 'केचित्तु' इत्यादि-'व्याचक्रु'रित्यन्तग्रन्थात् पूर्वम् 'अत एवे'त्यादिः 'विषयतानवच्छेदकत्वादेव' इत्यन्तो ग्रन्थो दृश्यते।

(द) प्रकरणमिदं पृथिवीत्वाभावादिव्यावृत्तधर्मे व्यवहारविषयतावच्छेदकत्वव्यवस्थाप-नस्य, अतस्तत्र तादृशरूपान्तरस्यैव तत्खण्डनं युक्तं, न त्वन्यादृशस्येत्यस्वरसः केचित्त्वित्यनेन सूच्यते।

# दीधितिप्रकाशः

'एवम्' लाघवस्यादरणीयत्वे। 'स्वव्यभिचारेण' विशेषिताविशेषितेन। 'तथा' व्यवहारविषयतावच्छेदकम्।

'लाघवादि'ति,—यत्किञ्चिदधिकरणत्वस्य वृत्तित्व(१)सामान्यस्याप्रवेशाच्च लाघवम्। 'उक्तोपाधौ' पृथिवीत्वाभावरूपोपाधौ। 'तर्ही'ति,—यदि लाघवपुरस्काराद् व्यवहारानादरेणोक्तरूपे विषयतावच्छेदकत्वस्वीकारस्तदेत्यर्थः। 'साध्याभावे'ति,—रूपाभावद्द्रव्यत्वोभयाधिकरणं यत् वाय्वादि तन्निष्ठाभावप्रतियोगित्वाभावात् पृथिवीत्वाभावादेस्तावतापि वारणमिति भावः। 'अतिलाघवादि'ति,—उन्नायकत्वे व्याप्यत्वादेः(२) प्रवेशात् तदपेक्षया लाघवमिति भावः।

ननु 'यद्व्यभिचारित्वेने'ति—मूले उन्नायकत्वस्यैव व्यवहारविषयतावच्छेदकत्वकथनात्(३) तद्विरोध इत्यत आह—'अस्तु चे'ति। 'सहार्थे'ति - यद्व्यभिचारित्वेन सह साधनस्य साध्यव्यभिचारित्वमिति मूलार्थः(४)। तद्रूपे'ति,—तद्रूपस्य विरुद्धसाधारणत्वात् साध्यसामानाधिकरण्य(५) विशेषणेऽपि तद्रूपे व्यभिचारस्यातिस्फुटतया तज्ज्ञानस्योपाधिव्यवहाराजनकत्वादिति यदि तदा पृथिवीत्वाभावसंग्राहके त्वदुक्तेऽपि रूपे तुल्यमित्यर्थः।

---

(१) 'वृत्तित्वे'ति सर्वत्र न दृश्यते। (२) 'व्याप्त्यादिप्रवेशात्' इति पाठान्तरम्। (३) 'कल्पनात्' इति पाठान्तरम्। (४) क्वचित् 'सहार्थेति' इत्यनन्तरं 'यद्व्यभिचारित्वेन साधनस्य साध्यव्यभिचारित्वम्, यद्व्यभिचारित्वेन साध्यव्यभिचारित्वं साधनस्य इत्यत्र वैशिष्ट्यं तृतीयार्थः। तथा च यद्व्यभिचारित्वविशिष्टसाध्यव्यभिचारित्वमर्थः। वैशिष्ट्यञ्च निरूपकतासम्बन्धघटितसामानाधिकरण्यसम्बन्धेन। वृत्तित्वांशद्वयं परित्यज्य उपाध्यभावाधिकरणवृत्तित्वनिरूपकं यत् तदेव साध्याभावाधिकरणवृत्तित्वनिरूपकम्, साधनस्येत्यत्र समम्यर्थे षष्ठी, तच्च अधिकरणत्वम्, तस्यान्वयः साध्याभावाधिकरणे, तत्र उपाध्यभावाधिकरणत्वे भासमाने तद्वृत्त्यभावप्रतियोगित्वमपि उपाधौ भासते, तथा च साध्याभावसाधनोभयाधिकरणवृत्त्यभावप्रतियोगित्वमेवास्यार्थ इति मूलार्थ' इति पाठो दृश्यते। (५) 'साध्यसमानाधिकरणत्वे'ति पाठान्तरम्।

ननु पृथिवीत्वाभावादौ तेषां नोपाधिव्यवहार इत्येव कुतो निर्णीतमित्यत आह—'अत एवे'ति। यत एव व्यभिचारानुमापकतामात्रेण नोपाधिव्यवहारः, किन्तु यद्धर्मावच्छिन्नेत्यादिरूपेण(१) अत एवेत्यर्थः। 'साध्ये व्याप्यतावच्छेदकम्' साध्यनिष्ठोपाधिनिरूपितव्याप्यतावच्छेदकम्(२)। 'नियमत' इति, कदाचिदनुसरणे यथाकथञ्चिद् व्यभिचारोन्नायकतामात्रेणाप्युपाधित्वव्यवहारः प्रसज्येतेति भावः।

यद्वती'ति,—यद्वति उपाधिव्यभिचारे सति अवश्यं साध्यव्यभिचार इत्येवंरूपनियम इत्यर्थः। यथा स श्यामो मित्रातनयत्वादित्यत्र शाकपाकजत्वोपाधौ मित्रातनयत्वं तादृशो धर्मः, तद्वति शाकपाकजत्वव्यभिचारस्य श्यामत्वव्यभिचारनैयत्यात्। वायुः प्रत्यक्षः प्रमेयत्वादित्यत्र उद्भूतरूपोपाधौ बहिर्द्रव्यत्वं तादृशो(३) धर्मः, तद्वति रूपव्यभिचारस्य प्रत्यक्षत्वव्यभिचारनैयत्यात्। अन्यथा सत्ता-मित्रातनयत्वश्याम(४)मित्रातनयव्यक्तित्वमात्रविशेष्यकधीविशेष्यत्वे सति शाकपाकजत्वव्यभिचारित्वादित्यादिक्रमेण तत्र व्यभिचारानुमानसम्भवे नियमतस्तादृशधर्मानुसरणं तेषां निष्फलं स्यात्। तस्मात्तादृशधर्मानुसरणादेवं जानीमो,—यदेकाधिकरणान्तर्भावेण यद्व्यभिचारः साध्यव्यभिचारनियतः, स एवोपाधिस्तेषामभिमतो, नान्यः, अतः(५) पृथिवीत्वाभावादौ तद्वारणमुचितमेवेति भावः।

ननु महाकालान्यो घटादित्यत्र दैशिकविशेषणतया साध्यतायां कालिकेन हेतुतायां खण्डकालभेदे पृथिवीत्वाभावतुल्यतयानुपाधावतिव्याप्तिः, खण्डकालभेदाभाववति खण्डकाले कालिकतया वृत्तित्वस्य महाकालभेदाभाववन्महाकालवृत्तित्वरूपसाध्यव्यभिचारव्याप्यत्वात्। न च तद्धर्मावच्छिन्नाभावाधिकरणीभूतयत्किञ्चिदधिकरणवृत्तित्वस्य साध्यव्यभिचारव्याप्यतायामधिकरणस्यापि व्याप्यतावच्छेदककोटिप्रविष्टत्वविवक्षणादत्र नातिव्याप्तिः। अत्र तु कालिकसम्बन्धेन वृत्तित्वमात्रस्यैव महाकालवृत्तित्वव्याप्यतया वैयर्थ्येनाधिकरणस्याप्रवेशादिति वाच्यम्; तथा सति

(१) पुस्तकविशेषे 'किन्तु यद्धर्मावच्छिन्नेत्यादिरूपेण' इति पाठो नास्ति। (२) पुस्तकविशेषे 'साध्ये' इत्यादिः 'च्छेदक' मित्यन्तो ग्रन्थो नास्ति। (३) पुस्तकविशेषे 'तादृशो धर्म' इति नास्ति। (४) पुस्तकविशेषे 'श्याममित्रातनयव्यक्तित्व' इत्यंशो नास्ति। (५) 'अत' इत्यादि-'भाव' इत्यन्तपाठस्थले 'पृथिवीत्वाभावादौ तु तदभावात् तद्वारणं समुचितमेवेति भाव' इति पाठः क्वचिद् दृश्यते।

तत्रत्यसदुपाधौ महाकालान्यत्वप्रकारकप्रमाविशेष्यत्वादा(१)वव्याप्तिः, तद्व्यभिचारस्यापि व्याप्यतायां वैयर्थ्येनाधिकरणस्याप्रवेशात्। एवमेतद्रूपभिन्नं गुणत्वादित्यत्रापि एतद्रूपभेदे अनुपाधावतिव्याप्तिः, एतद्रूपभेदाभाववदेतद्रूपसमवेतत्वस्यैतद्रूपभिन्नसमवेतत्वव्याप्यत्वात्।

एतेन तादृशयत्किञ्चिदधिकरणवृत्तित्वस्य तादात्म्येन साध्यव्यभिचारव्याप्यत्वं विवक्षितम्। महाकालखण्डकालवृत्तित्वयोः स्वरूपसम्बन्धात्मकत्वेन महाकालखण्डकालस्वरूपपर्य्यवसानान्न तादात्म्येन व्याप्तिरिति परास्तम्।

## दीधितिः

वस्तुतस्तु यदभावेन यद्वदन्यत्वेन वा साधनवति साध्याभाव उन्नीयते, स उपाधिर्लाघवात्। अत एव जलत्वतेजस्त्वयोर्न तदुभयत्वेन क्वचिदप्युपाधित्वम्। 'यद्व्यभिचारित्वेने'त्यस्यापि स एवार्थः। तथाहि यद्व्यभिचारित्वेन हेतुमद्वृत्तित्वविधया साधनस्य पक्षतावच्छेदकीभूतस्य साध्याभावरूपसाध्यवत्पक्षवृत्तित्वं सिध्यतीति।

## दीधितिप्रकाशः

एतद्रूपसमवेतत्वस्य एतद्रूपभिन्नसमवेतत्वस्य चैक्येन तथाप्यवारणाद् हेतुनिष्ठस्वरूपसम्बन्धेन साध्यव्यभिचारोन्नयने उक्तव्याप्तेर्योग्यतात्वाभावाच्चेत्यस्वरसादाह—'वस्तुतस्त्वि'ति। 'यदभावेने'ति,—खण्डकालभेदाभावस्य महाकालभेदाभावासाधकत्वादशोकस्थले अतिव्याप्तिरिति।

ननु द्रव्यं सत्त्वादित्यत्र संयोगादेरुपाधित्वं न स्यात्, साधनवति गुणादौ संयोगाभावेन द्रव्यत्वाभावानुमानस्या(२)सम्भवात्, तस्य केवलान्वयितया गुणवृत्तित्वादिविशिष्टस्य तस्य हेतुतायां विशेष्यवैयर्थ्यात्। न च गुणादिवृत्तित्वविशिष्टत्वादिना संयोगाभावस्य हेतुत्वमक्षतमेवेति वाच्यम्; तथा सति गन्धवद् द्रव्यत्वादित्यत्र साधनव्यापकतया अनुपाधौ संयोगादावतिव्याप्तेः(३)। भवति हि जलं गन्धाभाववज् जलवृत्तित्वविशिष्टादित्यनुमितौ तादृश(४)विशिष्टत्वेन संयोगाभावस्यापि

(१) 'विषयत्वादावव्याप्ति'रिति पाठान्तरम्। (२) 'मानासम्भवाद्' इति पाठान्तरम्। (३) 'व्याप्तिः' इति पाठान्तरम्। (४) पुस्तकविशेषे 'तादृशे'ति नास्ति।

हेतुत्वमतो यदभावमात्रवृत्तिधर्मेणोन्नायकता वाच्या, तथा चा(ध)व्याप्तिस्तदवस्थैवेत्यत आह—'यद्व(न)दन्यत्वेने'ति। 'लाघवादि'ति,—पूर्वत्र यद्व्यभिचारसाध्यव्यभिचारयोर्वृत्तित्वद्वयप्रवेशाद् गौरवमिति भावः।

'अत एवे'ति, जलत्वतेजस्त्वोभयवतोऽप्रसिद्धया तदन्य(१)त्वस्य अप्रसिद्धत्वादिति भावः। पूर्वविवक्षायान्तु इदं स्नेहवद् द्रव्यत्वादित्यत्र जलत्वतेजस्त्वयोरुभयत्वेनोपाधित्वं स्यात्, तद्धर्मावच्छिन्नाभावाधिकरणीभूत-यत्किञ्चिदधिकरणात्मकपृथिव्यादिवृत्तित्वस्य स्नेहव्यभिचारव्याप्यस्य द्रव्यत्वे सत्त्वात् तत्रातिव्याप्तिः स्यादिति भावः।

अत्र च साध्यसमानाधिकरणत्वेनावच्छिन्नस्य धर्मिणोऽत्र कल्पेऽपि विशेषणीयत्वात् तेनैवास्यापि वारणाद् 'अत एवे'त्यादिपाठोऽप्रामाणिक इति केचित्(२)।

वस्तुतस्तु उपाधितावच्छेदकपर्याप्त्यवच्छिन्नस्य साध्यसमानाधिकरणत्वम् उपाधितावच्छेदकस्य वा साध्याधिकरणवृत्तितावच्छेदकत्वं पूर्वकल्पे(३) वक्तव्यम्। अत्र कल्पे तु उपाधितावच्छेदकाश्रयस्य साध्यसमानाधिकरणत्वम्, अवच्छेदकस्य वा साध्यसमानाधिकरणवृत्तित्वमात्रं वक्तव्यम्, न तु पर्याप्तेरपि प्रवेश(४) इति लाघवम्।

न च धूमवान् वह्नेरित्यत्र ह्रदवृत्तित्वविशिष्टद्रव्यत्ववत्त्वादिना अत्र कल्पे उपाधितापत्तिः, तदवच्छिन्नाभावस्य तदवच्छिन्नवद्भेदस्य वा वैयर्थ्येन धूमाभावाद्युन्नायकत्वाभावादिति प्रकृतलक्षणवाक्यमपि तत्परतया व्याचष्टे—'यद्व्यभिचारित्वेने' त्यादिना। हेतुमद्वृत्तित्वे'ति—साधनवान् साध्याभाववान् उपाध्यभावादित्यनु-

(१) 'तद्वदन्यत्वस्य' इति पाठान्तरम्। (२) 'पाठः प्रामादिक इति केचित्' इति पाठान्तरम्। (३) 'कल्पेऽपि' इति पाठान्तरम्। (४) 'पर्याप्तेरनुप्रवेश' इति पाठान्तरम्।

---

(ध) 'अव्याप्ति'रिति-द्रव्यं सत्त्वादित्यादौ संयोगादावव्याप्तिरित्यर्थः।

(न) यद्वदन्यत्वानुसरणेन प्रकृते संयोगवदन्यत्वस्य गुणे द्रव्यत्वाभावोन्नायकत्वाद्द्रव्यं सत्त्वादित्यत्र संयोगादौ नाव्याप्तिः। जले गन्धाभावानुन्नायकत्वाच्च न वा गन्धवद्द्रव्यत्वादित्यादौ तत्रैवातिव्याप्तिरिति भावः।

माने(क) साधनवति उपाध्यभावरूपहेतुमत्त्वभाने साध्या(१)भावरूपसाध्यवत्त्वभाने च तद्वद्(२)वृत्तित्वमपि पक्षतावच्छेदके साधने भासत इत्युपाधिव्यभिचारित्वस्यानुमितिजनकज्ञानविषयत्वरूपमुन्नायकत्वं साध्यव्यभिचारस्यानुमितिविषयत्वञ्च सम्भवतीति भावः।

## दीधितिः

अत्र च साध्यसमानाधिकरणत्वेनावच्छिन्नो धर्मो साध्यसमानाधिकरणार्द्रेन्धनादिव्यक्तेरार्द्रेन्धनत्वादिनोपाधित्वे पुनरवच्छेदको धर्म एव साध्यसमानाधिकरणवृत्तित्वेन विशेषणीयः। तेन जलह्रदत्वाभावाधिकरणायोगोलकवृत्तित्वस्य धूमव्यभिचारव्याप्यस्य वह्निवृत्तित्वेऽपि जलह्रदत्वे(३) नातिप्रसङ्गः, न वा द्रव्यत्वेन तेजस्त्वसाधने शीतस्पर्शजलत्वाद्यात्मकस्याभावेन तद्वद्वृत्तित्वेन वा द्रव्ये द्रव्यत्वे वा साध्याभावस्य व्यभिचारस्य वा साधके स्पर्शाभावजात्यभावादौ।

## दीधितिप्रकाशः

'अत्र चे'ति—अनयोः कल्पयोरित्यर्थः। 'अवच्छिन्न' इति—उपाधितावच्छेदकावच्छिन्न इत्यर्थः। 'उपाधित्वे पुन'रिति,—व्यभिचारानुमानस्य आर्द्रेन्धनत्वेन उपाधिव्यवहारस्य च समानाधिकरणव्यक्त्यैवोपपत्तेस्तस्योपाधित्वाभावेऽपि न क्षतिरिति भावः।

अत्र च यद्धर्मावच्छिन्नयद्व्यक्त्यधिकरणता साध्याधिकरणे तद्धर्मावच्छिन्नतद्व्यक्तिरुपाधिरिति पूर्वस्य, यद्धर्मावच्छिन्नाधिकरणता साध्याधिकरणे तद्धर्मावच्छिन्न उपाधिरिति द्वितीयस्यार्थः। तेन विशिष्टस्यानतिरिक्तत्वात् धूमवान् वह्नेरित्यादौ(४) ह्रदवृत्तित्वविशिष्टद्रव्यत्वत्वादिना नोपाधित्वमिति भावः।

---

(१) 'साध्ये'त्यादिः 'भाने च' इत्यन्तः सन्दर्भः सर्वत्र नास्ति। (२) 'तद्वृत्तित्वमपि' इति पाठान्तरम्। (३) 'ह्रदत्वादौ' इति क्वचित् पाठः। (४) 'वह्नेरित्यादा'वित्यनन्तरं क्वचित् पुस्तके 'ह्रदवृत्तित्वविशिष्टस्य द्रव्यत्वस्य धूमाधिकरणवृत्तित्वेऽपि धूमाधिकरणे तदधिकरणताया अभावात् द्रव्यत्वत्वादिना उपाधित्वमिति भाव' इति पाठो दृश्यते।

(क) अत्रानुमानपदं करणसाधनं भावसाधनञ्च प्रतिपत्तव्यम्। तेन करणसाधनत्वकल्पे अनुमाने हेतुमत्त्वभानं भावसाधनत्वकल्पे च साध्यवत्त्वभानमुपादाय प्रकृतग्रन्थसङ्गतिः कर्त्तव्या। अथवा आचार्य्यसम्मतं लिङ्गोपहितलैङ्गिकभानमुपादाय भावसाधनेनैवानुमानपदेन प्रकृतग्रन्थार्थ उपपादनीयः; तन्मते नियमेन साध्यस्येव साधनस्याप्यनुमितिविषयत्वात्।

प्रथम(१)विवक्षानुसारेणाह—'तेने'त्यादि। द्वितीय(२)विवक्षायान्तु ह्रदत्वाभावस्य साध्य(३)व्यभिचारितया यत्(४)किञ्चिद्विशेषण(ख) दाने च व्यर्थतया साध्याभावासाधकत्वात् तदनुसारेणाह—'न वे'ति। इदं तेजो द्रव्यत्वादित्यत्र स्पर्शसामान्याभावो जात्यभावश्च विरुद्धः, तदभावविशेषस्य शीतस्पर्शजलत्वात्मकस्य साध्याभावोन्नायकत्वसम्भवादत्रापि तद्विशेषणम्। तत्रापि (५)स्पर्शाभावस्य जन्यतेजसि स्वमते उत्पत्तिकालावच्छेदेन साध्यसमानाधिकरणत्वाज्जात्यभावपर्यन्तानुधावनम्।

'शीतस्पर्शे'ति—द्रव्यं तेजस्त्वाभाववत् शीतस्पर्शवत्त्वात् जलत्वाद्वा इत्यनुमानाकारो बोध्यः। पूर्वविवक्षायां यद्यपि व्यावृत्तिः पूर्वं दत्ता, तथापि तत्र(६) ह्रदत्वाभाववदयोगोलकवृत्तित्वस्योन्नायकतायामयोगोलकवृत्तित्वस्यैव सामर्थ्यात् ह्रदत्वाभावस्य(७) वैयर्थ्येन(८)यदभावस्योन्नायकतावच्छेदककोटिप्रविष्टत्वविवक्षणेऽपि तद्वारणसम्भवात् तदन्तर्भावेणापि तत्र व्यावृत्तिमाह—'तद्वद्वृत्तित्वेने'ति। प्रथमोपन्यस्तस्यापि चरमं व्यावृत्तिदानं तच्छब्देन तदभावस्य परामर्शे शब्दलाघवाय। एवमुत्तरत्रापि यथायथं बोध्यम्।

इदञ्च प्रौढिवादेनोक्तम्(A)। तथा(९) विवक्षायां महाकालान्यो घटादित्यत्र कालिकसम्बन्धेन हेतुतायां(१०) सदुपाधावव्याप्तिः, कालिकसम्बन्धेन वृत्तित्वमात्रस्यैव साध्यव्यभिचारव्याप्यतया उपाध्यभावस्य वैयर्थ्येनाप्रवेशादित्युक्तत्वादिति। द्रव्यत्वं तेजस्त्वव्यभिचारि शीतस्पर्शवद्वृत्तित्वात् जलत्ववद्वृत्तित्वाद्वेत्यनुमानशरीरं बोध्यम्। जात्यभावादौ न वातिव्याप्तिरित्यनुषङ्गेणान्वयः।

(१) 'प्रथमलक्षणविवक्षानुसारेणाह' इति पाठान्तरम्। (२) 'द्वितीयलक्षणविवक्षायान्तु' इति पाठान्तरम्। (३) पुस्तकविशेषे 'साध्य' इति नास्ति। (४) 'यत्' इति सर्वत्र नास्ति। (५) 'जन्यस्पर्शाभावस्य' इति पाठान्तरम्। (६) 'तत्र' इति पाठो न सार्वत्रिकः। (७) क्वचित् 'ह्रदत्वाभावस्य वैयर्थ्येन अयोगोलकवृत्तित्वस्यैव सामर्थ्यात्' इति पौर्वापर्य-व्यतिक्रमेण पाठो दृश्यते। (८) 'वैयर्थ्येनाप्रवेशात्' इति पाठान्तरम्। (९) 'तथाविधविवक्षाया'मिति पाठान्तरम्। (१०) 'महाकालान्यत्वप्रकारकप्रमाविषयत्वादौ सदुपाधा'विति पाठान्तरम्।

(ख) 'यत्किञ्चिद्विशेषणे'ति-निर्धूमवृत्तित्वादिविशेषणेत्यर्थः।
(A) 'प्रौढिवादेने'त्यभ्युपगमवादेनेत्यर्थः।

## दीधितिः

द्रव्यत्वादिना तु कम्बुग्रीवादिमत्त्वादौ साध्ये स्वव्यभिचारेण स्वाभावेन वा तद्वति वा व्यभिचारस्य साध्याभावस्य वा साधकं घटत्वादिव्यभिचारित्व-मुपाधिरेव। घटत्वादेस्तदभावस्य वा गमकत्वेऽपि धूमप्रागभाववद्वैयर्थ्यम्।

## दीधितिप्रकाशः

ननु इदं कम्बुग्रीवादिमद् द्रव्यत्वादित्यत्र घटत्वव्यभिचारित्वे वक्ष्यमाण-लक्षणाक्रान्ते(१) लक्ष्यतावच्छेदकस्याव्याप्तिः, तद्व्यभिचारित्वस्य तदभावस्य वा वैयर्थ्येन साध्यव्यभिचारे साध्याभावे वा असाधकत्वात्। तथा हि द्रव्यत्वं कम्बुग्रीवादिमत्त्वव्यभिचारि घटत्वव्यभिचारित्वव्यभिचारित्वाद् गगनपरिमाणवदित्यत्र घटत्वादित्यस्यैव सामर्थ्ये अधिकस्य स्वरूपासिद्धिवारकतया वैयर्थ्यात्। तथा द्रव्यं कम्बुग्रीवादिमत्त्वाभाववद् घटत्वव्यभिचारित्वाभावाद् गगनवदित्यत्र घटत्वाभावादित्यस्यैव सार्थक्ये(२) अधिकस्य वैयर्थ्यमित आह—'द्रव्यत्वा-दिने'ति। घटत्वव्यभिचारित्वं घटत्वाभाववति संयोगेन समवायेन वा वृत्तित्वम्। घटोपर्य्युत्पन्नविनष्टघटस्यापि घटत्वाभाववत्यधस्तनघटावयवे(ग)संयोगेन वृत्तित्वान्न साध्याव्यापकत्वम्। संयोगेन गगनादेर्वृत्तिमत्त्वे तु तस्य साधनव्यापकतया घटत्वाभाववत्समवेतत्वमेवोपाधिरिति ध्येयम्।

'घटत्वादे'रिति व्यभिचारसाधनमभिप्रेत्य। यद्यपि घटत्वव्यभिचारित्वा-भावाधिकरणीभूतगगनवृत्तित्वादेस्तादृप्येण हेतुतायां घटत्वादेरप्रवेशान्न वैयर्थ्य-सम्भावना, तथापि प्रौढिवादेन यदभावस्यापि व्याप्यतावच्छेदककोटिप्रवेशमभ्युपेत्य वैयर्थ्यं समाहितमिति ध्येयम्।

(१) 'लक्षणाक्रान्तलक्ष्यतावच्छेदकस्य' इति पाठान्तरम्। (२) 'सार्थकत्वे' इति पाठान्तरम्। अत्र 'सामर्थ्ये' इति पाठः सम्यक् प्रतिभाति।

(ग) अत्र घटत्वाभाववति भूतलादावित्यप्युपलक्षणेन बोध्यम्। अन्यथा सहजलभ्यं तादृशभूतलादिकमपहाय तावन्मात्रस्थलस्य दुरूहस्यानुसरणेन ग्रन्थस्य न्यूनतापातात्। अत एव गदाधरेण 'घटत्वाभाववति भूतलादौ घटोपर्य्युत्पन्नविनष्टघटव्यक्तेरधस्तनघटावयवे संयोग-सम्बन्धेन' इत्यादिकमभिहितम्।

'तदभावस्ये'ति साध्याभावसाधनमभिप्रेत्य। 'धूमप्रागभाववह्नि'रिति,—न च तथापि घटत्वव्यभिचारित्वव्यभिचारित्वे घटत्वव्यभिचारित्वत्वस्य सत्त्वात्(घ) तद्रूपावच्छिन्नस्यैव व्याप्यतायामधिकस्य वैयर्थ्यमेवेति वाच्यम्, संयोगेन घटत्वव्यभिचारित्वस्योपाधितायामुपाध्यभाववति हेतुतावच्छेदकसम्बन्धेन(१) समवायेन वृत्तित्वप्रवेशादेव(ङ) वैयर्थ्याभावात्।

समवायेन घटत्वव्यभिचारित्वस्योपाधितायान्तु घटत्वव्यभिचारित्वस्य घटत्वव्यापकतया तदभावस्याखण्डत्वे तद्व्यक्तिमद्वृत्तित्वे(२) हेतौ घटत्वव्यभिचारित्वाप्रवेशान्न वैयर्थ्यमिति। वस्तुतस्तु(च) पूर्वकल्पे यदभावस्य व्याप्यतावच्छेदककोटिप्रवेश एव न विवक्षितः, घटत्वव्यभिचारित्वत्वेनाप्युपाधिव्यभिचारित्वस्य हेतुतायामुपाधित्वानपायादित्येव समाधानं बोध्यम्।

## दीधितिः

न चाभावस्यानुपाधितापत्तिः, प्रतियोगिनस्तद्वद्वृत्तित्वस्यैव वा हेतुत्वादिति वाच्यम्; तदप्रवेशेऽपि(३) वस्तुतो यस्तदभावः, तस्य तद्वद्वृत्तित्वस्य च हेतुत्वानपायात्। तदभावाभाववद्वृत्तित्वेनोपस्थितावपि तद्वद्वृत्तित्वेनानुपस्थितेर्व्यभिचारसाधने न वैयर्थ्यमित्यपि वदन्ति।

---

(१) 'हेतुतावच्छेदकेन समवायेन' इति पाठान्तरम्। (२) 'वृत्तित्वहेतौ' इति पाठान्तरम्। (३) 'तस्याप्रवेशेऽपि' इति पाठान्तरम्।

(घ) घटत्वव्यभिचारित्व-घटत्वव्यभिचारित्वव्यभिचारित्वयोः गगनपरिमाणादिवृत्तित्वात्मकत्वेन न तयोर्भेद इति घटत्वव्यभिचारित्वव्यभिचारित्वे घटत्वव्यभिचारित्वत्वस्य सत्त्वं सङ्गच्छत इति ध्येयम्।

(ङ) 'समवायेन वृत्तित्वप्रवेशा'दिति—घटत्वव्यभिचारित्वाभाववद्वृत्तित्वरूपस्य घटत्वव्यभिचारित्वव्यभिचारित्वघटकान्तिमवृत्तित्वस्य समवायसम्बन्धावच्छिन्नस्य प्रवेशादित्यर्थः। तथा हि घटत्वाभावाधिकरणनिरूपितसंयोगसम्बन्धावच्छिन्नवृत्तित्वाभाववन्निरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वात्मक—घटत्वव्यभिचारित्वव्यभिचारित्वस्य रूपादिवृत्तित्वात्मकतया घटत्वाभाववन्निरूपितसंयोगसम्बन्धावच्छिन्नवृत्तित्वरूपघटत्वव्यभिचारित्वेन नैवाभेदः सम्भवतीति भावः।

(च) पारिभाषिकवैयर्थ्यविरहेऽपि अनतिप्रयोजनकत्वलक्षणं वैयर्थ्यं दुर्वारमित्यत आह 'वस्तुतस्त्वि'ति।

# दीधितिप्रकाशः

यद्व्यभिचारित्वे यदभावे वा यद्धर्मावच्छिन्नस्य प्रतियोगितया व्याप्यतावच्छेदककोटिप्रवेश एव तद्धर्मावच्छिन्नस्योपाधित्वमित्याशयं मत्वा शङ्कते 'न चे'ति। धूमवान् वह्नेरित्यादावयोगोलकत्वाभावो नोपाधिः स्यात्(१), तस्योन्नायकतायामप्रवेशादित्यर्थः।

साध्याभावस्य(२) उन्नायकतायां प्रतियोगिनो व्यभिचारस्य उन्नायकतायां तद्वद्वृत्तित्वस्यैव हेतुत्वादिति। 'तस्य' यदभावस्य। 'वस्तुतः' वस्तुगत्या। व्यभिचारसाधने यदभावत्वप्रवेशेऽपि वैयर्थ्याभावं केषाञ्चित् सम्मतं(३) दर्शयति 'तदभावाभाववद्वृत्तित्वेने'त्यादिना(४)। अयोगोलकत्ववद्वृत्तित्वस्यानुपस्थितावयोगोलकत्वाभावाभाववद्वृत्तित्वस्य व्यभिचारोन्नायकतायां हेतुत्वेन वैयर्थ्यमित्यर्थः(५)।

'व्यभिचारसाधन' इति,—साध्याभावसाधने तु हेतुतावच्छेदकरूपेणोपस्थितत्वाद् वैयर्थ्यमेवेति। वदन्तीत्यस्वरसः, तद्वीजन्तु महाकालान्यो घटादित्यत्र व्यभिचारसाधने केवलवृत्तित्वस्यैव व्याप्यतया उपाधेस्तदभावस्य चाप्रवेशे मदुक्तमेव समाधानम्। अभावस्य च क्वचिद् व्याप्यतावच्छेदकत्वोक्तिस्तु प्रौढिवादेनेत्येव सारम्।

कम्बुग्रीवादिमत्त्वादेर्यथा न प्रतियोगितावच्छेदकत्वं तथा व्याप्यतावच्छेदकत्वमपि(छ), तत्र समानाधिकरणलघुधर्माप्रवेशेऽपि व्याप्यतावच्छेदकत्वे तस्य वैयर्थ्यमेवेत्यप्यस्वरसमाहुः(ज)।

(१) 'नोपाधिः स्या'दित्यनन्तरं 'तस्योन्नायकतायामप्रवेशादित्यर्थ' इति पाठः पुस्तकविशेषे न दृश्यते। (२) 'साध्याभावोन्नायकतायाम्' इति पाठान्तरम्। (३) 'मते' इति पाठान्तरम्। (४) 'तदभावेत्यादिना' इति पाठान्तरम्। (५) पुस्तकविशेषे वृत्तित्वेनेत्यादिना' इत्यनन्तरं' 'अयोगोलकत्वेत्यादिः' 'वैयर्थ्यमित्यर्थ' इत्यन्तः पाठो न दृश्यते।

(छ) लघुधर्मस्य अवच्छेदकत्वेनैवोपपत्त्या लघुसमनियतगुरुधर्मे लघुधर्माघटितेऽपि अवच्छेदकत्वस्यानभ्युपगमादिति भावः।

(ज) आहुरित्यनेनास्वरसः सूच्यते। स च यत्र नियमतो लघुधर्मस्योपस्थितिस्तत्रैव गुरुधर्मे नावच्छेदकत्वम्, न तु सामान्यतो लघुधर्माघटितस्य गुरुधर्मस्य लघुसमनियतस्यावच्छेदकत्वबाध इत्येवंस्थितिमूलकः।

## तत्त्वचिन्तामणिः

लक्षणन्तु पर्य्यवसितसाध्यव्यापकत्वे सति साधनाव्यापकत्वम्। यद्धर्मावच्छेदेन साध्यं प्रसिद्धम्, तदवच्छिन्नं पर्य्यवसितं साध्यम्। स च धर्मः क्वचित् साधनमेव, क्वचिद् द्रव्यत्वादिः, क्वचिन्महानसत्वादिः। तथा हि समव्याप्तस्य विषमव्याप्तस्य वा साध्यव्यापकस्य व्यभिचारेण साधनस्य साध्यव्यभिचारः स्फुट एव, व्यापकव्यभिचारिणस्तद्व्याप्यव्यभिचारनियमात्।

साधनावच्छिन्नपक्षधर्मावच्छिन्नसाध्यव्यापकयोर्व्यभिचारित्वेन साधनस्य साध्यव्यभिचारित्वमेव। यथा ध्वंसस्यानित्यत्वे साध्ये भावत्वस्य, वायोः प्रत्यक्षत्वे साध्ये उद्भूतरूपवत्त्वस्य च; विशेषणाव्यभिचारिणि साधने विशिष्टव्यभिचारस्य विशेष्यव्यभिचारित्वनियमात्। अत एव नार्थान्तरम्(१)।

## दीधितिः

लक्षणमाह 'पर्य्यवसिते'ति(२)। पर्य्यवसितपदार्थमाह 'यद्धर्मेति, यद्धर्मवतीत्यर्थः। नन्वेवं सद्धेतौ सपक्षैकदेशवृत्तिधर्मे अतिप्रसङ्गः। अथ यद्धर्मावच्छेदेन साधनवति साध्यं प्रसिद्धम्, तद्धर्मावच्छिन्नसाध्यव्यापकत्वम्, साध्यसाधनसम्बन्धव्यापकत्वमिति यावत्। विरुद्धमात्रे चोपाधिविरहेऽपि न क्षतिः। लक्ष्यतावच्छेदके च साध्यसमानाधिकरणत्वेन(३) साधनं तादृशवृत्तित्वेन वा साधनतावच्छेदकं विशेषणीयम्।

## दीधितिप्रकाशः

'यद्धर्मावच्छेदेने'त्यत्र यद्धर्मस्य अवच्छेदकत्वम् अन्यूनवृत्तित्वमनतिरिक्तवृत्तित्वं अन्यूनानतिरिक्तवृत्तित्वं(४) स्वरूपसम्बन्धविशेषो वा न सम्भवति, स श्यामो मित्रातनयत्वादित्यादौ मित्रातनयत्वादीनां तथात्वासम्भवादत आह— 'यद्धर्मवती'ति।

(१) 'नार्थान्तरत्वम्' इति पाठान्तरम्। (२) 'सितेत्यादि' इति पाठान्तरम्। (३) 'सामानाधिकरण्येन' इति पाठान्तरम्। (४) पुस्तकविशेषे 'अन्यूनानतिरिक्तवृत्तित्व'मित्यंशो न दृश्यते।

'एवम्' यद्धर्मवति साध्यं प्रसिद्धं तदवच्छिन्नसाध्यव्यापकत्वस्य विवक्षणे। 'सपक्षे'ति,—वह्निमान् धूमादित्यत्र महानसत्वावच्छिन्नवह्निव्यापकव्यञ्जनवत्त्वादा-वित्यर्थः। 'अथे'ति,—अत्रावच्छेदकत्वं व्यापकत्वम्, महानसत्वञ्च न धूमवद्-वृत्तित्वविशिष्टवह्निव्यापकम्, तेन न व्यञ्जनवत्त्वादावतिप्रसङ्ग इति भावः।

साधनवद्वृत्तित्वविशिष्टसाध्यव्यापकीभूतधर्मावच्छिन्नसाध्यव्यापकत्वापेक्षया साधनविशिष्टसाध्यव्यापकत्वस्यैव लघुत्वात् तदेवाह—'साध्यसाधनसम्बन्धे'ति, साधनविशिष्टसाध्येत्यर्थः(क)।

नन्वेवं विरुद्धस्थलीयोपाधावव्याप्तिः, तत्र साध्यसाधनसम्बन्धा(ख)प्रसिद्धे-रत आह—'विरुद्धमात्रे चे'ति। मात्रपदं कृत्स्नार्थकम् यथा अवृत्तिगगनादौ विरुद्धे उपाध्यभावे न क्षतिस्तथा विरुद्धान्तरेऽपीत्यस्य सूचनाय।

नन्वेवं लक्ष्यतावच्छेदकस्य तत्साधारण्यात्तत्र लक्षणाभावेऽव्याप्ति(१)रत आह—'लक्ष्यतावच्छेदके चे'ति। धूमवान् वह्नेरित्यत्र धूमसमानाधिकरणवह्ने-र्धूमव्याप्यत्वात् तत्र व्यभिचारोन्नायकत्वं न सम्भवती(२)त्यतः 'तादृशवृत्तित्वेने'ति, साध्यसमानाधिकरणवृत्तित्वेनेत्यर्थः।

## दीधितिः

साधनव्यापकीभूतधर्मावच्छिन्नसाध्यव्यापकत्वं वा विवक्षितम्। विरुद्धेऽपि साधनव्यापकेनान्ततोऽन्यतरत्वादिनावच्छिन्नस्य साध्यस्य व्यापकत्वमस्त्ये-वोपाधीनाम्।

प्रमेयत्वादिना च वाय्वादौ प्रत्यक्षत्वे साध्ये उद्भूतरूपवत्त्वादिकं नोपाधिः, लक्ष्यतावच्छेदकवाक्यस्थप्रयोजकत्ववाचितृतीयाबलात् यद्व्यभिचारस्थले साधनस्य साध्यव्यभिचारनियम इत्यर्थे पर्यवसानात्।

(१) 'अव्याप्तिरेवेत्यत' इति पाठान्तरम्। (२) 'व्यभिचारोन्नायकत्वमसम्भवी'ति पाठान्तरम्।

(क) अत्र वैशिष्ट्यं सामानाधिकरण्यसम्बन्धेन बोध्यम्।

(ख) 'साध्यसाधनसम्बन्धे'त्यस्य साधनविशिष्टसाध्येत्यर्थस्य स्वयमेव विवरणात् सामानाधिकरण्यसम्बन्धेन साधनविशिष्टसाध्याप्रसिद्धेरित्यर्थः।

## दीधितिप्रकाशः

ननु साध्यसाधनसम्बन्धव्यापकत्वमपि यथाश्रुतशब्दान्न लभ्यत इति साधनवतीतिपदपूरणेन तदर्थलाभ इति यद्धर्मपदस्य साधनव्यापकधर्मपरतया विरुद्धस्थलीयोपाधिसंग्रहसम्भवे तदसंग्रहोऽन्याय्य इत्यत आह—'साधने'ति। सद्धेतौ तु साधनव्यापकीभूतधर्मावच्छिन्नसाध्यव्यापकस्य साधनव्यापकत्वनियमात्(१) सपक्षैकदेशवृत्तिधर्मे नातिप्रसङ्ग इति भावः। 'अन्तत' इति,—तादृशधर्मान्तरा(२)स्फूर्त्तावपि अन्यतरत्व(ट)मादायैव लक्षणगमनमिति भावः।

ननु वायुः प्रत्यक्षः प्रमेयत्वादित्यत्र प्रमेयत्वव्यापकधर्मावच्छिन्नप्रत्यक्षत्वस्य प्रत्यक्षमात्र एव सत्त्वात् तद्व्यापकतया नोद्भूतरूपवत्त्वमुपाधिः स्यादत आह—'प्रमेयत्वादिने'ति। आदिना(३)द्रव्यत्वादिरूपव्यतिरेकिधर्मपरिग्रहः(४)।

लक्ष्यतावच्छेदकस्य तत्साधारण्यं वारयति 'लक्ष्यतावच्छेदके'ति। 'प्रयोजकत्ववाची'ति,—प्रयोजकत्वञ्चात्र तादृप्येण(ठ) व्याप्यत्वम्। तदेव दर्शयति 'यद्व्यभिचारस्थल'(ड) इति(५)। उद्भूतरूपव्यभिचारस्य च न तादृशप्रयोजकत्वम्; आत्मादौ प्रमेयत्वस्य तत्सत्त्वेऽपि प्रत्यक्षत्वव्यभिचाराभावादिति।

(१) 'नियमात्' इत्यनन्तरं 'न' इति 'नातिप्रसङ्ग' इत्यत्र च 'अतिप्रसङ्ग' इति पाठः केषाञ्चित् सम्मतः। (२) 'धर्मास्फूर्त्तावपि' इति पाठान्तरम्। (३) 'आदिपदात्' इति पाठान्तरम्। (४) 'धर्मग्रह' इति पाठान्तरम्। (५) 'यद्व्यभिचारस्थल इती'त्यनन्तरं 'उद्भूतरूपे'त्यतः पूर्वं 'यद्व्यभिचारनिरूपकं' यद् यत् तत्साध्यव्यभिचारनिरूपकं तद्वृत्तित्वं साधनस्येत्यर्थ' इत्यधिकपाठो दृश्यते।

(ट) 'अन्यतरत्व'मिति साध्यवत्साधनवदन्यतरत्वमित्यर्थः। अन्यतरत्वमित्युपलक्षणं, तेन तदुभयविशेष्यकभीविशेषविशेष्यत्वस्यापि परिग्रहः। अत एव दीधितौ 'अन्यतरत्वादिने'त्यत्र आदिपदमुपात्तम्।

(ठ) 'तादृप्येणे'ति यद्व्यभिचारत्वेनेत्यर्थः।

(ड) अत्र भट्टाचार्याः—'यद्व्यभिचारस्थले साधनस्य साधननिष्ठयद्व्यभिचारनिरूपकाधिकरण इत्यर्थः। साध्यव्यभिचारनियमः साध्यव्यभिचारनिरूपकत्वनियमः। तथा च प्रमेयत्वादिनिष्ठोद्भूतरूपाद्व्यभिचारनिरूपकाधिकरणात्मगुणादौ साध्यसत्त्वेन तद्व्यभिचारनिरूपकत्वाभावादुक्तस्थलीयोद्भूतरूपादेर्न तादृशत्वमिति भाव' इति व्याचक्षते।

## दीधितिः

मैवम्; जनकत्वेन वह्नौ कार्य्यानुकूलेत्याद्यात्मकशक्तिसाधने वह्निरिन्द्रियाप्रत्यक्षत्वस्योपाधेर्ग्रन्थकृतैवोद्भावयिष्यमाणत्वात्, तस्य च गुरुत्वात्मकसाध्यस्य साधनस्य चाधिकरणे घटादाववृत्तेरुक्त(१)रूपाभावादेवंविधबहुलग्रन्थविरोधात्, दूषकताबीजस्य तत्रापि सम्भवाच्च(२)।

## दीधितिप्रकाशः

वह्निर्दाहानुकूलधर्मसमवायी दाहजनकत्वादित्यनुमाने गुरुत्वादेर्दाहानुकूलत्वाभावान्नोक्तरूपावच्छिन्नसाध्याव्यापकत्वमतोऽनुमानाकारं दर्शयति 'जनकत्वेने'ति। तथा च वह्निः स्वकार्य्यानुकूलाद्विष्ठातीन्द्रिय(३)धर्मसमवायी(४) जनकत्वादित्यनुमाने जनकत्वावच्छिन्नस्य गुरुत्वात्मकसाध्यस्य घटादौ सत्त्वात् तदव्यापकतया नोपाधित्वं स्यादित्यर्थः। वह्निरिन्द्रियाप्रत्यक्षत्वस्य अगुरुत्वावच्छिन्नसाध्यव्यापकस्य। स्थितिस्थापकस्य पृथिवीमात्रवृत्तित्वमिति मतेनेदम्, तेनालोकादौ न साध्याव्यापकतेति।

'ग्रन्थकृतैवे'ति,—अन्येनोद्भावने ग्रन्थकृतां न तदभिप्रेतमित्यपि(४) तत्रोत्तरं स्यादिति तन्निराकरणार्थमिदमुक्तम्(५)। ग्रन्थविरोधस्य लक्षणया(६)ऽन्योपाधिपरतया समुद्धर्त्तु(७)शक्यत्वादाह—'दूषकते'ति। जनकत्वं कार्य्यानुकूलाद्विष्ठातीन्द्रिय(८)धर्मव्यभिचारि अगुरुणि(९) वह्निरिन्द्रियाप्रत्यक्षत्वव्यभिचारित्वादित्यादिरीत्या व्यभिचारोन्नायकत्वस्येत्यर्थः(१०)।

---

(१) 'वृत्तित्वादुक्त' इति पाठान्तरम्। (२) 'सद्भावाच्च' इति पाठान्तरम्। (३) 'कार्य्यानुकूलातीन्द्रिये'ति क्वचित् पाठः। (४) 'तन्न सम्मतमित्यपि' इति पाठान्तरम्। (५) 'करणार्थमुक्तम्' इति पाठान्तरम्। (६) 'लक्षणादिना' इति पाठान्तरम्। (७) 'व्याख्यातुमिति' पाठान्तरम्। (८) 'कार्य्यानुकूलातीन्द्रिये'ति पाठान्तरम्। (९) 'अगुरुणि तेजसि' इति पाठान्तरम्। (१०) 'यकत्वमस्त्येवेत्यर्थः' इति पाठान्तरम्।

---

(४) शक्तिरूपपदार्थान्तरवत् तस्य वह्न्यादिकार्य्यदाहाद्यनुकूलत्वसिद्धिरप्युद्देश्येति स्वकार्य्यानुकूलत्वं धर्मविशेषणम्। वह्निकार्य्यदाहानुकूलाद्दृष्टवदात्मसंयोगेन सिद्धसाधननिवर्त्तनार्थमद्विष्ठत्वविशेषणम्। दाहानुकूलेनोष्णस्पर्शेन सिद्धसाधननिवारणार्थमतीन्द्रियेति विशेषणम्।

## दीधितिः

अत्राहुः, यद्धर्मावच्छिन्नसाध्यव्यापकत्वं तद्धर्मावच्छिन्नसाधनाव्यापकत्वम्। अवच्छेदकत्वञ्च सामानाधिकरण्येन। न च तद्घटोत्पत्तिकालीनत्वसामानाधिकरण्यविशिष्टरूपवति तद्घटे अवर्त्तमानमपि तद्घटान्यत्वं तद्व्यापकम्, येन पृथिवीत्वेन रूपे साध्ये तद्घटोत्पत्तिकालावच्छिन्नरूपव्यापकतयोपाधिः स्यात्।

## दीधितिप्रकाशः

'यद्धर्मे'ति,—महानसत्वावच्छिन्नवह्निव्यापकस्य व्यञ्जनवत्त्वादेर्महानसत्वावच्छिन्नधूमव्यापकत्वान्नोपाधित्वमिति भावः।

ननु घटो रूपवान् पृथिवीत्वादिति सद्धेतौ तद्घटोत्पत्तिकालावच्छेदेन तद्घटे रूपस्याभावात्(१)पृथिवीत्वस्य सत्त्वाच्च तद्घटोत्पत्तिकालीनत्वावच्छिन्नरूपव्यापकस्य तद्घटान्यत्वस्य तद्घटोत्पत्तिकालीनत्वावच्छिन्नपृथिवीत्ववति तद्घटेऽवर्त्तमानस्योपाधित्वं स्यादत आह—'अवच्छेदकत्वञ्चे'ति। तथा च यद्धर्मसामानाधिकरण्यविशिष्टत्वमेव यद्धर्मावच्छिन्नत्वम्, न तु स्वरूपसम्बन्धरूपं विवक्षितमिति भावः।

## दीधितिः

स्वानधिकरणीभूतसाधनाधिकरणवृत्तिधर्मावच्छिन्नसाध्यव्यापकत्वं वा। यद्यपि शुद्धसाध्यव्यापकस्थले अवच्छिन्नसाध्यत्वेन न व्याप्यता, तथापि तद्धर्माधिकरणीभूतसाध्याधिकरणनिष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वादिरूपं तद्व्याप्यत्वमक्षतमेव। गुणत्वादिना प्रत्यक्षत्वे साध्ये उद्भूतरूपवत्त्वं द्व्यणुकजन्यत्वाद्यवच्छिन्नसाध्यव्यापकं भवत्येवोपाधिः।

## दीधितिप्रकाशः

ननु एकस्मिन्नेवोपाधौ व्याप्यतावच्छेदकधर्मभेदाल्लक्षणभेदः स्यादतस्तादृशधर्मान् स्वानधिकरणीभूतसाधनाधिकरणवृत्तिधर्मत्वेनानुगमय्य साधनाव्यापकत्वविशेषणपरित्यागेन लाघवञ्च हृदि निधाय लक्षणमाह—'स्वानधिकरणे'ति। स्वम् उपाधित्वेनाभिमतमार्द्रेन्धनवत्त्वादि; तदनधिकरणीभूतं यत् साधनाधिकरणं, तद्वृत्तीत्यर्थः(ण)।

---

(१) 'तद्घटरूपस्याभावा'दिति पाठान्तरम्।

(ण) वह्निमान् धूमादित्यादिसद्धेतुस्थले व्यञ्जनवत्त्वादेरपि साधनाधिकरणवृत्तिमहानसत्वावच्छिन्नसाध्यव्यापकत्वादतिप्रसङ्गप्रसङ्गभङ्गाय भूतान्तं साधनाधिकरणविशेषणम्।

सद्धेतौ तु स्वानधिकरणीभूतं यत् साधनाधिकरणं तद्वृत्तिधर्मावच्छिन्न-साध्यस्य स्वानधिकरणेऽपि तत्साधनाधिकरणे अवश्यं सत्त्वान्न तद्व्यापकत्वमिति भावः।

व्याप्तिनिरूपकत्वं व्यापकत्वमित्यभिप्रायेण शङ्कते(१)'यद्यपी'ति(२)। केचित्तु अवच्छिन्नसाध्यव्यापकत्वं अवच्छिन्नसाध्यसमानाधिकरणाभावप्रतियोगितावच्छेदक-त्वत्वावच्छिन्नाभाववान् यो धर्मस्तद्वत्त्वम्। तथा च लाघवात् साध्यघटित-धर्मस्यैवावच्छेदकत्वम्, नावच्छिन्नत्वघटितस्य। धूमसाध्यके अखण्डाभावा-द्वैयर्थ्येऽपि एतद्धूमसाध्यके आर्द्रेन्धनादावव्याप्तिः, लाघवेन तस्यैवावच्छेदकत्वा-दित्यत आह 'यद्यपी'ति। सिद्धान्तयति 'तथापी'ति। तथा च अन्यतरत्वावच्छिन्न-साध्याधिकरणं यद्, यत् तद्वृत्त्यभावप्रतियोगितावच्छेदकत्वत्वमेवावच्छेदकम्। अधिकरणपरिचयार्थं तद्धर्मोपादानमिति। धूमस्यार्द्रेन्धनव्याप्यताया(३) धूमत्वेनैवावच्छेदादार्द्रेन्धनादावव्याप्तिरिति(४) भावः।

'तद्धर्मे'ति तादृशावच्छेदकधर्मेत्यर्थः। अत्र च तादृशाभावप्रतियोगिता विशिष्योपादेयाः, तेन (५)तद्रूपवान् द्रव्यत्वादित्यादौ तद्रू(६)पाधिकरणनिष्ठाभाव-प्रतियोगितावच्छेदकत्वत्वस्यैवावच्छेदकतया यत्किञ्चिद्धर्मावच्छिन्नतद्रूपाधिकरण-घटितस्य गौरवादनवच्छेदकत्वेऽपि नाव्याप्तिः।

सखण्डोपाधेरार्द्रेन्धनादेस्तादृशान्योन्याभावप्रतियोगितानवच्छेदकत्वासम्भवा-दाह(७)—'आद्ये'ति। तथा च उपाधितावच्छेदके तादृशान्योन्याभावप्रतियोगिता-वच्छेदकतानवच्छेदकत्वं(८) विवक्षितमिति भावः।

नन्वेवं(९) प्रत्यक्षो गुणत्वादित्यत्रोद्भूतरूपवत्त्वं नोपाधिः स्यात्; तस्य शुद्धसाध्याव्यापकतया बहिर्द्रव्यत्वावच्छिन्नसाध्यव्यापकतयोपाधित्वे बहिर्द्रव्यत्वस्य

(१) 'व्यापकत्व'मित्यनन्तरं 'यद्यपी'त्यतः पूर्वं क्वचित् पुस्तके 'अभिप्रेत्याशङ्कत' इत्येतन्मात्रपाठो दृश्यते। (२) 'यद्यपी'त्यनन्तरं 'केचित्तु' 'इत्यारभ्य' 'तद्धर्मोपादान-मिति' इत्यन्तग्रन्थः पुस्तकविशेषे नोपलभ्यते। (३) 'व्याप्यतायाम्' इति पाठभेदः। (४) 'आर्द्रेन्धनाद्यव्याप्तिरिति' इति पाठान्तरम्। (५) 'एतद्रूपवान्' इति पाठान्तरम्। (६) 'एतद्रूपे'ति पाठान्तरम्। (७) 'योगितावच्छेदकत्वादाह' इति पाठान्तरम्। (८) 'प्रतियोगितानवच्छेदकत्वं विवक्षितमिति' इति पाठान्तरम्। लेखकप्रमाद एवायम्। (९) 'नन्वयम्' इति पाठान्तरम्।

स्वानधिकरणीभूतसाधनाधिकरणवृत्तित्वाभावेन तदादायोक्तलक्षणस्य तत्राभावादत आह—'गुणत्वादिने'ति । 'द्व्यणुकजन्यत्वे'ति,—उद्भूतरूपानधिकरणं साधनाधिकरणं द्व्यणुकगुणः, तद्वृत्ति द्व्यणुकजन्यत्वम् (त), तदवच्छिन्नप्रत्यक्षत्वं त्रसरेणौ, तत्र उद्भूतरूपमिति लक्षणसमन्वयः । बहिर्द्रव्यत्वमादायैवोद्भूतरूपे लक्षणगमनमिति नियमाभावादिति भावः ।

केचित्तु शुद्धसाध्याव्यापके साधनावच्छिन्नं पक्षधर्मावच्छिन्नं वा साध्यं प्रति व्यापकतयोपाधित्वम्, तथा च घटः प्रत्यक्षो गुणत्वादित्यस्य तथात्वाभावान्नोद्भूतरूपमुपाधिः स्यादत आह—'गुणत्वादिने'ति । 'द्व्यणुकजन्यत्वे'ति,—तादृशयत्किञ्चिद्धर्मावच्छिन्नसाध्याव्यापकत्वेनैव नियमो, न तु तादृशधर्मस्य साधनादिरूपत्वेनापीति भाव इति व्याचक्षुः ।

## दीधितिः

एवञ्च यत्रैव स्वानधिकरणे साधनस्य साध्यव्यभिचारः, यत्र च स्वाधिकरणे साध्यम्, तदुभयमात्रवृत्तिर्यो धर्मस्तद्वति तद्(१) व्यभिचारेण साधने साध्यव्यभिचारः साधनवति वा तद्धर्मवत्त्वे सति तदभाववत्त्वेन साध्याभावः साधनीयः ।

## दीधितिप्रकाशः

उक्तरूपोपाधिज्ञाने व्यभिचारानुमानमपि(२) सुकरं भवतीत्याह—'एवञ्चे'ति । व्यभिचारानुमानप्रकारमाह 'यत्रैवे'ति(३) । वायुः प्रत्यक्षो द्रव्यत्वादित्यत्रोद्भूतरूपवति परमाणौ(४) द्रव्यत्वस्य साध्यव्यभिचारसत्त्वात् परमाणु(५)घटान्यतरस्मिन् द्रव्यत्वस्योद्भूतरूपव्यभिचाराभावादुपाधिव्यभिचारस्य हेतोः स्वरूपा-

(१) पुस्तकविशेषे 'तद्व्यभिचारेणे'त्यत्र 'तद्' इति नास्ति । (२) 'उक्तरूपोपाधिव्यभिचारानुमानमपि' इति पाठान्तरम् । (३) पुस्तकविशेषे 'व्यभिचारानुमानप्रकारमाह यत्रैवेति' इति पाठो नास्ति । (४) 'उद्भूतरूपवत्परमाणौ' इति पाठान्तरम् । (५) 'तत्परमाणु' इति पाठान्तरम् ।

(त) ननु 'द्व्यणुकजन्यत्व'मित्यत्र द्व्यणुकपर्य्यन्तस्य कथमनुधावनम् ? अणुजन्यत्वमात्रादानेनापि चरितार्थत्वादिति चेन्न मनसोऽप्यणुत्वेन तज्जन्यत्वविशिष्टप्रत्यक्षत्वस्य ज्ञानेऽपि सत्त्वात् तत्र च उद्भूतरूपस्यासत्त्वान्न निरुक्तरूपसाध्यव्यापकत्वमुद्भूतरूपे सम्भवतीति द्व्यणुकपर्य्यन्तानुधावनमिति ।

सिद्धिरतः 'स्वानधिकरण' इति। उद्भूतरूपानधिकरणेऽतीन्द्रियगुणादौ सत्त्वायाः साध्यव्यभिचारसत्त्वात् तद्गुणघटान्यतरस्मिन् द्रव्यत्वे उद्भूतरूपव्यभिचाराभावात् तथैवासिद्धिरतः 'साधनस्ये'ति। स्वानधिकरणीभूतसाधनाधिकरणात्मघटान्यतरस्मिन्नुद्भूतरूपव्यभिचारस्य प्रत्यक्षत्वव्यभिचारा(थ)व्याप्यत्वात् तत्सम्पत्तये 'साध्यव्यभिचार' इति। विशेष्यभागस्य(१) सार्थक्यार्थं(द) 'यत्र चे'त्यादि। तत्रापि स्वानधिकरणसाध्याधिकरणस्य प्रवेशे तन्मात्रवृत्तिधर्मे उपाधिव्यभिचारिणि साध्यव्यभिचाराभावेन(२) तथैव व्यभिचार इति 'स्वाधिकरण' इति। तदुभयवृत्तिधर्मस्य स्वानधिकरणसाध्याधिकरणवृत्तित्वे तथैव व्यभिचार इत्यतो 'मात्रे'ति। 'तद्व्यभिचारेण' उपाधिव्यभिचारेण।

यद्भावेन साधनवति साध्याभाव उन्नीयत इति कल्पानुसारेणाह 'साधनवति चे'ति। मित्रातनयः श्यामत्वाभाववान् मित्रातनयत्वे सति शाकपाकजत्वाभावात्, एवं द्रव्यत्ववान् प्रत्यक्षत्वाभाववान् बहिर्द्रव्यत्वे सति उद्भूतरूपाभावादिति क्रमेणानुमानम्। काकादावात्मादौ च व्यभिचारवारणाय सत्यन्तमिति(ध)।

(१) 'साध्यव्यभिचार इति' इत्यनन्तरं 'विशेष्यभागस्ये'त्यतः पूर्वं 'विशेष्यवायुवृत्तित्वविशिष्ट उद्भूतरूपव्यभिचारेण साध्यव्यभिचारे साध्ये विशेष्यभागवैयर्थ्यात्' इत्यधिकः पाठः क्वचिद् दृश्यते। (२) 'भावात्' इति क्वचित् पाठः।

(थ) उद्भूतरूपव्यभिचारवति आत्मत्वे प्रत्यक्षत्वव्यभिचारस्यासत्त्वादिति भावः।

(द) 'विशेष्यभागस्ये'ति निरुक्तरूपोपाधिव्यभिचारेण हेतुना साधने साध्यव्यभिचाररूपसाध्यानुमितौ हेतुघटकोपाधिव्यभिचाररूपविशेष्यभागस्येत्यर्थः। 'सार्थक्यार्थ'मिति—तथा हि 'यत्र चे'त्यादिसन्दर्भांशपरिहारे साधनस्य साध्यव्यभिचारनिरूपकाधिकरणमात्रवृत्तिताद्दशधर्मवद्वृत्तित्वस्यैव साध्यव्यभिचारव्याप्यत्वोपपत्त्या उपाधिव्यभिचाररूपस्य विशेष्यभागस्य वैयर्थ्यमिति। 'यत्र चे'त्यादिसन्दर्भांशोपादाने च साध्यव्यभिचारनिरूपकाधिकरणसाध्याधिकरणोभयवृत्तिधर्मस्यैव तथात्वेन तद्वद्वृत्तित्वस्य साध्याधिकरणवृत्तिधर्मे व्यभिचारान्न साध्यव्यभिचारव्याप्यत्वोपपत्तिरिति तत्सार्थक्यमिति भावः।

(ध) काकादौ व्यभिचारवारणाय 'मित्रातनयत्वे सती'ति प्रथमसत्यन्तं हेतुविशेषणम्। आत्मादौ व्यभिचारवारणाय 'बहिर्द्रव्यत्वे सती'ति द्वितीयसत्यन्तं हेतुविशेषणमिति भावः।

## दीधितिः

साध्यासमानाधिकरणस्य साध्यव्यापकाभावस्य वा अधिकरणं यत् साधनवत् तन्निष्ठप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणात्यन्ताभावप्रतियोगितावच्छेदकसाध्यसमानाधिकरणवृत्तिधर्मवत्त्वमुपाधित्वम्। एवञ्च साध्यसमानाधिकरणत्वेनैव साध्यवद्वृत्तिवारणसम्भवे पर्य्यवसितसाध्यव्यापकत्वाभिधानन्तु व्यापकव्यभिचारेण व्याप्यव्यभिचारावश्यम्भाव(१)प्रदर्शनार्थम्। तत्साध्यकतत्साधनकसकलोपाधिसाधारणञ्चेदम्।

## दीधितिप्रकाशः

एतस्यापि लक्षणस्य स्वत्वघटितत्वेन तत्साध्यक-तत्साधनक-यावदुपाधिसाधारण्यं न घटत इत्यतो लक्षणान्तरमाह—'साध्यासमानाधिकरणस्ये'ति। सद्धेतावुपाधिलक्षणातिव्याप्ति(२)वारणाय 'अधिकरण'मित्यन्तं साधनवद्विशेषणम्। साध्यासमानाधिकरणत्वञ्च साध्यवदवृत्तित्वम्(न)। सद्धेतुमतः साध्यवदवृत्तिमत्त्वाभावान्नातिप्रसङ्गः। मूलोक्त-साध्यव्यापकत्वापरित्यागेनैव लक्षणं कर्त्तुं गुर्वपि विशेषणमाह—'साध्यव्यापकाभावस्य वे'ति।

साध्याभावस्येति सर्वापेक्षया लघ्वपि नोक्तम् उपाधिशरीरभाने व्यभिचारस्य प्रथमत एव स्फूर्त्तावुपाधिना व्यभिचारा(३)नुमानस्य साम्प्रदायिकस्य वैयर्थ्यादिति। गन्धवद्(४)द्रव्यत्वादित्यादौ साधनव्यापकस्य संयोगस्य वारणाय 'व्यधिकरणान्तम्'। तत्रैव पृथिवीवृत्तित्वविशिष्टद्रव्यत्वत्वादिनोपाधित्वरक्षणाय 'प्रतियोगितावच्छेदकावच्छिन्ने'ति। उपाधेस्तादृशाभावप्रतियोगित्वोक्तौ पृथिवीत्वसंयोगोभयत्वावच्छिन्नाभावस्य तादृशप्रतियोगित्वात् तथैवातिव्याप्तिरतः(५) 'प्रतियोगितावच्छेदके'ति। लघुसमनियतकम्बुग्रीवादिमत्त्वादिना तु नोपाधित्वमिति भावः।

(१) 'व्यापकाभावेन व्याप्याभावावश्यम्भावे'ति पाठान्तरम्। (२) 'लक्षणातिप्रसङ्ग'ति पाठान्तरम्। (३) 'उपाधिव्यभिचारे'ति पाठान्तरम्। (४) 'पृथिवी गन्धवती' इति पाठान्तरम्। (५) 'व्याप्तिरिति' इति पाठान्तरम्।

(न) अत्र न तु साध्यवदन्यवृत्तित्वं साध्यानधिकरणवृत्तित्वं वेति शेषः। तथा सति साध्यव्यापकाभावस्येत्यपहाय साध्याभावस्येति लघुनिर्देशपक्षे वक्ष्यमाणस्य उपाधिहेतुकव्यभिचारानुमानवैयर्थ्यस्यात्रापि कल्पे सम्भवादिति ध्येयम्।

विरुद्धवारणाय 'साध्यसमानाधिकरणे'ति। साध्यासमानाधिकरणार्द्रेन्धन-व्यक्तिसंग्रहाय अवच्छेदके तद्वृत्तित्वं विशेषणम्। अत्र च व्यापकताघटकसम्बन्धेन साध्यव्यापकाभावः, साधनवत्त्वञ्च हेतुतावच्छेदकसम्बन्धेन। प्रतियोगिवैयधिकरण्यं सामानाधिकरण्यञ्च उपाधिताघटकसम्बन्धेन। व्यावृत्तिस्तु(न) व्याप्तिलक्षणवद् बोध्या।

ननु मूलोक्तलक्षणे साधनपदस्य सामान्यशब्दस्य(१) साध्यव्यापकाभाववद्-समानाधिकरणसाधनविशेषपरतया तथा लक्षणार्थो वर्णनीयः। तत्र साध्यवदवृत्ति-वारणमात्रफलकं पर्य्यवसितसाध्यव्यापकत्वपर्यन्तं व्यर्थम्, साध्यसमानाधिकरण-त्वेनैव तद्वारणसम्भवादत आह—'एवञ्चे'ति। क्वचित्तु पर्य्यवसितेत्याद्येव पाठः। पूर्वलक्षणादेतल्लक्षणस्योत्कर्षं दर्शयति—'तत्साध्यके'ति। 'सकलोपाधी'ति—एक-सम्बन्धावच्छिन्नसकलोपाधीत्यर्थः। तेन सम्बन्धभेदेन प्रतियोगिवैयधिकरण्यादेरु-पाधितावच्छेदकताघटकसम्बन्धभेदेन साध्यसमानाधिकरणवृत्तित्वस्य च भिन्नत्वेऽपि न दोषः।

(१) 'पदस्य' इति पाठान्तरम्।

---

(प) साध्यव्यापकाभावप्रतियोगितायां व्यापकताघटकसम्बन्धावच्छिन्नत्वाप्रवेशे वह्निमान् धूमादित्यादिसद्धेतुस्थले समवायेन साध्यव्यापकस्य द्रव्यत्वादेः संयोगादिसम्बन्धेनाभाववति साधनाधिकरणे वृत्तिमति व्यञ्जनवत्त्वादावतिव्याप्तिरतो 'व्यापकताघटकसम्बन्धेन साध्यव्यापका-भाव' इति। हेतुतावच्छेदकसम्बन्धेन साधनवत्त्वाप्रवेशे समवायेन साध्यव्यापकस्य द्रव्यत्वादेः समवायेनैवाभावस्य कालिकसम्बन्धेन साधनवति स्पन्दादौ वर्त्तमानतया निरुक्तस्थल एव व्यञ्जनवत्त्वादावतिव्याप्तिरतो हेतुतावच्छेदकसम्बन्धेन साधनवत्त्वं वाच्यम्। उपाधिता-घटकसम्बन्धेन प्रतियोगिवैयधिकरण्याप्रवेशे धूमवान् वह्नेरित्यादौ आर्द्रेन्धनाभावादेरपि कालिकादिसम्बन्धेन प्रतियोगिसमानाधिकरणतया आर्द्रेन्धनादावव्याप्तिरत उपाधिताघटक-सम्बन्धेन प्रतियोगिवैयधिकरण्यं वक्तव्यम्। उपाधिताघटकसम्बन्धेन साध्यसामानाधिकरण्या-निवेशे धूमवान् वह्नेरित्यादौ साध्यविरुद्धद्रव्यत्वादेः समवायेन उपाधित्वापत्तिः स्यात्तस्यापि कालिकादिसम्बन्धेन प्रकृतसाध्यसमानाधिकरणत्वादिति उपाधिताघटकसम्बन्धेन साध्य-सामानाधिकरण्यं वक्तव्यम्।

## दीधितिः

साध्यव्यापकत्व-साधनाव्यापकत्वा(फ)वच्छेदकरूपानतिरिक्तवृत्तिसाध्यसमानाधिकरणयत्किञ्चिद्धर्मव्यापकतावच्छेदकरूपवत्त्वमुपाधित्वम्। अवच्छिन्नसाध्यव्यापकोपाधौ चान्ततः साध्योपाधिशून्या साधनवती या व्यक्तिः, तद्वृत्तित्वमेव तादृशं रूपमित्यपि वदन्ति।

## दीधितिप्रकाशः

यथाश्रुतमूलमनुसन्धायाह(१)—'साध्यव्यापकत्वे'ति। सद्धेतावतिप्रसङ्गवारणाय वृत्त्यन्तम्। वह्निमान् धूमादित्यादौ द्रव्यत्वादेरपि विभिन्नरूपेण साध्यव्यापकत्व-साधनाव्यापकत्वोभयवत्त्वात्(२) तदनतिरिक्तवृत्तित्वरूपेणोपाधिता स्यादतो'ऽवच्छेदके'ति। अत्र च तदुभयस्य एकावच्छेदकाभावान्नातिव्याप्तिः।

धूमवान् वह्नेरित्यादावयोगोलकावृत्तित्वमेव तादृशं रूपम्, तदनतिरिक्तवृत्तित्वस्य हृदत्वादौ सत्त्वादतिव्याप्तिरतः 'साध्यसमानाधिकरणे'ति(३)। साध्यसमानाधिकरणवृत्तात्वाभिधाने ह्रदवृत्तित्वविशिष्टद्रव्यत्वत्वादिनोपाधित्वं स्यादतस्तस्यैवायं(४) निष्कर्षः कृतः। अवच्छिन्नसाध्यव्यापकोपाधिसाधारण्याय साध्यव्यापकतावच्छेदकेति न कृतम्। केवलान्वयितावच्छेदकस्यैव साध्यसमानाधिकरणधर्मसामान्यव्यापकतावच्छेदकत्वादसम्भव इत्यतो 'यत्किञ्चिदि'ति।

न च यत्किञ्चित्साध्यवद्व्यक्तिवृत्तितावच्छेदकत्वेनैव सर्वसामञ्जस्ये गुरुतरारम्भो व्यर्थ इति वाच्यम्; साध्यवद्वृत्तितायाः स्वरूपसम्बन्धरूपावच्छेद-

(१) 'यथाश्रुतं मूलमनुसन्धायाह' इति पाठान्तरम्। (२) 'साधनाव्यापकत्वात्' इति पाठान्तरम्। (३) 'सत्त्वादत आह साध्यसमानाधिकरणेति' इति पाठान्तरम्। (४) 'स्तथैवाय'मिति पाठान्तरम्।

(फ) न चात्र साध्यव्यापकत्व-साधनाव्यापकत्वयोरेकतरस्यैवावच्छेदकत्वं निवेश्यतां, किमुभयावच्छेदकत्वप्रवेशेनेति वाच्यम्, वह्निमान् धूमादित्यादौ व्यञ्जनादावतिप्रसङ्गात्, व्यञ्जनत्वादेः साध्यव्यापकतावच्छेदकद्रव्यत्वादेः साधनाव्यापकतावच्छेदकमहानसवृत्तिद्रव्यत्वादेश्चानतिरिक्तवृत्तित्वात्। एकत्र उभयावच्छेदकत्वनिवेशे तु न तद्दोषाशङ्केति ध्येयम्।

कम्बुग्रीवादिमत्वात् अनतिरिक्तवृत्तित्वादेश्च ह्रदवृत्तित्वविशिष्टद्रव्यत्ववत्वादिसाधारणत्वात्। यद्रूपावच्छिन्नाधिकरणता साध्याधिकरणे तद्वत्त्वस्योक्तौ(१) तु यत्त्वतत्त्वप्रवेशादननुगमः २)। अत्र च कम्बुग्रीवादिमत्त्वादिना अनुपाधित्वे यत्किञ्चिदभावप्रतियोगितावच्छेदकत्वमपि धर्म(३)विशेषणं देयम्।

अवच्छिन्नसाध्यव्यापकोपाधौ लक्षणं समर्थयति—'अवच्छिन्न'ेति। स श्यामो मित्रातनयत्वादित्यादौ गौरमित्रातनयावृत्तित्वमेव तादृशो धर्मः, तदनतिरिक्तवृत्तित्वस्य शाकपाकजत्वत्वे सत्त्वान्नाव्याप्तिरिति भावः। शाकपाकजत्वविशिष्टद्रव्यत्वस्यापि अवच्छिन्नसाध्यव्यापकोपाधित्वात् तस्य गौरमित्रातनयावृत्तित्वाभावान्न तेनोपसंग्रह इत्यतः 'अन्तत' इति। तत्रापि गौरमित्रातनयभेदविशिष्टद्रव्यत्वत्वस्य तादृशत्वात् तदनतिरिक्तवृत्तित्वेनैव लक्षणगमनमिति भावः।

अत्र(४) गन्धवती द्रव्यत्वादित्यत्र पृथिवीवृत्तित्वविशिष्टद्रव्यत्वत्वस्य साध्यव्यापकत्व-साधनाव्यापकतावच्छेदकत्वात् तदनतिरिक्तवृत्तित्वस्य द्रव्यत्वत्वे सत्त्वादतिप्रसङ्गः। तदवच्छिन्नाभाववदसम्बद्धस्वविशिष्टसामान्यकत्वे(५)त्युक्तौ तु स्वत्व(६) प्रवेशान्न तत्साध्यक-तत्साधनक-यावदुपाधिसाधारण्यमित्यस्वरसो 'वदन्ती'त्यनेन सूचितः।

## दीधितिः

रूपादिसाध्यकद्रव्यत्वादिहेतौ पृथिवीत्वाभावादेरुपाधितापत्ते तु स्वविशिष्टसाध्यानधिकरणीभूतसाधनाधिकरणवृत्तिधर्मावच्छिन्नसाध्यव्यापकत्वे सति- साधनाव्यापकत्वम्। अत्र च पूर्वदलघटिता या साधनव्यक्तिः, तदव्यापकत्वं बोध्यम्। तेन रूपादिना गुरुत्वादौ साध्ये पृथिवीत्वाभावादौ नातिप्रसङ्गः। विवेचयिष्यते चेदमुपरिष्टात्।

(१) 'तद्वद्वृत्तित्वस्योक्तौ' इति पाठान्तरम्। (२) 'यत्त्वतत्त्वयोरननुगमादननुगम' इति पाठान्तरम्। (३) 'धर्मे' इति सप्तम्यन्तपाठः क्वाचित्कः। (४) 'अत्र' इति पाठोन सार्वत्रिकः। (५) 'कत्वाद्युक्तौ' इति पाठान्तरम्। (६) 'स्वत्वस्य' इति पाठान्तरम्।

# दीधितिप्रकाशः

'रूपादी'ति,— कथकव्यवहारमतिक्रम्य व्यभिचारोन्नायकत्वमात्रेणैवोपाधित्वेन संग्राह्यत्व इत्यर्थः। पृथिवीत्वाभावात्मकस्वानधिकरणीभूत-साधनाधिकरणं यत् पृथिवी तद्वृत्ति(१)धर्मावच्छिन्नसाध्यस्य पृथिव्यां सत्त्वेन पृथिवीत्वाभावस्य तद्व्यापकतया पूर्वोक्तलक्षणस्य तत्राभावात् तत्साधारण्यार्थमाह—'स्वविशिष्टे'ति। स्वम् उपाधित्वेनाभिमतम्, तद्विशिष्टं यत् साध्यम्, तदनधिकरणं यत् साधनाधिकरणं, तद्वृत्तिधर्मावच्छिन्नेत्यर्थः।

रूपवान् द्रव्यत्वादित्यादौ तु पृथिवीत्वाभावविशिष्टरूपानधिकरणं यद् वाय्वादि तद्वृत्ति यद् वायुजलान्यतरत्वम्, तदवच्छिन्नरूपव्यापकत्वमस्त्येव(२) पृथिवीत्वाभावस्येति नासंग्रहः। साध्यानधिकरण-साधनाधिकरणवृत्तिधर्मावच्छिन्नेत्याद्युक्तौ(३) तु उपाधिशरीरभान एव व्यभिचारभानं स्यादिति तन्निराकरणार्थं 'स्वविशिष्टे'ति साध्यविशेषणं विशिष्टाभावसम्पादकम्। वह्निमान् धूमादित्यत्र महानसत्वादेरपि स्वविशिष्टसाध्यानधिकरणसाधनाधिकरणपर्वतादिवृत्तिधर्मावच्छिन्नसाध्यसमानाधिकरणत्वादतिव्याप्तिरतो व्यापकत्वपर्य्यन्तानुधावनम्(४)।

इदं गुरु रूपादित्यत्र पृथिवीत्वाभावादावतिव्याप्तिवारणायाह—'अत्र चे'ति। 'पूर्वदले'ति,— स्वविशिष्टसाध्यानधिकरणयत्साधनव्यक्त्यधिकरणवृत्तिधर्मावच्छिन्नसाध्यव्यापकत्वं तत्साधनव्यक्त्यव्यापकत्वमित्यर्थः। पृथिवीत्वाभावविशिष्टगुरुत्वानधिकरणरूपाधिकरणं द्विविधम्; पृथिवी तेजश्च। तत्र पृथिवीवृत्तिधर्मावच्छिन्नगुरुत्वव्यापकत्वं पृथिवीत्वाभावस्य नास्तीति तेजोवृत्तिजलतेजोऽन्यतरत्वावच्छिन्नसाध्यव्यापकत्वे तेजोवृत्तिरूपस्य(५) पूर्वदलप्रविष्टत्वात्तद्व्यापकत्वादेव नातिव्याप्तिरिति भावः।

ननु द्रव्यत्वेन रूपे साध्ये पृथिवीत्वाभावः संग्राह्यः, न तु रूपेण गुरुत्वे साध्ये इत्यत्रैव किं बीजमत आह—'विवेचयिष्यत' इति। तत्र द्रव्यत्वस्य हेतोरेकतया प्रागुक्तरीत्या पृथिवीत्वाभावव्यभिचारेण रूपव्यभिचारानुमानसम्भवाद् दूषकताबीजं

---

(१) 'तद्धर्मावच्छिन्ने'ति पाठान्तरम्। (२) 'मस्त्येवेति पृथिवीत्वाभावस्य नासंग्रह' इति पाठान्तरम्। (३) 'धर्माद्युक्तौ तु' इति पाठान्तरम्। (४) 'व्यापकत्वपर्य्यन्तम्' इति पाठान्तरम्। (५) 'तेजोरूपस्य' इति पाठान्तरम्।

सम्भवति। अत्र तु पृथिवीत्वाभावव्यभिचारि यत् पृथिवीरूपं तत्र न गुरुत्वव्यभिचारः, गुरुत्वव्यभिचारि यत् तेजोरूपं, तत्र न पृथिवीत्वाभावव्यभिचार(१) इति दूषकताबीजाभावादेवालक्ष्यत्वमिति(२)।

## दीधितिः

साध्यासमानाधिकरणधर्मस्य साध्यव्यापकाभावस्य वा समानाधिकरणं यत् साधनं तद्वन्निष्ठप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणात्यन्ताभावप्रतियोगितावच्छेदकसाध्यसमानाधिकरणवृत्तिधर्मवत्त्वं वा। एवञ्च अवगते साधनवति साधने वा साध्यासमानाधिकरणधर्मादिना तत्सामानाधिकरण्येन वा साध्याभावो व्यभिचारो वा शक्यते ज्ञातुमिति ध्येयम्। उपाधिशरीरभानस्य साधननिष्ठसाध्याव्यभिचारादिविषयत्वसहिष्णुतायान्तु साध्यव्यभिचारित्वेन साध्याव्याप्यत्वेन वा साधनं विशेषणीयम्।

## दीधितिप्रकाशः

प्रकृतलक्षणस्य स्वत्वघटितत्वेनाननुगमात् पृथिवीत्वाभावसंग्राह्यतापक्षे पूर्ववत् तत्साध्यक-तत्साधनक-यावदुपाधिसाधारणं लक्षणान्तरमाह—'साध्यासमानाधिकरणधर्मस्ये'ति। पूर्वलक्षणे तु रूपवान् द्रव्यत्वादित्यत्र साध्यासमानाधिकरणस्याधिकरणं यत् साधनाधिकरणं वाय्वादि तन्निष्ठाभावप्रतियोगित्वाभावादेव पृथिवीत्वाभाववारणम्। अत्र तु साध्यासमानाधिकरणस्य समानाधिकरणं यत् साधनं द्रव्यत्वं, तत्समानाधिकरणाभावप्रतियोगित्वस्य च सत्त्वासत्त्वादेव नाव्याप्त्यतिव्याप्ती(ब)। सर्वत्र पदव्यावृत्तिः पूर्ववद् बोध्या।

ह्रदवृत्तिद्रव्यत्ववत्त्वेनोपाधितावारणाय साध्यसमानाधिकरणवृत्तीत्यस्यापि पूर्ववन्निष्कर्षो बोध्यः(३)। पृथिवीत्वाभावस्यासंग्राह्यत्वे संग्राह्यत्वे(४) च

(१) 'तत्र पृथिवीत्वाभावव्यभिचारि' इति पाठान्तरम्। (२) 'न लक्ष्यत्वमिति' इति पाठान्तरम्। (३) 'बोद्धव्य' इति पाठान्तरम्। (४) क्वचित् 'संग्राह्यत्वे' इत्यंशविनाकृतः पाठः।

(ब) रूपवान् द्रव्यत्वादित्यत्र पृथिवीत्वाभावे तादृशप्रतियोगित्वस्य सत्त्वान्नाव्याप्तिः। गुरुत्ववान् रूपादित्यत्र गुरुत्वरूपसाध्यासमानाधिकरणधर्मसमानाधिकरणं यत् तेजोरूपं तत्समानाधिकरणाभावप्रतियोगित्वस्य पृथिवीत्वाभावे असत्त्वाच्च नातिव्याप्तिरिति।

क्वचित् 'सत्त्वादेव' इत्येव पाठः। तन्मते चकारस्य अनुक्तसमुच्चायकत्वात् तादृशप्रतियोगित्वस्य असत्त्वान्नातिव्याप्तिरिति पूर्वोक्त एवार्थः।

निरुक्तयोर्लक्षणयोर्ज्ञाने(१) व्यभिचारानुमानसौकर्यं दर्शयति—'एवञ्चे'ति निरुक्तप्रकारेणोपाधौ ज्ञात इत्यर्थः।

'साधनवती'ति—पूर्वनिरुक्त्यभिप्रायेण ; 'साधने वे'ति प्रकृताभिप्रायेण। साध्यासमानाधिकरण(२)धर्मादिनेत्यादिना साध्यव्यापकाभावपरिग्रहः। 'तत्सामानाधिकरण्येने'ति—साध्यासमानाधिकरणधर्मादिसामानाधिकरण्येनेत्यर्थः। साधनवान् साध्याभाववान् साध्यासमानाधिकरणधर्मात्, साधनं साध्यव्यभिचारि साध्यासमानाधिकरणधर्मसमानाधिकरणत्वादिति क्रमेणेदं बोध्यम्।

इदन्तु बोध्यम् ; उपाधिशरीरभाने(३) साधनवति वह्निमदादौ साध्यासमानाधिकरणधर्मस्य [साधने] साध्यासमानाधिकरणधर्मसमानाधिकरणत्वस्य(४) वा भाने तदुद्भावनेनैवाभिमतसिद्धेस्तद्घटितोक्तोपाधिलक्षणावच्छिन्नस्योद्भावनं व्यर्थमिति तत्र कथकसम्प्रदाय एव शरणमिति।

'सहिष्णुतायान्त्वि'ति,—उपाध्युपन्यासानन्तरं व्यभिचारानुमानं तु सिषाधयिषाधीनमेवेति भावः। अव्यभिचरितसामानाधिकरण्यरूपव्याप्यत्वस्य अभावभाने व्यभिचारभानानवश्यम्भावात् सिद्ध्यभावाधीनपक्षतयापि व्यभिचारानुमानं समर्थयितुमाह—'साध्याव्याप्यत्वेन वे'ति।

## दीधितिः

मिश्रास्तु यद्व्यभिचारित्वेनेत्याद्येव लक्षणम्। पर्य्यवसितेत्यादिकन्तु व्यभिचारोन्नायकतायोजकरूपप्रदर्शकम्(५)। तत्र पूर्वं प्रतीकं व्याप्तेरुत्तरञ्च(६) पक्षधर्मतायाः प्रदर्शनार्थम्। एवञ्च अयम् एतत्साधननिष्ठसाध्यव्यभिचारोन्नायकव्यभिचारप्रतियोगीत्यर्थके अयमत्र हेतावुपाधिरित्युक्ते कथमस्य व्यभिचारोन्नायकत्वमित्याकाङ्क्षायां(७) व्यभिचारोन्नयनमपि(८) साधु सङ्गच्छत इत्याहुः।

(१) पुस्तकविशेषे 'ज्ञान' इति नास्ति। (२) पुस्तकविशेषे 'साध्यासमानाधिकरणे'ति भागो नास्ति। (३) 'ज्ञाने' इति पाठान्तरम्। (४) 'सामानाधिकरण्यस्य वा' इति पाठान्तरम्। (५) 'प्रदर्शनम्' इति पाठान्तरम्। (६) क्वचित् 'उत्तरं प्रतीकम्' इति पाठः। 'प्रतीक'मित्यत्र क्लीबलिङ्गं चिन्त्यम् ; 'प्रतिकूले प्रतीकस्त्रिष्वेकदेशे च पुंस्ययं'मित्यमरवचनात्। (७) 'मित्याशङ्काया'मिति पाठान्तरम्। (८) 'चारानुमानमपि' इति पाठान्तरम्।

# दीधितिप्रकाशः

लक्षणन्त्वित्यादेः पौनरुक्त्यमत आह—'पर्य्यवसिते'ति । 'व्यभिचारोन्नायकताप्रयोजके'ति,—इत्थञ्च लक्षणमित्यस्य व्यभिचारोन्नायकतावच्छेदकमित्यर्थः । 'प्रतीकम्' वलम् । 'व्याप्ते'रिति 'प्रदर्शनार्थ'मित्यग्रेतनेनान्वयः(१) । व्यापकव्यभिचारस्य व्याप्यव्यभिचारव्याप्यत्वादिति भावः । 'उत्तरञ्च(२) पक्षधर्मताया' इति,—साधनाव्यापकव्यभिचारस्य साधने सत्त्वादिति भावः ।

न च महानसत्वावच्छिन्नवह्निव्यापकव्यञ्जनवत्त्वादावतिप्रसङ्गः, तस्यापि महानसत्वावच्छिन्नवह्निव्यभिचारानुमापकतया तदतिप्रसङ्गस्यादोषत्वात् । विशिष्टसाध्यव्यापकोपाधिस्थले तु विशेषणाव्यभिचारित्वेन निर्णीते विशिष्टव्यभिचारनिर्णयस्य विशेष्यव्यभिचारपर्य्यवसानेन शुद्धसाध्यव्यभिचारसिद्धिसम्भवादिति ।

उक्तव्याख्यायामुपष्टम्भकान्तरमाह—'एवञ्चे'ति ; यद्व्यभिचारित्वेनेत्यादेर्लक्षण(३)स्वरूपत्वे चेत्यर्थः(४) । 'एतत्साधननिष्ठे'त्युन्नायकव्यभिचारविशेषणम् । 'कथमस्ये'ति,—यद्यप्युन्नायकत्वं तद्योग्यता, सा च व्याप्तिपक्षधर्मतारूपा, तथापि उन्नायकतावच्छेदकत्वेनैव तस्याः(भ) प्रवेशः, न तु ताद्रूप्येणे'ति(म)भवत्याकाङ्क्षेति(य) भावः ।

'व्यभिचारोन्नयन(५)मपी'ति,—अन्यथा अयमत्रोपाधिरित्युद्भावनेनैव वादिनिग्रहाद् व्यभिचारानुमाने(६) अर्थान्तरं स्यादिति भावः । लक्षणन्त्वित्यस्यापदार्थव्याख्यानमेवास्वरसो 'मिश्रास्तु' इत्यनेन सूचितः ।

---

(१) 'मित्यग्रिमेणान्वय' इति पाठान्तरम् । (२) 'उत्तरं प्रतीकं पक्षधर्मताया' इति पाठान्तरम् । (३) 'लक्षणरूपत्वे' इत्यपरः पाठः । (४) 'स्वरूपत्वेनेत्यर्थ' इति पाठान्तरम् । (५) 'चारानुमान' इति पाठान्तरम् । (६) 'मानोद्भावने' इति पाठान्तरम् ।

(भ) 'तस्या' इति व्याप्तिपक्षधर्मतारूपतद्योग्यताया इत्यर्थः ।

(म) 'ताद्रूप्येणे'ति व्याप्तित्वादिनेत्यर्थः ।

(य) 'भवत्याकाङ्क्षेतो'ति—तथा हि उन्नायकतावच्छेदकत्वरूपसामान्यधर्मेण व्याप्तिपक्ष'तयोः सिद्धावपि किं तदवच्छेदकमिति विशेषरूपेण तदाकाङ्क्षायाः सम्भव इति भावः ।

## दीधितिः

नव्यास्तु संयोगवदन्यत्वेन द्रव्यत्वाभावस्येव संयोगाभावस्याभावेन संयोगेन द्रव्यत्वाभावाभावस्य द्रव्यत्वस्य साधनसम्भवादेकशेषस्य दुष्करत्वात् तस्याप्युपाधित्वम्। लक्षणन्तु साधनवति साध्याभावोन्नायकव्यतिरेकप्रतियोगितावच्छेदकरूपवत्त्वम्। प्रतियोगित्वञ्च तदभावत्वम्। व्युत्पादितञ्च प्रतियोगितावच्छेदकस्यैव अन्योन्याभावाभावत्वम्। शेषं पूर्ववदिति।

## दीधितिप्रकाशः

'संयोगवदन्यत्वेने'ति,—द्रव्यं सत्त्वादित्यत्र संयोगाभावस्य केवलान्वयितया द्रव्यत्वाभावासाधकत्वेऽपि संयोगवदन्यत्वस्य साधकत्वेनोपाधित्ववत् द्रव्यत्वाभाववान् सत्त्वादित्यत्रापि संयोगाभाववदन्यत्वस्याप्रसिद्ध्या साध्याभावासाधकत्वेऽपि संयोगाभावाभावस्य संयोगस्य तत्साधकत्वसम्भवात् तस्याप्युपाधित्वमुचितम्।

'एकशेषस्य' अनयोरेकस्यैवोपाधित्वं नापरस्येत्येवंरूपस्य। 'तस्यापि' संयोगाभावस्यापि। अन्यथा तथाविधात्यन्ताभावान्योन्याभावयोरेव साधकत्वेनोपाधित्वे संयोगस्याप्युपाधित्वं न स्यादिति भावः।

संयोगाभावस्य साधनव्यापकत्वात् पर्यवसितेत्यादिलक्षणाव्याप्तिरत आह—'लक्षणन्त्वि'ति। तादृशप्रतियोगिनः प्रमेयत्वादिनोपाधित्वनिरासाय 'प्रतियोगितावच्छेदके'ति। संयोगवदन्योन्याभावे संयोगस्याप्रतियोगित्वात् तत्राव्याप्तिरत आह—'प्रतियोगित्व'मिति। तादात्म्येन प्रतियोग्येवान्योन्याभावस्याभाव इत्यत आह—'व्युत्पादितञ्चे'ति। तादात्म्यस्य अधिकरण(२)त्वानियामकत्वात् प्रतियोगिनि प्रतियोगितावच्छेदकाधिकरणतायाः क्लृप्तत्वात् तस्याभावत्वमात्रकल्पने लाघवमिति भावः। 'शेष'मिति,—इदं तेजो द्रव्यत्वादित्यत्र जात्यभावादौ विरुद्धे अतिव्याप्तिवारणाय साध्यसमानाधिकरणत्वं विशेषणं देयमित्यर्थः।

(२) वृत्त्यनियामकसम्बन्धस्य अधिकरणतानियामकत्वाभावात् तादात्म्यस्य वृत्त्यनियामकसम्बन्धत्वेन अधिकरणतानियामकत्वाभाव इति भावः।

## तत्त्वचिन्तामणिः

विशेषणाव्यभिचारित्वेन ज्ञाते साधने विशिष्टव्यभिचारः सिध्यन् विशेष्य-साध्यव्यभिचारमादायैव सिध्यति पक्षधर्मताबलात्, अन्यथा प्रतीतेरपर्य्यवसानात्। न च पक्षधर्मताबलात् प्रकृतसिद्धावर्थान्तरम्(१)।

## दीधितिः

'विशेषणाव्यभिचारित्वेने'त्यादि—सामान्यतोदृष्टमेवैकविशेषबाधे भावयति विशेषान्तरप्रकारिकामनुमितिम्। न चातिरिच्यते विशिष्टाभावो विशेषणविशेष्या-भावाभ्यामिति मतेनेदम्।

## दीधितिप्रकाशः

ननु विशिष्टव्यभिचारत्वेन साध्यतायां कथं शुद्धसाध्यव्यभिचारसिद्धिः व्यापकतावच्छेदकप्रकारेणैव व्यापकस्यानुमितौ भानादत आह—'सामान्यत' इति। विशिष्टव्यभिचारित्वं हि विशेषणविशेष्यव्यभिचारित्वात्मकम्, तत्र विशेषणव्यभि-चारित्वरूपैकविशेषबाधे विशिष्टव्यभिचारसिद्धिरेव विशेष्यव्यभिचारित्वत्वेन तद्विषयीकरोतीति प्राचां मतेनेदमिति भावः।

'भावयति' जनयति। ननु साधनवति(२) साध्याभावानुमानमेव व्यभि-चारानुमानं विशिष्ट-साध्यव्यापकाभावेन कथं निर्वाह्यम्, विशिष्टाभावस्यातिरिक्तत्वेन विशेष्याभावस्य विशिष्टाभावत्वरूपव्यापकतावच्छेदकानवच्छिन्नत्वादत आह—'न चातिरिच्यत' इति।

## तत्त्वचिन्तामणिः

यद्वा प्रत्यक्षस्पर्शाश्रयत्वं प्रत्यक्षत्वव्यभिचारि द्रव्यत्वाव्यभिचारित्वे सति द्रव्यप्रत्यक्षत्वव्यापकव्यभिचारित्वात् महत्त्ववत्। तथा मित्रातनयत्वं श्यामत्व-व्यभिचारि मित्रातनयत्वाव्यभिचारित्वे सति श्याममित्रातनयत्वव्यापकव्यभिचारि-त्वात् अघटत्ववत्। अव्यभिचारश्च तत्समानाधिकरणात्यन्ताभावाप्रतियोगित्वम्। तथाभेदेऽपि।

(१) 'वर्थान्तरत्वम्' इति पाठान्तरम्। (२) ग्रन्थविशेषे 'ननु साधनवति' इत्यंशो नास्ति।

## दीधितिः

स्वमनेनाह—'यद्वे'ति। 'प्रत्यक्षस्पर्शाश्रयत्वमित्यादि प्रत्यक्षसंख्यापरिमाणवत्त्वायुपाध्यभिप्रायेण यथाश्रुतमेव साधु, आत्मैकत्वादेरपि प्रत्यक्षत्वाङ्गीकारात्। उद्भूतरूपादिपरत्वे च साध्ये हेतौ च प्रत्यक्षपदं बहिरिन्द्रियप्रत्यक्षपरम्। द्रव्यपदे वा बहिर्द्रव्यपरे, महत्त्वपदञ्च जन्यमहत्त्वपरम्(१)। व्यापकव्यभिचारित्वञ्च व्यापकतावच्छेदकरूपावच्छिन्नाभाववद्वृत्तित्वम्।

## दीधितिप्रकाशः

'स्वमतेने'ति,—एकविशेषवत्त्वेऽपि व्यापकतावच्छेदकप्रकारेणैव विशेषान्तरानुमानं(२), न तु विशिष्यापीति स्वमतम्। उद्भूतरूपस्य आत्मावृत्तित्वेन(३) न द्रव्यप्रत्यक्षत्वव्यापकत्वमतः कथं तदभिप्रायेणेदं व्यभिचारानुमानमत आह—'प्रत्यक्षसंख्ये'ति। 'यथाश्रुतमेवे'ति,—द्रव्यप्रत्यक्षत्वव्यापकेति पदं यथाश्रुतमेव साध्वित्यर्थः।

ननु आत्मैकत्वपरिमाणयोरप्रत्यक्षत्वनये तयोरपि न द्रव्यप्रत्यक्षत्वव्यापकत्वमत आह 'आत्मैकत्वादेरपी'ति। इदमुपलक्षणम्, अर्धनिखातवंशादौ(४) द्वित्वभ्रमजनकदोषस्थले च परिमाणस्यैकत्वस्य च ग्रह एव तदवान्तरवैजात्यस्य परं न ग्रहः। प्रत्यक्षस्वरूपयोग्यसंख्यादिमत्त्वं वोपाधिरिति बोध्यम्।

अग्रे(५) उद्भूतरूपस्यैव उपाधित्वप्रदर्शनात्तदनुसारेणाह—'उद्भूतरूपे'ति। 'साध्ये हेतौ चे'ति,—साध्ये प्रत्यक्षपदस्य सामान्यपरत्वे आत्मादौ व्यभिचारः, हेतौ च सामान्यपरत्वे उद्भूतरूपस्य द्रव्यप्रत्यक्षत्वाव्यापकत्वादसिद्धिरिति भावः।

एतत्कल्पे च वायुर्बहिरिन्द्रियप्रत्यक्ष इति स्थापनानुमानं बोध्यम्(६)। अनेकत्र सङ्कोच(७)कल्पनाभयादरुचिं विभावयन्नाह—'द्रव्यपदे चे'ति। अत्रापि आत्मादौ

---

(१) 'परमिति' इति क्वचित् पाठः। (२) 'विशेषानुमान'मिति पाठान्तरम्। (३) 'आत्मन्यवृत्तित्वेन' इति पाठान्तरम्। (४) 'वंशस्थले दूरत्वादौ द्वित्वे'ति क्वचित् पाठः। (५) 'अत्रे'ति पाठान्तरम्। (६) पुस्तकविशेषे 'बोध्य'मिति नास्ति। (७) 'अनेकसङ्कोचे'ति पाठान्तरम्।

व्याभिचारवारणाय प्रथमस्य, उद्भूतरूपे द्रव्यप्रत्यक्ष वाऽव्यापकत्वादसिद्धिवारणाय द्वितीयस्य द्रव्यपदस्य वहिर्द्रव्यपरत्वम्। वहिष्ट्वम् आत्मभिन्नत्वम्।

ननु अत्र कल्पे महत्त्वसामान्यस्य दृष्टान्तत्वं न सम्भवति, तस्यात्मभिन्नद्रव्यत्वव्यभिचारित्वा(१)दत आह—'महत्त्वपदञ्चे'ति। 'जन्यमहत्त्वे'ति,—यद्यपि जन्यमहत्त्वसामान्यस्यापि न दृष्टान्तत्वं सम्भवति, घटादिमहत्त्वे उद्भूतरूपव्यभिचाराभावेन हेत्वसत्त्वात्। चक्षुरादिनिष्ठमहत्त्वविशेषपरत्वे च महत्त्वपदस्यैवाहत्य तत्परत्वमस्तु, किमन्तर्गडुना जन्यमहत्त्वपरत्वोपवर्णनेन? तथापि व्याप्यपदम् अव्यभिचारित्वपदं वा अन्वयितावच्छेदकावच्छेदेनैव स्वार्थान्वयं बोधयति, धूमो वह्न्यव्यभिचारीतिवत् द्रव्यं वह्न्यव्यभिचारीत्यप्रयोगात्। तथा च महत्त्वत्वरूपेण दृष्टान्तप्रयोगे महत्त्वावच्छेदेन वहिर्द्रव्यत्वाव्यभिचारित्वाभावेन अनन्वय एव स्यादतो जन्यमहत्त्वपरत्वमुक्तम्। जन्यमहत्त्वत्वावच्छेदेन वहिर्द्रव्यत्वाव्यभिचारस्य तत्सामानाधिकरण्येन उद्भूतरूपव्यभिचारस्य च सम्भवात् तेन रूपेण दृष्टान्तप्रयोगे(२) नानन्वय इत्यभिप्रायेण तथा व्याख्यातमिति भावः।

ननु व्यापकव्यभिचारित्वं यदि व्यापकप्रतियोगिकाभाववद्वृत्तित्वम्, तदा द्वित्वावच्छिन्नाभावमादाय तद्घटत्वादौ व्यभिचारः। यदि च व्यापकत्वावच्छिन्नाभाववद्वृत्तित्वं तदा असिद्धिः सत्तादेरपि तद्व्यापकत्वादत आह—'व्यापके'ति। तादृशं व्यापकतावच्छेदकम् उद्भूतरूपत्वम्, तदवच्छिन्नाभाववद्वृत्तित्वस्य प्रत्यक्षस्पर्शाश्रयत्वे सत्त्वान्नासिद्धिरिति भावः।

## दीधितिः

न च द्रव्यपदवैयर्थ्यम्, विशिष्टाभावस्यातिरिक्तत्वात्। द्रव्यत्वाव्यभिचारित्वे सति उद्भूतरूपादिव्यभिचार एव हेतुः। व्यापकत्वोपन्यासस्तु तर्कप्रदर्शनायेति तत्त्वम्। द्रव्यत्वाव्यभिचारः द्रव्यत्वाभाववदवृत्तित्वम्। 'मित्रातनयत्व'मिति,—अनुमानमिदमुपाधेः प्रमाणान्तरेण साधनाव्यापकतानिर्णयदशायाम्।

(१) 'आत्मभिन्नद्रव्यत्वाव्यभिचारित्वाभावा'दिति पाठान्तरम्। (२) 'दृष्टान्तोपन्यासे' इति पाठान्तरम्।

## दीधितिप्रकाशः

'न च द्रव्यपदे'ति,—प्रत्यक्षत्वव्यापकतावच्छेदकरूपावच्छिन्नाभाववद्वृत्तित्वस्यैव व्याप्यत्वसम्भवे द्रव्यपदस्य व्यभिचारावारकतया असिद्धिमात्रवारकत्वादिति भावः। 'विशिष्टाभावस्ये'ति, —प्रत्यक्षत्वसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वाभावाद् द्रव्यप्रत्यक्षत्वसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वाभावस्यातिरिक्तत्वादित्यर्थः।

प्रत्यक्षत्वव्यापकतावच्छेदकरूपावच्छिन्नाभावाद् द्रव्य(१)प्रत्यक्षत्वव्यापकतावच्छेदकोद्भूत(२)रूपत्वाद्यवच्छिन्नाभावस्यातिरिक्तत्वादित्यर्थ इति तु कश्चित्। तत्तुच्छम्; द्रव्यपदार्थस्य प्रतियोगितावच्छेदककोटिप्रविष्टत्वाभावेन विशिष्टाभावस्येतिग्रन्थविरोधादिति। तादृशव्यापकतावच्छेदकत्वेनोद्भूतरूपत्वादेरज्ञाने प्रकृतहेतोरेव दुर्ज्ञेयत्वम्। तज्ज्ञाने च तथैव हेतुकरणमुचितमित्याशयेनाह—'द्रव्यत्वे'ति। 'अव्यभिचारश्चे'ति—मूलस्य एतत्परत्वभ्रमं निवारयितुं व्याचष्टे 'द्रव्यत्वाव्यभिचार' इति। तथा च न शेषवैयर्थ्यमिति भावः। ननु शाकपाकजत्वस्य सन्दिग्धोपाधिमध्ये वक्ष्यमाणत्वाद् व्यभिचारानुमाने हेतोः स्वरूपासिद्धिसन्देह इत्यत आह—'अनुमान'मिति।

## दीधितिः

ननु तदव्यभिचारित्वं तदत्यन्ताभाववदवृत्तित्वम्। तथा च साधनविकलोऽयं साध्यवान् दृष्टान्त इत्यत आह—'अव्यभिचारश्चे'ति। नन्वेवं विशेष्य(३)वैयर्थ्यम्। धूमप्रागभाववद्धर्मिभेदादवैयर्थ्यमिति चेत्, तथापि मित्रातनयत्वव्यापकत्वविशेषितं वृत्तिमत्त्वमेव गमकमिति चेन्न; यत्किञ्चित्तदधिकरणनिष्ठात्यन्ताभावाप्रतियोगित्वस्य फलतः सामानाधिकरण्यपर्यवसितस्योक्तत्वात्। तथा चायमर्थः; मित्रातनयत्वाधिकरणयद्व्यक्तिनिष्ठात्यन्ताभावाप्रतियोगित्वं तत्र शाकपाकजत्वव्यभिचारित्वात् मित्रातनये शाकपाकजत्वव्यभिचारित्वादिति यावत्। तेन श्यामत्वादौ न व्यभिचारः।

---

(१) 'वहिर्द्रव्ये'ति पाठान्तरम्। (२) 'व्यापकोद्भूते'ति पाठान्तरम्।
(३) 'शेष' इति पाठान्तरम्।

'अव्यभिचारश्चे'त्यादि,—तथा च बहुव्रीहिः। यद् यद्धर्माव्यभिचारित्वे सति यद्धर्मावच्छिन्नयत्साध्यव्यापकव्यभिचारि तत् तत्साध्यव्यभिचारीति सामान्यव्याप्तेरघटत्वं दृष्टान्त इत्यप्याहुः।

## दीधितिप्रकाशः

'साधनविकलोऽय'मिति,—'साधनविकलोऽय'मित्यन्वयदृष्टान्तत्वव्युदासाय। 'साध्यवानि'ति व्यतिरेकदृष्टान्तत्वव्युदासाय। 'एवं' मित्रातनयत्वव्यापकत्वस्य सत्यन्तार्थत्वे। 'धूमप्रागभाववदि'ति,—व्यभिचारित्व(१)निष्ठव्याप्तेस्तद्विशेषणं विना दुर्ग्रहत्वाद् यन्निष्ठेत्यादिन्यायेना(२)वैयर्थ्यमिति(ल)भावः। 'विशेषितम्' सामानाधिकरण्येन व्यापकत्वविशेषितम्। 'वृत्तिमत्त्व'मिति,—व्यभिचारित्वे वृत्तिमत्त्वस्य विशेष्यत्वादिति। 'फलत' इति,—यत्किञ्चित्तदधिकरणनिष्ठात्यन्ताभावाप्रतियोगित्वबुद्धेः सामानाधिकरण्यबुद्धि(३) फलत्वादिति भावः।

नन्वेवं श्यामत्वे व्यभिचारः, तस्यापि मित्रातनयत्वसमानाधिकरणस्य शाकपाकजत्वव्यभिचारिणः श्यामत्वव्यभिचाराभावादत आह—'तथा(४) चायमर्थ'इति। यत्तदर्थयोरननुगमाभिप्रेक्ष्याह—'मित्रातनये'ति। 'तेने'ति,—श्यामत्वस्य मित्रातनये शाकपाकजत्वव्यभिचारित्वं नास्ति, किन्तु काकादाविति तद्व्युदासः।

(१) 'उपाधिव्यभिचारित्वे'ति पाठान्तरम्। (२) 'न्यायेन न वैयर्थ्यमिति' इति पाठान्तरम्। (३) 'बुद्धेः' इति पाठान्तरम्। (४) 'तेनायमर्थ' इति पाठान्तरम्। एतन्मते दीधितावपि स एव पाठो बोध्यः।

(ल) अत्राहुर्भट्टाचार्याः; मित्रातनयत्वाव्यभिचारित्वे सतीत्यत्र अव्यभिचारपदार्थस्य अव्यभिचारश्चेत्यादिना प्रसिद्धार्थपरित्यागेन वर्णनमघटत्ववदिति दृष्टान्ताविरोधोपपादकतया सङ्गमयितुमवतारयति 'नन्वि'ति। अयं अघटत्वरूपो दृष्टान्तः। साधनविकलः अघटत्वस्य पटादौ मित्रातनयत्वव्यभिचारित्वात्। तथा च दृष्टान्तासम्भव इति भावः। व्यतिरेकदृष्टान्तस्तैवास्त्विति शङ्कां निराकरोति 'साध्यवानि'ति। अघटत्वस्य श्यामत्वव्यभिचारित्वादिति भावः। 'विशेष्यवैयर्थ्य'मिति,—मित्रातनयत्वव्यापकत्वरूपस्य सत्यन्तार्थस्यैव श्यामत्वव्यभिचारगमकत्वसम्भवादिति भावः। शङ्कते 'धूमप्रागभाववदि'ति। यथा धूमप्रागभावस्य वह्निगमकधूमघटितत्वेऽपि तद्भिन्नतया यन्निष्ठेत्यादिन्यायेन विशेष्यावैयर्थ्यं, तथा मित्रातनयत्वव्यापकत्वविशिष्टशाकपाकजत्वव्यभिचारस्य स्वघटकमित्रातनयत्वव्यापकताभिन्नत्वेन विशेष्यावैयर्थ्यमित्यर्थः। इति।

मतान्तरमाह 'अव्यभिचारश्चे'ति। शेषवैयर्थ्यनिरा(१)सायाह—'बहुव्रीहि'रिति। मित्रातनयत्वम् अव्यभिचारि व्यापकं यस्येति बहुव्रीहिरित्यर्थः। मित्रातनयत्वव्याप्यत्वन्तु फलितार्थः। इदञ्च श्यामत्वादौ व्यभिचारवारणाय। दृष्टान्तासिद्धिनिरासायाह(२) 'यदि'ति। इदं गुणवद्घटत्वादित्यत्राघटत्वमघटत्वाव्यभिचारित्वे सति अघटत्वावच्छिन्नगुणवत्त्वव्यापकघटभिन्नद्रव्यत्वव्यभिचारि, अथ च गुणवत्त्वव्यभिचारीत्यघटत्वं दृष्टान्त इत्यर्थः। यथाश्रुताव्यभिचारित्वेनैव सामञ्जस्ये अव्यभिचारपदस्य व्यापकत्वमर्थं कल्पयित्वा पुनर्बहुव्रीहिना व्याप्यत्वे पर्यवसानं सन्दर्भविरुद्धमित्यस्वरस आहुरित्यनेन सूचितः।

## तत्त्वचिन्तामणिः

यद्वा यः साधनव्यभिचारी साध्यव्यभिचारोन्नायकः स उपाधिः। तत्त्वञ्च साक्षात् परम्परया वेति नार्थान्तरम्।

## दीधितिः

प्रमेयत्वादावपि(३) विशेषणवति विशिष्टसाध्यव्यापकोपाधिव्यभिचारेण शुद्धसाध्यव्यभिचारः साधनीयः। एवं विशिष्टसाध्यव्यापकस्यापि साक्षाच्छुद्धसाध्यव्यभिचारोन्नायकतयोपाधित्वं समर्थ्य साक्षात्परम्परासाधारण(४)तदुन्नायकतामात्रेण तथात्वं व्यवस्थापयति—'यद्वे'त्यादिना। (५)दूषणाकाङ्क्षायां परम्परयाप्युपाधेर्दोषत्वादिति भावः। अत्रापि पूर्ववद् विरुद्धवारणाय साध्यसमानाधिकरणेति बोध्यम्।

व्यभिचारोन्नायकत्वञ्च यत्र कुत्रचित्(६)। एवञ्च पृथिवीत्वादिना गुरुत्वादौ साध्ये द्रव्यत्वादौ व्यभिचारोन्नायकस्य रूपवत्त्वादेर्वारणाय 'साधनव्यभिचारी'ति बहुव्रीहिः।

न चैवमपि गुरुत्वादिसाध्यके रसवत्त्वादिहेतौ द्रव्यत्वं गुरुत्वादिव्यभिचारि जलभिन्ने पृथिवीत्वादिव्यभिचारित्वादिति व्यभिचारोन्नायके पृथिवीत्वादावतिप्रसङ्गः,

(१) 'शेषवैयर्थ्यादाह' इति पाठान्तरम्। (२) पुस्तकविशेषे 'आह' इति नास्ति। (३) 'मेयत्वादावपी'ति प्रशब्दरहितं पाठान्तरम्। (४) 'परम्परये'ति पाठान्तरम्। (५) 'दूषणे'त्यादिः 'भाव' इत्यन्तो ग्रन्थः सर्वत्र न दृश्यते। (६) 'क्वचित्' इति पाठान्तरम्।

साधननिष्ठं यद् व्यभिचारित्वं साध्यव्यभिचारोन्नायकं तस्यैवोक्तत्वात्। उक्तिवैचित्र्याच्च पूर्वस्माद् भेदः।

## दीधितिप्रकाशः

विशिष्टसाध्यव्यापकोपाधिस्थलीयव्यभिचारानुमाने हेतौ विशेषणाव्यभिचारित्वे सतीत्यस्य विशेषणवतीत्यर्थकरणस्य फलान्तरमाह—'प्रमेयत्वाद्वायवपीति'(१)। वायुः प्रत्यक्षः प्रमेयत्वादित्यत्र प्रमेयत्वस्य बहिर्द्रव्यत्वाव्यभिचारित्वाभावेऽपि प्रमेयत्वं प्रत्यक्षत्वव्यभिचारि वहिर्द्रव्ये उद्भूतरूपव्यभिचारित्वादित्यनेन व्यभिचारानुमानं सुकरमिति भावः।

'एवम्' उक्तक्रमेण। 'उपाधित्वम्' उपाधिव्यवहारविषयत्वम्। 'साक्षात्-परम्परासाधारणे'ति—विशिष्टसाध्यव्यापकव्यभिचारेण विशिष्टसाध्यव्यभिचारः, तेन च यत्किञ्चिद्विशिष्टेन शुद्धसाध्यव्यभिचारः साधनीय इति परम्परेत्यर्थः। 'तदुन्नायकते'ति—शुद्धसाध्यव्यभिचारोन्नायकतेत्यर्थः। 'तथात्वम्' उपाधिव्यवहार-विषयत्वम्। 'पूर्ववदि'ति—इदं तेजो द्रव्यत्वादित्यादौ प्रागुक्तरीत्या व्यभिचारो-न्नायकस्पर्शाभावादेर्वारणायेत्यर्थः। व्यभिचारोन्नायकत्वं यदि साधन(व)निष्ठसाध्य-व्यभिचारोन्नायकव्यभिचारप्रतियोगित्वम्, तदा साधनव्यभिचारीत्यस्य वैयर्थ्य-मित्यतो व्याचष्टे 'व्यभिचार' इति। 'यत्र कुत्रचिदि'ति,—साधननिष्ठत्वं न विवक्षितमिति भावः। 'एवञ्च' साधननिष्ठत्वस्य अविवक्षणे च।

साधनव्यभिचारित्वस्य यथाश्रुतस्य पृथिवीत्वव्यभिचारिणि रूपवत्त्वे सत्त्वादाह—'बहुव्रीहि'रिति, साधनं व्यभिचारि यस्येत्यर्थः। 'एवमपि' बहुव्रीहिना साधना-व्यापकता(२)रूपार्थलब्धावपि। 'जलभिन्न' इति जलत्वादौ व्यभिचारवारणाय।

'साधननिष्ठ'मिति—रसवत्त्वनिष्ठम्। पृथिवीत्वव्यभिचारित्वञ्च न गुरुत्वव्यभि-चारोन्नायकमिति भावः। 'उक्तिवैचित्र्या'दिति—साधनविशेष्यकसाध्यव्यभिचारो-

(१) 'मेयत्वादावपीति' इति प्रशब्दशून्यं पाठान्तरम्। (२) 'व्यापकतार्थ' इति पाठान्तरम्।

(व) अत्र 'साधननिष्ठे'ति उन्नायकव्यभिचारविशेषणम्। साध्यव्यभिचारांशे विशेषणत्वे उपाधिशरीरभाने सत्येव हेतौ साध्यव्यभिचारस्य भाननियमात् व्यभिचारोन्नयनस्य वैयर्थ्यात्।

नयनयोग्यं यद्व्यभिचारित्वमिति पूर्वलक्षणार्थः। तत्र योग्यतापदार्थमुद्रया साधननिष्ठत्वं यद्व्यभिचारित्वे लभ्यम्, अत्र च साधननिष्ठं यद्व्यभिचारित्वमिति शब्दादेव तस्य लाभः। उन्नायकत्वमर्य्यादया च साध्यव्यभिचारित्वव्याप्यत्वमात्रस्य लाभ इत्युक्तिवैचित्र्यमिति भावः।

## दीधितिः

केचित्तु व्यभिचारोन्नायकत्वमिह तद्व्याप्यकोटिप्रविष्टतामात्रेण। इत्थञ्च जलत्वेन करकात्वे साध्ये जलत्वं करकात्वव्यभिचारि स्नेहव्यापकत्वात्, घटेन वा घटत्वे साध्ये घटो घटत्वव्यभिचारो जन्यद्रव्यत्वादिति व्यभिचारोन्नयनसमर्थस्य स्नेहस्य द्रव्यत्वस्य च वारणाय 'साधनव्यभिचारी'ति। अयं घटः सत्त्वादित्यादौ सत्त्वं घटत्वव्यभिचारि शब्दादिवृत्तित्वादिति व्यभिचारोन्नायकस्य शब्दादेर्वारणाय 'साध्यसमानाधिकरणे'त्यपि वक्तव्यम्।

एवञ्च रूपेण गुरुत्वादौ साध्ये रूपं गुरुत्वादिव्यभिचारि जलभिन्ने पृथिवीत्वाभाववद्वृत्तित्वादिति व्यभिचारोन्नायकस्य गुरुत्वादिव्यभिचारितैजसरूपनिष्ठव्यभिचाराप्रतियोगिनः पृथिवीत्वाभावस्य वारणाय यत्राधिकरणे साधनाव्यापकत्वं तत्र व्यभिचारोन्नायकत्वं वक्तव्यम्। यथा कथञ्चित् स्वव्यभिचारेण व्यभिचारोन्नायकमात्रस्य लक्ष्यत्वे यत्साधनव्यक्त्यव्यापकत्वं तद्व्यक्तौ व्यभिचारोन्नायकं वाच्यमित्याहुः।

## दीधितिप्रकाशः

'तद्व्याप्ये'ति—व्यभिचारव्याप्येत्यर्थः। 'कोटिप्रविष्टे'ति,—उपाधिव्यभिचारित्वस्य साध्यव्यभिचारव्याप्यतायामुपाधेस्तदवच्छेदककोटिप्रविष्टत्वादिति भावः। 'मात्रेणे'ति,—न तु व्यभिचारोन्नायकव्यभिचारप्रतियोगित्वेनेत्यर्थः।

'इत्थञ्च' उक्तव्यभिचारोन्नायकत्वस्य विवक्षणे च। 'स्नेहव्यापकत्वात्' स्नेहसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकत्वे सति वृत्तिमत्त्वात्। एतेन मेयत्वादिना स्नेहव्यापकत्वस्य सर्वत्रैव सत्त्वाद् व्यभिचार इति परास्तम्।

स्नेहस्य जलत्वाव्यभिचारितया यथाश्रुतसाधनव्यभिचारित्वेनापि वारणसम्भवाद् बहुव्रीह्यर्थग्रहणफलं दर्शयितुमुदाहरणान्तरमाह—'घटेन वे'ति। 'जन्यद्रव्यत्वादिती'ति,-

घटत्वव्यभिचारित्वं हि घटत्वाभाववत्समवेतत्वम्, तथा च नित्यद्रव्ये तदभावात् तत्र व्यभिचारवारणाय 'जन्ये'ति। घटरूपादौ व्यभिचारवारणाय 'द्रव्ये'ति। जन्य-द्रव्यत्वे(१)घटव्यभिचारित्वस्य सत्त्वात् साधनं व्यभिचारि यस्येति बहुव्रीहिराश्रयणीय इति भावः। 'व्यभिचारोन्नायकस्य' तद्व्याप्यकोटिप्रविष्टस्य। 'साध्यसमानाधिकरण' इति,—तेजो द्रव्यत्वादित्यत्र स्पर्शसामान्याभावस्य विरुद्धस्य तादृशव्याप्यकोटि-प्रविष्टत्वाभावेनैव वारणसम्भवात् तन्नोक्तम्।

साध्यसामानाधिकरण्यञ्च साधनाव्यापकतानियामकसम्बन्धेन बोध्यम्। तेन सम्बन्धान्तरेण साध्यसमानाधिकरणत्वेऽपि द्रव्यादेर्न क्षतिः। इत्थञ्च(२) सद्धेतौ साध्यसमानाधिकरणस्य साधनाव्यापकस्य वारणाय परं व्यभिचारोन्नायकत्वमुक्तम्। तच्च प्रकृते साधने साध्यव्यभिचारानुमितिजनकतावच्छेदकव्याप्यतावच्छेदककोटि-प्रविष्टत्वम्। सद्धेतौ च साध्यव्यभिचारानुमितिप्रयोजकासम्भवात्तादृशधर्मव्युदासः।

इदं गुरु रूपादित्यत्र पृथिवीत्वाभावे अतिव्याप्तिं प्रसंज्य निषेधति(३),— 'एवञ्च रूपेणे'त्यादिना। पृथिवीत्वाभावस्य वारणीयताप्रयोजकं रूपमादर्शयति 'गुरुत्वे'ति। गुरुत्वव्यभिचारि यत् तैजसं रूपं तन्निष्ठव्यभिचारप्रतियोगिन इत्यर्थः। पृथिवीत्वा-भावव्यभिचारिणि पृथिवीरूपे गुरुत्वव्यभिचाराभावाद् गुरुत्वव्यभिचारिणि तेजोरूपे(४) पृथिवीत्वाभावव्यभिचाराभावाद् व्यभिचारोन्नायकत्वाभावेन तस्या-लक्ष्यत्वमिति भावः। 'यत्रे'ति,—यदधिकरणावच्छेदेनेत्यर्थः। 'तत्र' तदवच्छेदेन। पृथिवीत्वाभावस्य पृथिव्यवच्छेदेन न साधनाव्यापकत्वम्, तदवच्छेदेन च न गुरुत्व-व्यभिचार इति तद्व्युदासः।

नन्वेवं रूपवान् द्रव्यत्वादित्यत्रापि पृथिवीत्वाभावस्य सत्त्वाद्द्रव्यत्वजलत्वमात्र-विशेषिका या धीः तद्विशेष्यत्वे सतीत्यादिप्रागुक्तरीत्या व्यभिचारोन्नयनक्षमस्य वारणमयुक्तमत आह—'यथाकथञ्चिदि'ति। 'यत्-साधनव्यक्ता'विति,—तत्र द्रव्य-

(१) 'जन्य'पदं न सार्वत्रिकम्। (२) 'एवञ्च' इति पाठान्तरम्। (३) 'निराकरोति' इति पाठान्तरम्। (४) 'तैजसरूपे' इति पाठान्तरम्।

त्वस्यैक्यात् , इह तु रूपस्य साधनस्य(१)भेदादिति(क) भावः(२)। अत्र अभावमात्रस्य अनुपाधितापत्तिः, वैयर्थ्येन तस्य व्याप्यतावच्छेदककोटावप्रवेशादित्यस्वरसः केचिदित्यनेन सूचितः।

## तत्त्वचिन्तामणिः

किञ्च अर्थान्तरस्य पुरुषदोषतया(३) आभासान्तरस्य तत्र अभावादुपाधिरेव भावत्वादिकं दोषः।

## दीधितिः

नन्वस्तु पारिभाषिकमुपाधित्वम् , तथापि साक्षाद् व्यभिचारानुन्नायकतया दोषत्वाभावेन तदुद्भावने अर्थान्तरं स्यादेवेत्यत आह—'किञ्चे'ति। 'आभासान्तरस्य' तदानीं ज्ञायमानस्य। तथा च तस्यावश्याभ्युपेयदोषभावत्वे तदुद्भावने नार्थान्तरमिति भावः।

## दीधितिप्रकाशः

मूले 'अर्थान्तरस्ये'त्यादि,— तथा च अर्थान्तरेण पुरुषस्य दुष्टत्वेऽपि परम्परया व्यभिचारोन्नायकतयापि उपाधेरनुमानदूषकत्वं नानुपपन्नमित्यर्थः। अर्थान्तरमपि नास्तीत्याह—'आभासान्तरस्ये'ति। सोपाधौ व्यभिचारादेराभासस्यावश्यकत्वादाभासान्तरस्य तत्राभावादित्यसङ्गतमित्यतः पूरयति दीधितौ 'तदानी'मिति। तथा च व्यभिचारस्यास्फुरणे(४)ऽप्युपाधिमात्रोद्भावनेन वादिनिग्रहात् तस्यावश्यं दोषत्वमभ्युपेयम् , अतस्तस्यापि दोषत्वेनाकाङ्क्षितत्वात् तदुद्भावने नार्थान्तरमित्यर्थः। मूले 'भावत्वादिकं दोष' इत्यस्य ध्वंसो विनाशी जन्यत्वादित्यादा(५)वित्यादिः।

---

(१) 'साधनस्य व्यक्तिभेदेन भेदादिति भाव' इति पाठान्तरम्। (२) 'भाव' इत्यस्मादनन्तरं 'अत्रे'त्यतः पूर्वं क्वचित् 'तदुन्नायकत्वं व्यभिचारोन्नायकत्व'मिति पाठो दृश्यते। तेन दीधितावपि पाठान्तरमुन्नेयम्। (३) 'दोषत्वात्' इति पाठान्तरम्। (४) 'व्यभिचारास्फुरणेऽपि' इति पाठान्तरम्। (५) 'दित्यादावित्यर्थे' इति पाठान्तरम्।

(क) तथा च तत्र पृथिवीत्वाभावे पार्थिवरूपात्मकसाधनाव्यापकत्वस्य वर्त्तमानतया तत्र गुरुत्वव्यभिचारस्यासत्त्वेन तदुन्नायकत्वाभावान्न तत्रातिव्याप्तिरिति भावः।

## दीधितिः

अत्र वदन्ति ; साध्योपन्यासानन्तरं तत्साधकस्येव साधनोपन्यासानन्तरं तद्दोषस्य व्यभिचारादेराकाङ्क्षितत्वात् तमनुद्भाव्य साक्षात् तत्साधकस्य शुद्धसाध्यव्यापकस्योपाधेरुद्भावन एवाप्राप्तकालत्वम् . कैव कथा परम्परया तत्साधकस्यावच्छिन्नसाध्यव्यापकस्य ? अन्यथा तत्साधकपरम्पराया अपि प्रथममुपन्यासे तथात्वं न स्यात् । न च निग्रहस्थानत्वेन विशेषः, प्रतिज्ञाहान्यादितो हेत्वाभासाच्च बहिर्भूतस्य तथात्वायोगात् ।

## दीधितिप्रकाशः

उपाधेर्दूषकत्वं(१) हेत्वाभासविधया निग्रहस्थानान्तरत्वेन वा ? आद्ये 'तद्दोषस्य व्यभिचारादे'रिति । उपाधेरनुमितितत्कारणज्ञानं प्रति साक्षादविरोधित्वेन हेत्वाभासत्वाभावादिति भावः । 'तम्' व्यभिचारादिकम् । 'तत्साधकस्य' व्यभिचारादिसाधकस्य । 'अप्राप्तकालत्व'मिति—तदानीमनाकाङ्क्षितत्वादिति भावः । 'परम्परये'ति—शुद्धसाध्यव्यभिचारसाधकीभूतावच्छिन्नसाध्यव्यभिचारसिद्धिद्वारेत्यर्थः ।

'अवच्छिन्नसाध्यव्यापकस्ये'ति 'उद्भावन' इति पूर्वेणान्वीयते । ननु साक्षात्परम्परासाधारणतत्साधक एव तदानीमाकाङ्क्षा इत्यत आह—'अन्यथे'ति । 'अन्यथा' तत्साधकपरम्पराया अपि तदानीमाकाङ्क्षितत्वे । 'तथात्वम्' अप्राप्तकालत्वम् । द्वितीयं निराकुरुते—'न चे'ति । 'विशेष' इति ,—तत्साधकपरम्पराया निग्रहस्थानत्वात्(२) ततो विशेष इति भावः । 'तथात्वायोगात्' निग्रहस्थानत्वायोगात् ।

## दीधितिः

न च विभाजकसूत्रस्थेन 'हेत्वाभासाश्चे'ति-चकारेणानुक्तसमुच्चयपरेण साक्षात् परम्परया वा अनुमितिदोषोन्नायकस्य संग्रहः, तथा सति व्यभिचारस्येवाश्रयासिद्ध्यादेरप्युन्नायकस्य तदुभयोन्नायकपरम्परायाश्च तथात्वापातात् ।

(१) 'दूषणत्वम्' इति पाठान्तरम् । (२) 'स्थानत्वादतो विशेष इत्यर्थ' इति पाठान्तरम् ।

न च अप्राप्तकालतामासादयन्नपि प्रथममुपाध्युपन्यासः कथकसम्प्रदायानुरोधादेव कर्त्तव्यः, तादृशसम्प्रदायमननुरुन्धानस्य तदुद्भावकं पराभवतः शपथनिवारणीयतापत्तेः। तस्मात् प्रथमं शुद्धसाध्यव्यभिचार एवोद्भाव्यः। तत्र कथन्तायां तद्धेतुत्वेन शुद्धसाध्यव्यापकोपाधिव्यभिचारः, विशेषणाव्यभिचारित्वे सति विशिष्टसाध्यव्यापकस्योपाधेर्विशिष्टसाध्यस्य वा व्यभिचारः, अत्र च विशेष्ये(१) विशिष्टसाध्यव्यापकोपाधिव्यभिचार इति। वक्ष्यते च व्यभिचारादेरिव तद्व्याप्यवत्त्वादेरपि ज्ञानं व्याप्त्यादिग्रहप्रतिबन्धकम्। तथा च साध्यव्यभिचारव्याप्योपाधिव्यभिचारवानयमिति वोद्भावनीयमिति।

## दीधितिप्रकाशः

'विभाजके'ति,—"प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासन्न्यासो हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञातार्थकमप्राप्तकालत्वं न्यूनमधिकं पुनरुक्तमननुभाषणमप्रतिभा विक्षेपो मतानुज्ञा पर्य्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्च निग्रहस्थानानी"ति विभाजकं सूत्रम्(क)।

एतेनाज्ञानरूपासिद्ध्यादीनां निग्रहस्थानत्वप्राप्तये 'हेत्वाभासाश्च यथोक्ता इती'ति—चरमसूत्रस्थचकारस्यैवानुक्तसमुच्चयपरतया मिश्रादिव्याख्यानमपाकृतम्। तत्र यथोक्तत्वस्यैव विधेयतया निग्रहस्थानत्वस्याविधेयत्वादिति।

'व्यभिचारस्यैवे'ति—उन्नायकस्येत्यत्र उन्नयने अन्वयि। 'तदुभये'ति व्यभिचारोन्नायकम् आश्रयासिद्ध्युन्नायकञ्च तदुभयम्। 'तथात्वापातात्' निग्रहस्थानत्वापातात्। 'कथकसम्प्रदायानुरोधा'दिति,—कथकानां तादृशव्यवहारबलादित्यर्थः(२)। 'तदुद्भावकम्' उपाध्युद्भावकम्। अप्राप्तकालत्वेन निग्रहस्थानेन 'पराभवतः' पराभवं कुर्वतः। 'शुद्धसाध्यव्यभिचार एव' न तु उपाधिः। 'तत्र' शुद्धसाध्यव्यभिचारे। 'कथन्तायाम्' कुत इत्याकाङ्क्षायाम्। 'तद्धेतुत्वेन' शुद्धसाध्यव्यभिचारहेतुत्वेन।

(१) 'विशेष्ये' इत्यनन्तरं 'कथन्ताया'मित्यधिकः पाठः क्वाचित्कः।
(२) 'व्यवहारादित्यर्थ' इति पाठान्तरम्।

(क) 'विभाजक'मिति-निग्रहस्थानविभाजकमित्यर्थः। 'सूत्र'मिति-गोतमीयमिति शेषः।

विशिष्टसाध्यव्यापकोपाधिस्थले(१)ऽप्याह—'विशेषणे'ति। विशिष्टसाध्यव्यापकस्य परम्परया व्यभिचारानुमानपक्षे त्वाह—'विशिष्टे'ति। 'अत्र च' विशेषणाव्यभिचारित्वे सति विशिष्टसाध्यव्यभिचारे हेतौ। 'विशेष्ये' विशिष्टसाध्यव्यभिचारे। प्रथममपि उपाधेरुपन्यासं समर्थयितुमाह—'वक्ष्यते चे'ति। साध्यव्यभिचारव्याप्यत्वेनोपाधिव्यभिचारस्योद्भावने अनुमितिप्रतिबन्ध इत्युक्तरूपेण प्रथममुपाध्युपन्यासः समर्थितो भवतीति भावः। व्यभिचारित्वादेः सम्बन्धत्वे विवादादुपाधिमानित्युपेक्ष्य उपाधिव्यभिचारवानित्युक्तम्।

## तत्त्वचिन्तामणिः

नचैवं शब्दोऽभिधेयः प्रमेयत्वादित्यत्र अश्रावणत्वम्, जलं प्रमेयं रसवत्त्वादित्यत्र पृथिवीत्वमुपाधिः स्यादिति वाच्यम्(२), केवलान्वयित्वसाधकप्रमाणेन तत्र साध्यसिद्धेरुपाधेर्विशिष्टाव्यापकत्वात्।

न च पक्षेतरं स्वव्याघातकत्वेनानुपाधावतिव्याप्तिः, तत्रानुकूलतर्काभावेन साध्यव्यापकत्वानिश्चयात्, सहचारदर्शनादेस्तेन विना संशायकत्वादित्युक्तम्। बाधोन्नीते चानुकूलतर्कोऽस्त्येवेति।

## दीधितिः

'साध्यव्यापकत्वानिश्चयात्' उपाधित्वौपयिकतन्निश्चयात्। अनुकूलतर्काद्विना तादृशव्यापकत्वनिश्चये तु बाधोन्नीतवद् भवत्येव निश्चितोपाधिः। न च स्वव्याघातकत्वान्नायमुपाधिः, तद्धि न सर्वानुमानसाधारण्यम्, अनुकूलतर्कादिनिश्चितव्याप्तिके हेतौ तदभावात्।

नापि तद्व्यभिचारेण व्यभिचारानुमानेऽपि पक्षेतरान्तरस्योपाधित्वसम्भवः, अनुकूलतर्काद्विना तस्य साध्यव्यापकत्वानिश्चये व्यापकव्यभिचारिणि व्याप्यव्यभिचारावश्यम्भावेन तदयोगात्। अत एव पक्षेतरस्योपाधित्वे सर्वत्रैव तादृशोपाधिसम्भवेनानुमानमात्रविलोपे व्यभिचारानुमापकत्वगर्भस्योपाधित्वस्य व्याघात इति परास्तम्। कथकसम्प्रदायानुरोधाद् बाधानुन्नीतः पक्षेतरो, नोपाधित्वेन कथायामुद्भाव्य इति तु वदन्ति।

(१) 'स्थले त्वाह' इति पाठान्तरम्। (२) 'स्यादिति वाच्य'मित्यत्र 'स्यात्' इत्येतन्मात्रः पाठः क्वचिद् दृश्यते।

## दीधितिप्रकाशः

यत्किञ्चिद्धर्मावच्छिन्नसाध्यव्यापकत्वनिश्चयस्य पक्षेतरेऽपि सत्त्वादाह—'उपाधित्वौपयिके'ति। स्वानधिकरणीभूतसाधनाधिकरणवृत्तिधर्मावच्छिन्नसाध्यव्यापकत्वमुपाधित्वौपयिकम्, तस्यानिश्चयादित्यर्थः।

ननु यत्र कथञ्चित्तादृशव्यापकत्वनिश्चयो जातः, तत्र स उपाधिः स्यादत इष्टापत्तिमाह—'अनुकूले'ति। तर्कादिनेत्यादिपदात् स्वतःसिद्धव्यभिचाराग्रहादिपरिग्रहः। 'निश्चितोपाधि'रिति,—उपाधिनिश्चयो(१)ऽनुमानदूषकः। सन्दिग्धोपाधित्वस्याग्रे शङ्कनीयत्वान्निश्चितोपाध्यभिप्रायकत्वमस्य स्फुटीकर्तुं 'निश्चिते'त्युक्तम्।

'स्वव्याघातकत्वेनानुपाधा'विति—मूलोक्तयुक्तिं निराकरोति—'न च स्वव्याघातकत्वा'दिति। स्वम् अनुमानसामान्यम्,' व्याघातकत्वं तद्दूषणापादकत्वम्-इत्यर्थाभिप्रायेणाह—'तद्धी'ति स्वव्याघातकत्वं हीत्यर्थः। 'साधारण्यम्' दूषणापादकत्वम्। 'तदभावात्' तत्र साध्यव्याप्याव्यापकत्वेन साध्याव्यापकत्वनिश्चयेन पक्षेतरस्य दूषकत्वाभावात्।

स्वं स्वीयं स्वप्रयुक्तव्यभिचारानुमानम्, तद्व्याघातकत्वं स्वसमानजातीयेन पक्षेतरान्तरेण तद्दूषणापादकत्वमित्यर्थाभिप्रायेणाह—'नापी'ति। 'तद्व्यभिचारेण' पक्षेतरव्यभिचारेण। धूमो वह्निव्यभिचारी पर्वतेतरत्वव्यभिचारित्वादित्यत्रापि धूमेतरत्वस्योपाधित्वसम्भव इत्यर्थः। 'अवश्यम्भावेन' अवश्यम्भावनिश्चयेन। 'तदयोगात्' साध्यव्याप्याव्यापकत्वेनोपाधेः साध्याव्यापकत्वनिश्चयेनोपाधित्वायोगात्।

व्यभिचारानुमापकव्यभिचारप्रतियोगित्वमुपाधिलक्षणम्, पक्षेतरत्वस्योपाधित्वे अनुमानमात्रोच्छेदाद् व्यभिचारानुमानस्याप्युच्छेद इति स्वीयस्योपाधिलक्षणस्य व्याघातकत्वान्न स उपाधिरिति मिश्रव्याख्यानमाक्षिपति—'अत एवे'ति। अनूकूलतर्कादिना साध्यव्यापकताग्रहे व्यापकव्यभिचारिणि व्याप्यव्यभिचारावश्यम्भावेन व्यभिचारानुमानस्यानुच्छेदा(२)देव दूषकताबीजसत्त्वे पक्षेतरस्यानुपाधित्व-

(१). 'निश्चयेनानु' इति पाठान्तरम्। (२) 'मानस्योच्छेदाभावादेव' इति पाठान्तरम्।

प्रवादः किंमूलकस्तत्राह—'कथके'ति। 'नोद्भाव्य' इति,—स्वार्थानुमाने दूष भवत्येवे(१)ति भावः। निर्युक्तिकः प्रवादो न श्रद्धेय इत्यस्वरसो वदन्तीत्यनेन सूचितः।

## तत्त्वचिन्तामणिः

एवं पर्वतावयववृत्त्यन्यत्वादेरपि नोपाधित्वम्, पक्षमात्रव्यावर्त्तकविशेषणवत्त्वात्। अत एव धूमे आर्द्रेन्धनप्रभववह्निमत्त्वम्, द्रव्यवह्निरिन्द्रियप्रत्यक्षत्वे उद्भूतरूपवत्त्वम्, मित्रातनयश्यामत्वे शाकपाकजत्वम्, जन्यानित्यत्वे भावत्वमुपाधिः।

## दीधितिः

'पक्षमात्रे'ति,—यद्यपि पर्वतावयवरूपादेरपि व्यावर्त्तकं तत्, तथापि तस्य व्यावृत्तिर्नोपाधितायामुपयुज्यते, अपि तु पक्षस्यैवेति तन्मात्रव्यावर्त्तकत्वमुक्तम्।

इदञ्च अनुपाधितायां न बीजं परिभाषामात्रत्वात्, किन्तु अनुकूलतर्काभावेन तादृशसाध्यव्यापकत्वानिश्चय इति द्रष्टव्यम्। 'अत एव' व्यापकताग्राहकप्रमाणसम्भवादेव(२)। 'आर्द्रेन्धने'ति,—अथात्र स्वतन्त्रान्वयव्यतिरेकाभ्यामार्द्रेन्धन(३)त्वेनैव कारणत्वम्, न पुनरार्द्रेन्धनप्रभववह्नित्वेनेति चेत्, किञ्चातः? नहि कारणतावच्छेदकमेव व्यापकतावच्छेदकम्, तादृशाभावप्रतियोगितानवच्छेदकस्यैव तत्त्वात्(४), तदवच्छिन्नप्रतियोगिताकाभावस्य चातिरिक्ततया तद्वद्वृत्तित्वेन साध्यव्यभिचारसाधने वैयर्थ्याभावात्। सत्यपि चार्द्रेन्धने तत्संयुक्ते च वह्नौ दाहप्रतिबन्धकसत्त्वे धूमानुत्पादात् क्लृप्ततत्(५)कारणभावस्य वह्नेर्विशेषरूपेण कारणत्वकल्पनयैवोपपत्तावक्लृप्ततत्कारणभावानां दाहप्रतिबन्धकाभावानां तत्कारणत्वकल्पनानौचित्यात्।

एकस्यामार्द्रेन्धनव्यक्तौ प्रतिबद्धायां(६) तत्रैव व्यक्त्यन्तराद् धूमोत्पादेन(७) तत्तदिन्धनजन्यधूमं प्रति तत्तदभावानां कारणत्वस्य वाच्यत्वे अतिगौरवाच्च। महति चार्द्रेन्धने तत्प्रभवे चाणीयसि वह्नौ महति वह्न्यन्तरे विद्यमानेऽपि आर्द्रेन्धनप्रभवमहावह्नेरनुत्पाददशायां प्रकृष्टधूमानुत्पादादार्द्रेन्धनप्रभववह्नित्वेन कारणत्वमित्यपि वदन्ति।

(१) 'भवत्येवेत्यर्थः' इति पाठान्तरम्। (२) 'सद्भावादेव' इति पाठान्तरम्। (३) 'न्धनत्वादिनैव' इति पाठान्तरम्। (४) 'तथात्वात्' इति पाठान्तरम्। (५) 'तत्'पदं सर्वत्र नास्ति। (६) 'प्रतिरुद्धायाम्' इति पाठान्तरम्। (७) 'पादात्' इति पाठान्तरम्।

# दीधितिप्रकाशः

'तत्' पर्वतावयववृत्त्यन्यत्वम्। 'तस्य' पर्वतावयवरूपादेः। 'पक्षस्यैवे'ति,—पक्षव्यावृत्तिः साधनाव्यापकत्व उपयुज्यते। पर्वतावयवरूपादेर्व्यावृत्तिस्तु न कुत्राप्युपयुज्यत इति भावः। तथा च उपाधित्वौपयिकपक्षमात्रीयव्यावृत्तिप्रयोजक-विशेषणवत्त्वादिति मूलार्थः।

केचित्तु विशेषणवत्त्वादिति न मतुप्, किन्तु तुल्यार्थको वतिप्रत्ययः, तथा च पक्षमात्रव्यावर्त्तकं विशेषणं यस्य स तथा पक्षेतरः, साध्यव्यापकताग्राह(१)कानुकूल-तर्काभावेन तत्तुल्यत्वादित्यथ(२)माहुः। 'इदम्' पक्षमात्रव्यावर्त्तकविशेषणवत्त्वम्। 'तादृशे'ति,—उपाधित्वौपयिकेत्यर्थः। व्यापकताग्राहकानुकूलतर्काभावस्यैव पूर्वग्रन्थे प्रक्रान्तत्वात् तत्परामर्शकत्वे(३) असङ्गतिरतस्तत्प्रतियोगिपरामर्शकतया व्याचष्टे 'अत एवे'ति।

'अत्र' धूमे। 'स्वतन्त्रे'ति,—आर्द्रेन्धनत्वेन वह्नित्वेनैव च कारणता, तयोः संयोगः प्रत्यासत्तिः, परस्परप्रत्यासन्नानामेव कारणानां कार्य्योपधायकत्वादित्यर्थः। 'अतः' आर्द्रेन्धनप्रभववह्नित्वस्य कारणतावच्छेदकत्वखण्डनात्। आर्द्रेन्धनप्रभव-वह्नित्वस्य कारणतावच्छेदकत्वाभावे किं तेन रूपेण व्यापकत्वं न निर्वहति, तद्रूपा-वच्छिन्नव्यभिचारेण व्यभिचारानुमानं वा? आद्ये 'नह्री'त्यादि। 'तत्त्वात्'(४) व्यापकतावच्छेदकत्वात्। द्वितीये 'तदवच्छिन्ने'ति। 'अतिरिक्ततये'ति,—आर्द्रेन्धनत्ववह्नित्वावच्छिन्नाभावाभ्यामतिरिक्ततयेत्यर्थः।

ननु पक्षमात्रव्यावर्त्तकविशेषणघटितस्यापि व्यापकत्वे बाधकाभाव इति चेत् तद्ग्राहकतर्काभावोऽत्राभिधित्सितः, अत एव व्यापकताग्राहकतर्कसद्भावे उपाधित्व-ग्रह इत्याह 'अत एवे'ति(५)। वस्तुगतिमनुरुध्य(६) तेन रूपेण तथात्वमपि(७) व्यवस्थापयति—'सत्यपी'ति। 'विशेषरूपेण' आर्द्रेन्धनप्रभववह्नित्वेन।

(१) 'ग्रहानुकूल' इति पाठान्तरम्। (२) 'दित्याहुः' इति पाठान्तरम्। (३) 'मर्शकत्वासङ्गति' इति पाठान्तरम्। (४) 'तथात्वात्' इति पाठान्तरम्। (५) ग्रन्थविशेषे 'ननु' इत्यारभ्य 'अत एवेति' इत्यन्तसन्दर्भो नास्ति। (६) 'रुध्य चेदम्' इति पाठान्तरम्। (७) 'कारणत्वमपि' इति पाठान्तरम्।

'अक्लृप्त'ति,—दाहप्रतिबन्धकाभावानां दाह एव कारणत्वस्य क्लृप्तत्वात् धूमं प्रति कारणत्वस्य अक्लृप्तत्वादिति भावः। 'प्रतिबन्धकाभावाना'मिति-बहुवचनेन मणिमन्त्रौषधादिभेदेन कार्य्यकारणभावानां बहुत्वं सूचितम्।

इन्धनव्यक्तिभेदेन कार्य्यकारणभावस्यानन्त्यादतिगौरवं दर्शयति-'एकस्या'मिति। 'तत्रैव' तदिन्धनव्यक्तावेव। 'व्यक्त्यन्तरात्' आर्द्रेन्धनव्यक्त्यन्तरात्। 'धूमोत्पादेन' संयोगसम्बन्धेन धूमोत्पाददर्शनेन(१)। एतेन प्रतिबन्धकाभावानां कार्य्यस्य संयोगघटितसामानाधिकरण्यप्रत्यासत्त्या कार्य्यकारणभावकल्पनयापि गौरवस्य समाधानं न भवतीति(२) सूचितम्।

ननु मण्यादीनां प्रतिबन्धकत्वे संयोगः प्रत्यासत्तिः, मन्त्रस्य च इदं मा दहत्वित्युद्देश्यत्वम्। कार्य्यस्य च धूमस्य न संयोगो जन्यताघटकप्रत्यासत्तिर्व्यभिचारात्, किन्तु उपधायकत्वम्। तथा च यत्र उपधायकतासम्बन्धेन धूम उत्पद्यते, तत्र संयोगेन तादृशोद्देश्यत्वेन वा मण्यादिमन्त्रयोरभाव इत्येवंरूपसामानाधिकरण्यप्रत्यासत्त्या कारणभावस्य कल्पने कथमतिगौरवम्? अत एव यत्रेन्धने मण्यादिसम्बन्धो जातः, दैवाद् धूमो न जातः, तत्रापि उक्तसम्बन्धेन सामान्यसामग्रीतो न धूमसामान्योत्पत्त्यापादनम्, अन्यथा तदिन्धनजन्यधूमस्याप्रसिद्ध्या उक्तक्रमेण प्रतिबन्धकाभावस्य हेतुत्वाकल्पनात् सामान्यसामग्रीतो धूमसामान्योत्पत्त्यापातादिति(३) चेत् उपधायकत्वादीनां कार्य्यतावच्छेदक-(४) सम्बन्धत्वे मानाभावाद् धूमानुपधायकवह्नियुक्तप्रतिरुद्धेन्धनव्यक्तेः फलाभावेन विशिष्य हेतुत्वाकल्पनाद् धूमोपधायकेन्धनानां विशिष्य हेतुत्वकल्पनात् तादृशविशेषसामग्रीविरहेणापि धूमानुत्पादसमर्थनसम्भवात्, एवमपि मणिमन्त्रौषधादिभेदेन कार्य्यकारणभावबाहुल्यस्यातिस्फुटत्वाच्चेति। अत एव वह्नित्वेन आर्द्रेन्धनत्वेनैव(ग)

(१) ग्रन्थविशेषे 'धूमोत्पादेन' इत्यारभ्य 'दर्शनेन' इत्यन्तग्रन्थो नास्ति। परन्तु 'एतेन' इत्यनन्तरं 'संयोगसम्बन्धेन धूमोत्पादप्रदर्शनेन' इति ग्रन्थो वर्त्तते।
(२) 'सम्भवतीति' पाठान्तरम्। (३) 'पत्त्यापादनादिति' पाठान्तरम्।
(४) 'कार्यताघटकसम्बन्धत्वे' इति पाठान्तरम्।

(ग) एवकारो नाम आर्द्रेन्धनप्रभववह्नित्वेन विशिष्टरूपेण कारणत्वं व्यवच्छिनत्ति।

धूमं प्रति हेतुता, तयोर्जन्यजनकभावः प्रत्यासत्तिः, परस्परप्रत्यासन्नानामेव कारणानां कार्य्योपधायकत्वादित्यपास्तम् ।

यत्तु धूमजनकतावच्छेदको जातिविशेष एव(घ) वह्निनिष्ठ इति, तन्न; तार्णत्वादिना सङ्करप्रसङ्गेन तादृशजातेरसम्भवात् । न च तृणादिजन्यतावच्छेदकतया तार्णत्वादे(ङ)र्नानात्वेऽप्यदोषात् तार्णत्वादिव्यापकं वैजात्यमिति वाच्यम्; अनन्तानां वैजात्यानां तदवच्छिन्नं प्रति अनन्तानां कारणत्वानां प्रतिबन्धकत्वानाञ्च कल्पने अतिगौरवात्, आर्द्रेन्धनजन्यवह्नित्वेनैवोपाधिना कारणत्वकल्पनस्य लघुत्वात् ।

एवं विलक्षणेन्धनजन्यवह्निना पाके रसादिविशेषो भवति, यथा हरिद्रानलेन पक्कं हरिद्राजलेन सिक्तं हारिणं मांसम् उपयोगात् सद्यो मारयतीति । तत्र तुल्यन्यायतया रसादिविशेषजनकतावच्छेदकत्वेनोपेयवा हरिद्रानलादिनिष्ठजात्या सङ्करप्रसङ्गाच्चेति ।

उत्तानास्तु रूपादिपरावृत्तिलक्षणदाह-वह्नि-धूमजनकतावच्छेदको नोदनाभिघातत्वादिविरुद्धा(१)र्द्रेन्धनसंयोगगतजातिविशेष एव कल्प्यते, दाहप्रतिबन्धकत्वेनाभिमतानां च मण्यादीनां तदवच्छिन्नं प्रत्येव प्रतिबन्धकत्वं कल्प्यते । रूपरसादिभेदेन दाहस्य नानात्वाद् दाहे वह्न्यादौ च तत्प्रतिबन्धकत्वकल्पने कार्य्यकारणभावबाहुल्यप्रसङ्गादित्याहुः ।

मूलानुसारेण युक्त्यन्तरमाह—'महती'ति । आर्द्रेन्धनत्वेन वह्नित्वेन च धूमं प्रति हेतुत्वे तदवच्छिन्नप्रकर्षादेव प्रकृष्टधूमोत्पत्तिर्वाच्या । प्रकृते तत्सत्त्वेऽप्यार्द्रेन्धनप्रभवप्रकृष्टवह्न्यनुत्पादे(२) प्रकृष्टधूमानुत्पादः, अतस्तत्त्वेन हेतुत्वमिति समुदायार्थः । दाहप्रतिबन्धकाभावस्यापि सत्त्वं प्रदर्शयितुमाह—'तत्प्रभव' इति । 'वह्न्यन्तरे' शुष्केन्धनजन्यवह्नौ । 'वदन्ती'त्यस्वरसोद्भावनम् । तद्बीजन्तु; धूमस्य प्रकर्षो न

(१) 'विरुद्धेन्धनवह्निसंयोग' इति पाठान्तरम् । (२) 'वह्न्यनुत्पादे' इत्यारभ्य 'अत' इत्यन्तग्रन्थस्थले 'वह्न्यनुत्पादेन तादृशधूमानुत्पादात्' इति पाठान्तरम् ।

**(घ) अत्रापि एवकारेण विशिष्टोपाधिव्यवच्छेदः प्रत्याख्यते । तथा च आर्द्रेन्धनप्रभववह्नित्वेनोपाधिना कारणत्वे विशेष्यविशेषणभावे विनिगमनाविरहात् कारणताबाहुल्यमवच्छेदकगौरवञ्च प्रसज्यत इति भावः ।**

**(ङ) तार्णत्वादेरिति-सिद्धस्येति शेषः ।**

जातिविशेषः, किन्तु महत्त्वातिशयः , स च न कार्य्यतावच्छेदकः, धूमस्य स्वकारणात् प्रकृष्टमहत्त्वस्य चावयवगतबहुत्वातिशयादेवोत्पत्तेरित्यादिकमिति ।

## तत्त्वचिन्तामणिः

तदुत्कर्षेण साध्योत्कर्षात् । अनन्यथासिद्धान्वयव्यतिरेकतो वैद्यकात् कारणतावगमेन घटोन्मज्जनप्रसङ्गेन च(१) साध्यव्यापकतानिश्चयात् ।

## दीधितिः

तदुत्कर्षेणेति,—आर्द्रेन्धनप्रभववह्निसामान्यं विना धूमसामान्यस्य प्रकृष्टतादृशवह्निं विना प्रकृष्ट(२)धूमस्यानुत्पादनियमादार्द्रेन्धनप्रभववह्नेरेव धूमोपधायकत्वम् । तत्र आर्द्रेन्धनप्रभववह्नित्वं कारणतावच्छेदकमर्थवशसम्पन्नं नान्तरीयकमेव वास्तु(३), फलतो न कश्चिद् विशेष इति भावः ।

'अनन्यथे'ति,—तादृशान्वयव्यतिरेकाभ्यामुद्भूतरूपस्य तद्वतो द्रव्यस्यैव वा कारणत्वम् , उभयथापि व्यापकत्वम् , उद्भूतरूपत्वेन तत्त्वं पुनरुपवर्णितमेव ।

'घटोन्मज्जने'ति ,—ध्वंसप्रागभावानधिकरणकालस्य प्रतियोग्यधिकरणत्वनियमादिति भावः(४) । न च प्रागभावस्य प्रतियोगिध्वंस(५) इव तद्ध्वंसोऽपि प्रतियोगिनो ध्वंस इति वाच्यम्; अप्रामाणिकध्वंसतत्कारणधाराकल्पनातो ध्वंसानन्तत्वकल्पनाया एवोचितत्वादिति(६) ।

## दीधितिप्रकाशः

मूलानुक्तमपि न्यूनताभङ्गाय पूरयति,—'आर्द्रेन्धनप्रभववह्निसामान्य'मिति । 'तादृशे'ति,—आर्द्रेन्धनप्रभवेत्यर्थः । 'अर्थवशसम्पन्न'मिति,—वह्न्यार्द्रेन्धनयोर्धूमजनकयोर्जन्यजनकभावः प्रत्यासत्तिरित्यभिप्रायः ।

(१) क्वचित् 'च'कारशून्यः पाठः । (२) 'प्रकृष्टतादृशधूमस्यानुत्पाद' इति पाठान्तरम् । (३) 'मेवास्तु' इति क्वचित् । (४) क्वचित् 'नियमा' दित्यन्तमेव वाक्यम् । (५) 'प्रागभावस्य ध्वंसः प्रतियोगिध्वंस इवे'ति पाठान्तरम् । अत्र इवेति भिन्नक्रमे बोध्यम् । (६) 'दिति भाव' इति क्वचित् पाठः ।

'फलत' इति,—आर्द्रेन्धनप्रभववह्नित्वेन व्यापकत्वस्योभयथापि(क) सम्भवादिति भावः। 'तादृशान्वये'ति,—उद्भूतरूपवत एव वह्निर्द्रव्यस्य(ख) प्रत्यक्षं, न तु तच्छून्यस्येत्येवमाकारकेत्यर्थः।

'तत्त्वं पुन'रिति,—वह्निर्द्रव्यस्य मूर्त्तस्य वा प्रत्यक्षं प्रति लाघवादुद्भूतरूपत्वेनैव कारणत्वम्। तत्र प्रत्यक्षस्य विषयता, रूपस्य समवाय इत्येवंरूपं(ज) सामानाधिकरण्यं प्रत्यासत्तिः। विषयस्य सामान्यतो विषयत्वेन, विशेषतस्तत्तद्व्यक्तित्वेन वा प्रत्यक्षे हेतुत्वम्, न तु यावानेव विषयनिष्ठो धर्मस्तेनेत्यादि प्रागेवोक्तमित्यर्थः।

मूले 'वैद्यकादि'ति,—नरस्य श्यामत्वे शाकाद्याहारपरिणामस्य प्रयोजकताया वैद्यकेन प्रतिपादनादिति भावः। घटोन्मज्जनं(१) स्पष्टयति दीधितौ 'ध्वंसप्रागभावे'ति। जन्यत्वेन विनाशित्वे साध्ये घटध्वंसस्यापि ध्वंसः प्रसज्येत। तथा च तदानीं घटध्वंसस्य तत्प्रागभावस्य चासत्त्वेन(२) उक्तव्याप्तिबलात् तद्घटसत्त्वप्रसङ्ग इत्यर्थः।

'न च प्रागभावस्ये'ति,—अन्यथा प्रागभावध्वंसस्य प्रतियोगिनो ध्वंसकाले प्राग(३)भावोन्मज्जनं स्यादिति भावः। प्रतियोगिध्वंसो यथा प्रागभावस्य ध्वंसः, तथा

(१) 'घटोन्मज्जन'मित्यनन्तरं 'घटोत्पत्ति'रिति पाठान्तरम्। तन्मते 'स्पष्टयती'त्यादि वाक्यान्तरम्। तत्र 'दीधिता'विति पाठो नास्ति। (२) 'चासत्त्वे' इति सप्तम्यन्तपाठः क्वाचित्कः। (३) क्वचित् 'ध्वंसकाले' इत्यनन्तरम् 'असत्त्वे' इत्यधिकः पाठः।

(क) 'उभयथापी'ति-विशिष्टरूपावच्छिन्नकारणत्वे पृथग्रूपावच्छिन्नकारणत्वे चेत्यर्थः। तथा हि कारणताया विशिष्टरूपावच्छिन्नत्वपक्षे विशिष्टरूपं यदि धूमव्यापकतावच्छेदकं न स्यात्, तदा धूमकारणतावच्छेदकं न स्यात्। पृथग्रूपावच्छिन्नकारणत्वकल्पे तादृशं रूपं यदि धूमव्यापकतावच्छेदकं न स्यात् तदा धूमकारणतावच्छेदकं न स्यादित्येवं तर्केणैव व्यापकताग्रह इति भावः।

(ख) द्रव्ये वह्नित्वविशेषणमात्मप्रत्यक्षे व्यभिचारनिवर्त्तकम्। गुणादिप्रत्यक्षे व्यभिचारवारकं विशेष्यदलम्।

(ज) यत्र विषयतासम्बन्धेन वह्निर्द्रव्यस्य मूर्त्तस्य वा प्रत्यक्षं (कार्य्यम्) तत्र समवायेन उद्भूतरूपं (कारणम्) इति प्रतीतिसिद्धं कार्य्यकारणयोः सामानाधिकरण्यमित्यर्थः।

ध्वंसध्वंसोऽपि प्रतियोगिध्वंसः। तथा च तत्काले प्रतियोगिध्वंसानधिकरणत्वमेव नास्तीति न तदुन्मज्जनमिति भावः।

'अप्रामाणिके'ति,—न च जन्यभावत्वापेक्षया लाघवाज्जन्यत्वेनैव ध्वंसं प्रति कारणत्वस्य कल्पने सामग्रीबलाद् ध्वंसस्यापि ध्वंसः, फलमुखगौरवस्यादोषत्वादिति वाच्यम्; तथापि प्रागभावप्रतियोगित्वरूप(१) जन्यत्वाल्लाघवेन सत्त्वेनैव ध्वंसहेतुताया उचितत्वात्, नित्यस्य च व्योमादेरसमवायिकारणनाशाभावाद् गुणादेश्चाश्रयनाश-विरोधिगुणयोरभावेन(क) विशेषसामग्रीविरहेणाविनाशोपपत्तेः, पाकस्यापार्थिव-रूपाद्यनाशकत्वात्, अन्यथा जन्यत्वेन हेतुत्वेऽपि पाकाज्जलतेजोऽवयविरूपादीनां विनाशः स्यात्।

यदि च कालिक(२)सम्बन्धेन सत्तावत्त्वापेक्षया समवायेन तद्वत्त्वे न लाघवम्, कालिक(३)सम्बन्धेन तद्वत्त्वञ्च ध्वंससाधारणमिति तस्यापि विनाश आपाद्यते, तदा विशेषसामग्रीनिरपेक्षस्य तन्मात्रस्य ध्वंसं प्रति प्रयोजकत्वे जन्यमात्रस्यैव क्षणिकत्वा-पत्तिः। विशेषसामग्र्यपेक्षणे च द्रव्यादिष्विव ध्वंसे फलाभावेन विशेषसामग्र्य-कल्पनान्न(४) तस्य विनाश इति, अत एवाह—'अप्रामाणिकध्वंसतत्कारणधारे'ति। 'ध्वंसानन्तत्वे'ति ध्वंसस्य अविनाशित्वमित्यर्थः(५)।

## तत्त्वचिन्तामणिः

तत् किं कार्यकारणयोरेव व्याप्तिः? तथा च बहुधा व्याकुलीस्यादिति चेन्न; तदुपजीव्यान्येषामप्यनुकूलतर्केण व्याप्तिनिश्चयात्(६)। यत्र च साध्यो-पाध्योर्हेतुसाध्ययोर्वा व्याप्तिग्राहकसाम्याशंकत्र व्याप्तिनिश्चयः, तत्र सन्दिग्धोपाधित्वम् व्यभिचारसंशया(७)धायकत्वात्। यदा च तादृश्येकत्रानुकूलतर्कावतारस्तदा हेतुत्वमुपाधित्वं वा निश्चितम्। पक्षेतरस्य स्वव्याघातकत्वेन न हेतुव्यभिचार-संशायकत्वम्(८)। अतो न सन्दिग्धोपाधिरपि सः।

(१) 'रूपाज्जन्यत्वाल्लाघवेन' इति पाठान्तरम्। (२) 'कालिकादि-सम्बन्धेन' इति पाठान्तरम्। (३) 'कालिकेन' इति पाठान्तरम्। (४) 'तस्य न विनाश' इति पाठान्तरम्। (५) पुस्तकविशेषे 'ध्वंसानन्तत्वेति ध्वंसस्य अविनाशित्वमित्यर्थ' इति पाठो नास्ति। (६) 'व्याप्तिग्रहात्' इति पाठान्तरम्। (७) 'संशयोपधायकत्वात्' इति पाठान्तरम्। (८) 'संशयाधायकत्वम्' इति पाठान्तरम्।

(क) अभावेनेति अन्यतरस्येति शेषः।

यत्तु पक्षेतरस्य यथा साध्यव्यापकत्वम्, तथा साध्याभावव्यापकत्वमपि, ग्राहकसाम्यात्। तथा च उभयव्यापकनिवृत्त्या साध्यतदभावाभ्यां पक्षे निवर्त्तितव्यम्, न चैवम्, तथा च पक्षेतरः साध्यव्यापकतासंशयेन सन्दिग्धः कथं परं दूषयेदिति, तन्न, तथापि हि साध्यव्यापकतापक्षमालम्ब्य हेतुव्यभिचारसंशयाधायकत्वेन दूषकत्वं(१)स्यादेव।

## दीधितिः

'कार्य्यकारणयोरेव' कार्य्यकारणभावग्राहकप्रमाणक्रोडीकृतयोरेव। 'पक्षेतरस्ये'त्यादि,—ननु सन्दिग्धोपाध्यन्तरवत् पक्षेतरोऽपि व्यभिचारशङ्कामादधानः केन वारणीयः? स्वव्याघातकत्वञ्च निराकृतमेव।

## दीधितिप्रकाशः

शाकपाकजत्वादेरकारणस्यापि व्यापकत्वोपदर्शनात् कार्य्यकारणयोरेवेत्याशङ्कनमनुचितमतो व्याचष्टे 'कार्य्यकारणभावग्राहके'ति। तत्क्रोडीकृतत्वं नियमतस्तज्जन्यप्रतीति(२)विषयत्वम्, तच्च कार्य्यकारणयोस्तत्त्वयोश्चाक्षतमिति(अ) भावः।

मूले 'तदुपजीव्ये'ति,—न च द्रव्यत्वेन गगनादेः परिमाणवत्त्वानुमाने कथं कार्य्यकारणभाव उपजीव्य इति वाच्यम्, घटादौ परिमाणद्रव्यत्वयोर्निरुपाधिसहचारग्रह एव तादृशव्याप्तौ मूलम्, घटादौ परिमाणसत्त्वे च अवयवगतमहत्त्वबहुत्वादीनां तत्कारणत्वकल्पनमेव(३) मूलमित्यादिरीत्या सर्वत्रैव तस्योपजीव्यत्वादिति।

'तत्' तत्समशीलम् निरुपाधिसहचारादिकम् 'उपजीव्ये'ति वार्थः। ननु अभिहितमेव मूले स्वव्याघातकत्वमत आह—'स्वव्याघातकत्वञ्चे'ति। 'निराकृतमेवे'ति—'तद्धि न सर्वानुमानसाधारण्य'मित्यादिना।

---

(१) 'दूषणम्' इति पाठान्तरम्। (२) 'प्रमितिविषयत्वम्' इति पाठान्तरम्। (५) 'तादृशव्याप्तौ मूल'मिति पाठान्तरम्। (४) 'जन्यत्वाजन्यत्वादिक'मिति पाठान्तरम्।

(अ) 'तत्त्वयो'रिति—कार्य्यत्वकारणत्वयोरित्यर्थः। तथा हि शाकपाकजत्वादेः कार्य्याद्यनात्मकत्वेऽपि कार्य्यत्वादिस्वरूपत्वादेव न दोषः।

## दीधितिः

अथात्र कश्चिदुपाधिर्भविष्यतीति शङ्का शङ्कापिशाचीत्वाद् यथा न व्यभिचार-शङ्काधायिका, तथा पक्षेतरस्योपाधित्वशङ्कापि। तदाहितापि च व्यभिचारशङ्का पक्षे व्यभिचारशङ्केव न प्रतिबन्धिका, अन्यथा निरुपाधिकसहचारभङ्गप्रसङ्गमात्रबल-प्रवृत्तानामनुमानानां विलयप्रसङ्गादिति चेन्न ; सन्दिग्धोपाध्यन्तरसाधारणव्यभिचार-शङ्काधानप्रयोजकरूपवता पक्षेतरेण तदाधाने प्रयोजनत्ततेः प्रतिबन्धकत्वासम्भवात्। व्यभिचारज्ञानत्वेन च प्रतिबन्धकतायां कारणविशेषजन्यत्वादिकं न निविशते गौरवात् मानाभावाच्च।

## दीधितिप्रकाशः

'शङ्कापिशाचीत्वा'दिति,—शङ्कासु मध्ये सर्वत्र सम्भावितत्वेन पीशाची(१)-तुल्यत्वादित्यर्थः। व्यभिचारशङ्काधानप्रयोजकसत्त्वे(ट) तदाधानमावश्यकमित्या-शयेनाह—'तदाहितापी'ति. पक्षेतरोपाधित्वशङ्काहितापीत्यर्थः। 'पक्षे व्यभिचार-शङ्के'ति,—पक्षे(२) व्यभिचारशङ्का यथा न प्रतिबन्धिका तथा तदाहितापि शङ्का न प्रतिबन्धिकेत्यर्थः।

'भङ्गप्रसङ्गमात्रे'ति मात्रपदेन कार्य्यकारणभावादिव्युदासः। 'अनुमानानाम्' गगनं परिमाणवत् द्रव्यत्वादित्यादीनाम्। 'विलयप्रसङ्गा'दिति,—सर्वत्रैव पक्षेतरो-पाधित्वशङ्कायाः सम्भवेन निरुपाधित्वाप्रसिद्धेरिति भावः।

'अथात्र कश्चिदि'(३)त्यादिप्रथमकल्पं दूषयति, 'सन्दिग्धोपाधी'ति। साधनाव्यापकत्वसन्देहे, साध्यव्यापकव्यभिचारित्वस्य साध्यव्यभिचारव्याप्यत्वात् तत्सन्देहेन व्यभिचार(ठ)सन्देहः। साध्यव्यापकत्वसन्देहे च साधनाव्यापक-व्याप्यत्वस्य साधनाव्यापकत्वव्याप्यत्वात् तत्सन्देहेन साध्ये साधनाव्यापकत्वसन्देहः,

---

(१) पुस्तकविशेषे 'शङ्कापिशाची'ति पाठः। (२) पुस्तकविशेषे 'पक्षे' इत्यारभ्य 'प्रतिबन्धिके'त्यन्त' ग्रन्थो न दृश्यते। (३) पुस्तकविशेषे 'अथात्र कश्चिदित्यादि' इति पाठो नास्ति।

---

(ट) 'प्रयोजके'ति तादृशप्रयोजकोपाधित्वशङ्केत्यर्थः। 'तदाधान'मिति व्यभिचार-शङ्काधानमित्यर्थः।

(ठ) 'व्यभिचारसन्देह' इति—साधने साध्यस्य व्यभिचारसन्देह इत्यर्थः।

तत्प्रयोजकं रूपं(१) साधननिष्ठसाध्यव्यभिचारव्याप्यसन्दिग्धव्यभिचारप्रतियोगित्वम् साध्ये साधनाव्यापकत्वव्याप्यसन्दिग्धव्याप्यत्वप्रतियोगित्वं पक्षेतरेऽप्यस्तीत्यर्थः। 'प्रयोजनक्षतेः' अनुमानविलयरूपायाः।

'तत्राहितापी'त्यादिद्वितीयकल्पं दूषयति–'व्यभिचारज्ञानत्वेने'ति। 'कारणे'ति–पक्षेतरज्ञानातिरिक्तकारणेत्यर्थः। 'अजन्यत्वादिक'मित्यादिना पक्षीयव्यभिचार-संशयान्यत्वपरिग्रहः।

## दीधितिः

कथमन्यथा करवह्निसंयोगः सर्वः संयोगो वा प्रत्यक्षसंयोगधर्मातिरिक्त-धर्मसमवायी समवायित्वादित्यादितो(२) न शक्त्यादिसिद्धिः? निरुपाधित्वे-ऽप्यप्रयोजकत्वादिति चेन्न, निरुपाधित्वस्यैव प्रयोजकत्वात्। तथात्वेऽपि चाप्रयोजकत्वे निरुपाधित्वाभिमतानामितरेषामपि तथात्वात्।

## दीधितिप्रकाशः

ननु पक्षेतरोपाधित्वशङ्काहितव्यभिचारशङ्कासत्त्वेऽपि व्याप्तिग्रहप्रतिबन्धा-भावात् तथान्वयव्यतिरेकानुविधानमेव मानमत आह—'कथमन्यथे'ति। 'अन्यथा' पक्षेतरोपाधित्वशङ्काद्यजन्यत्वस्य पक्षीयव्यभिचारसन्देहान्यत्वस्य वा निवेशने।

करवह्निसंयोगमात्रस्य पक्षत्वे संयोगान्तरे पक्षातिरिक्ते व्यभिचारसन्देहस्य संयोगान्यत्वस्य पक्षतावच्छेदकावच्छिन्नभिन्नत्वरूपपक्षेतरत्वादन्यस्य शुद्धसाध्य-व्यापकस्योपाधेः(३) सम्भवादाह(४) 'सर्वः संयोगो वे'ति। प्रत्यक्षो यः संयोगधर्मः, तदतिरिक्तो धर्मो द्वेधा, संयोगावृत्तिरप्रत्यक्षः संयोगधर्मश्च। तत्र आद्ये(ड)बाधात्

(१) क्वचित् 'तत्प्रयोजकं रूप'मित्यनन्तरं 'साधननिष्ठे'त्यादि-'पक्षेतरेऽप्यस्तीत्यर्थ' इत्यन्तपाठस्थले 'साध्यव्यभिचारव्याप्यसन्दिग्धव्याप्यत्वप्रतियोगित्वं पक्षेतरेऽप्यस्तीत्यर्थ' इत्येतन्मात्रपाठो दृश्यते। (२) 'समवायित्वादित्यत' इति पाठान्तरम्। (३) 'पाधित्वसम्भवादाह' इति पाठान्तरम्। (४) पुस्तकविशेषे 'आहे'ति नास्ति।

(ड) 'बाधा'दिति—संयोगावृत्तिधर्मस्य संयोगरूपपक्षे अभावादित्यर्थः

पक्षधर्मताबलादप्रत्यक्षसंयोगधर्मसिद्धिरित्यर्थः। तत्र व्याप्तिग्रहप्रतिबन्धकान्तरस्याभावात् पक्षीयव्यभिचारसंशयः पक्षेतरोपाधित्वशङ्काहितव्यभिचारसंशयश्च अनायत्या प्रतिबन्धकोऽभ्युपेय इति भावः।

'निरुपाधित्वेऽपी'ति,—तथा च तदनुरोधात् पक्षेतरोपाधित्वं न स्वीकर्त्तव्यमित्यर्थः(१)। 'अप्रयोजकत्वा'दिति—कार्य्यकारणभावादिव्याप्तिग्राहकतर्कशून्यत्वादित्यर्थः। 'इतरेषाम्' गगनं परिमाणवत् द्रव्यत्वादित्यादीनाम्। 'तथात्वात्'(२) अप्रयोजकत्वात्।

## दीधितिः

अत्र च कुत्र पक्षातिरिक्ते व्यभिचारशङ्का, कश्चायं व्यामोहो यद् व्याप्तिग्राहकदृढतरप्रमाणविरहिणि(३) निरुपाधित्वमिति। यतस्तत्रान्ततः(४) पक्षसपक्षैकदेशवृत्तिधर्मावच्छिन्नसाध्यव्यापकानां सपक्षैकदेशवृत्तिधर्माणामुपाधित्वं सम्भवति(५)। इत्थञ्च यथा नातिप्रसङ्गस्तथा तत्र तत्र वक्ष्याम इति। सत्यम्, कथकसम्प्रदायानुरोधात् कथायां सन्दिग्धोपाधित्वेन पक्षेतरो नोद्भाव्य इत्येवम्परोऽयं ग्रन्थ इत्याहुः।

## दीधितिप्रकाशः

'अत्र चे'ति, पक्षातिरिक्ते(६) साधनवति सर्वत्र साध्यवत्त्वनिर्णयादिति भावः। तथा च अनायत्या पक्षीयव्यभिचारसन्देह एव तत्र प्रतिबन्धक इति। पक्षेतरस्यानुपाधित्वेऽपि तदनुमानानां निरुपाधित्वं नास्तीत्याह—'कश्चाय'मिति। 'दृढतरे'ति, निर्दोषेत्यर्थः।

'अन्तत' इति,—शुद्धसाध्यव्यापकास्फूर्त्तिदशायामपीति। 'पक्षे'ति—तद्धर्मावच्छिन्नसाधनाव्यापकत्वरक्षार्थम्। तद्धर्मावच्छिन्नसाध्यव्यापकत्वरक्षणाय 'सपक्षैकदेशे'ति। सपक्षैकदेशवृत्तिधर्मस्य सपक्षान्तरे अभावाद् यावत्सपक्षवृत्तिधर्मावच्छिन्नसाध्यस्य च सर्वत्रैव सपक्षे सत्त्वात् साध्याव्यापकत्वपरिहाराय 'एकदेशे'ति।

---

(१) 'स्वीकर्त्तव्यमिति भाव' इति पाठान्तरम्। (२) 'तत्त्वात्' इति पाठान्तरम्। तन्मते दीधितावपि स एव पाठः प्रतिपत्तव्यः। (३) 'विरहिणा'मिति पाठान्तरम्। (४) 'यतस्तत्र तत्रान्तत' इति पाठान्तरम्। (५) 'सम्भाव्यते' इति पाठान्तरम्। (६) 'रिक्तसाधन' इति पाठान्तरम्।

तादृशोपाधेः पक्षवृत्तित्वे साधनव्यापकत्वमेव स्यादतः पक्षावृत्तित्वलाभाय 'सपक्षैकदेशे'ति। यथा गगनं परिमाणवद् द्रव्यत्वादित्यादौ गगनपृथिव्यन्यतर-त्वावच्छिन्नसाध्यव्यापकं पृथिवीत्वमुपाधिरित्यर्थः।

ननु पक्षेतरस्यापि सन्दिग्धोपाधित्वे पक्षीयव्यभिचारशङ्कायाश्च प्रतिबन्धकत्वे पर्वतो वह्निमान् धूमादित्यादिप्रसिद्धानुमानविलयप्रसङ्ग इत्यत आह—'इत्थञ्चे'ति। तादृशशङ्कायाः प्रतिबन्धकत्वे चेत्यर्थः। 'वक्ष्याम' इति,—अनुकूलतर्कानवतारदशायां तत्प्रतिबन्धकत्वमिष्टमेव, तर्काच्छङ्का(ढ)निवृत्तावेवानुमानप्रवृत्तिरिति हेत्वाभासादौ वक्ष्यत इत्यर्थः(१)।

## तत्त्वचिन्तामणिः

ननु यत्रोपाधिस्तत्रानुकूलतर्को यदि नास्ति, तदा तदभावेनैव व्याप्तेरग्रहः। अथास्ति, तदा साध्यव्याप्याव्यापकत्वेनोपाधिः साध्याव्यापकत्वादिनिश्चयान्नो-पाधिरित्युभयथापि नोपाधिर्दूषणम्।

न च व्याप्त्यभावव्याप्यमुभयम्, अत उपाधिरपि तदभावोन्नयनेन दोष इति वाच्यम्; उपाधेरात्मलाभार्थमनुकूलतर्काभावोपजीवकत्वेन तस्यैव दोषत्वादिति चेन्न, सोपाधावेकत्र साध्यतदभावसम्बन्धस्य विरुद्धत्वादवच्छेदकभेदेन तदुभय-सम्बन्धो वाच्यः। तथा च साधने साध्यसम्बन्धितावच्छेदकं रूपमुपाधिरावश्यकः(२), तथा अनुकूलतर्काभावोऽप्यावश्यक इति उभयोरपि विनिगमकाभावाद् दूषकत्वम्(३)।

## दीधितिः

'सोपाधावेकत्रे'त्यादि,—उपलक्षणमेतत्। व्यभिचारिण्युपाधेरवश्यम्भाव-मात्रे तात्पर्य्यम्। उपजीव्योपजीवकभावो हि न कार्य्यकारणभावः; असम्भवात्। व्याप्यव्यापकभावस्तु अकिञ्चित्कर एव, विशेषतस्तु ज्ञायमानदूषकतायामेक-मविज्ञायाप्यन्यतरज्ञानाच्च न ज्ञाप्यज्ञापकभावः। न चानुकूलतर्कविरहादेव व्याप्तेरग्रहे कृतमुपाधिज्ञानेन, विनाप्यनुकूलतर्कं व्यभिचाराग्रहे व्याप्तिग्रहसम्भवादिति भावः।

(१) 'इति भाव' इति पाठान्तरम्। (२) 'रूपमनुकूलतर्काभावोपजीवनमन्त-रेणोपाधिरावश्यक' इति क्वचित् पाठः। (३) 'दूषकत्वा'दिति पाठान्तरम्।

(ढ) 'तर्कात्' अनुकूलतर्कात्। 'शङ्कानिवृत्तौ' व्यभिचारशङ्कानिवृत्तावित्यर्थः। व्यभिचारापादकतर्कस्य व्यभिचारवत्ताबुद्धिं प्रति प्रतिबन्धकत्वस्य क्लृप्तत्वादिति भावः।

# दीधितिप्रकाशः

सर्वत्रैवानुकूलतर्कस्य व्याप्तिग्रहे हेतुत्वमित्यभिप्रायेणाशङ्कते मूले 'ननु यत्रोपाधि'रित्यादिना। 'उपाधे'रिति,—'उपाधेः' उपाधित्वेन तज्ज्ञानस्य। 'आत्मलाभार्थम्' स्वनिष्पत्त्यर्थम्। 'उपाधेः' उपाधिस्वरूपस्य। 'आत्मलाभार्थम्' उपाधित्वेन स्वज्ञानार्थमिति वा अर्थः।

'अनुकूलतर्काभावोपजीवकत्वेने'ति,–अनुकूलतर्कसत्त्वे साधने साध्यव्याप्यत्व-ग्रहात् साध्यव्याप्याव्यापकत्वेन उपाधेः साध्याव्यापकत्वनिर्णये साध्यव्यापकत्व-घटितोपाधित्वस्य ज्ञानमेव न स्यादत उपाधित्वज्ञाने अनुकूलतर्काभाव उपजीव्य इत्यर्थः। अनुकूलतर्काभावस्यापि फले उपाधिरुपजीव्यः, साध्यसहचरिते हेतौ साध्याभावसामानाधिकरण्यज्ञानजननेन(१)हि तस्य दोषत्वम्, तज्ज्ञाने च साध्य-सम्बन्धितावच्छेदकविधयोपाधिज्ञानमुपजीव्यम्, साध्याभावसम्बन्धिनि विरुद्धस्य साध्यसम्बन्धस्य अवच्छेदकभेदं विना अज्ञानादित्युपाधेरात्मलाभार्थमनुकूलतर्का-भावस्यैव तस्य फले साध्याभावसम्बन्धबोधे उपाधेरुपजीव्यत्वाद्विनिगमनाविरहा-दुभयोर्दोषत्वमिति 'सोपाधा'वित्यादिमूलस्यार्थः, तं दूषयितुमाह—'उपलक्षण'मिति। 'एतत्' उपाधेरुपजीव्यत्वाभिधानम्। उपलक्ष्यं दर्शयति 'व्यभिचारिणी'ति। उपलक्षणत्वाभिधाने बीजमाह–'उपजीव्य' इति। 'असम्भवादि'ति,–उपाधिस्वरूपस्य अनुकूलतर्काभावस्वरूपस्य च तत्(२)फलयोर्वा परस्परमुपजीव्योपजीवकभावाभावा-दनुकूलतर्केण हेतौ साध्यव्याप्यत्वग्रहेऽपि तदव्यापकत्वाप्रतिसन्धानदशायामुपाधेः साध्यव्यापकत्वग्रहसम्भवात् साध्याभावसम्बन्धिनि साध्यसम्बन्धस्याविरुद्धत्वेना-वच्छेदकग्रहानपेक्षणादनुकूलतर्काभावकालेऽप्युपाधेरुपजीव्यत्वासम्भवादित्यर्थः।

'व्याप्यव्यापकभावस्त्वि'ति,—यद्यपि उपाधेरनुकूलतर्काभावव्याप्यत्वेऽपि अनुकूलतर्काभावस्य सद्धेतावपि कदाचित्(३) सम्भवेन नोपाधिव्याप्यत्वम्,

(१) 'जनने' इति सप्तम्यन्तपाठः क्वाचित्कः। (२) 'तत्फलयोर्वा' इति पाठो न सर्वत्र दृश्यते। (३) 'क्वचित्' इति पाठान्तरम्।

तथापि अनुकूलतर्कपदं सत्तर्क(ण)विषयीभूतापाद्यव्यतिरेक(१)परम्, तदभावस्तु न(त) सद्धेताविति भावः। 'अकिञ्चित्कर' इति,—व्याप्यत्वेनैवोपजीव्यतेत्यस्य निर्युक्तिकत्वादिति भावः।

ननु स्वरूपसद्दूषकतायां व्यापकस्याधिकदेशवृत्तेरन्यत्र दूषकत्वकल्पनेनैवान्यथासिद्धत्वान्न्यूनदेशवृत्तेर्व्याप्यस्य न दूषकत्वं कल्प्यत इत्यस्यैव विनिगमकत्वमत आह—'विशेषतस्त्वि'ति। एकतराज्ञानकालेऽपि अन्यतरज्ञानाद् व्याप्तिग्रहप्रतिबन्धोदयान्नैतद् बीजमिति भावः। अनुकूलतर्काभावस्यानुमानविधया व्यभिचारधीद्वारा दूषकत्वमित्यभिप्रायेणेदम्।

अनुकूलतर्कस्य व्याप्तिग्रहे कारणत्वात् तदभावः कारणाभावतया स्वरूपसन्नेव व्याप्त्यग्रहप्रयोजक इत्यभिप्रायेण शङ्कते—'न चानुकूले'ति। व्यभिचारशङ्काप्रतिबन्ध(२)मात्रे अनुकूलतर्कस्य प्रयोजकत्वम्, न तु तस्य कारणत्वमित्यभिप्रायेण परिहरति—'विनापी'ति। तथा च अनुकूलतर्कं विनापि व्याप्तिग्रहप्रसक्तौ तत्प्रतिबन्धकीभूतव्यभिचारधीसम्पादनद्वारा(३) उपाधेर्दूषकत्वमत्तमिति भावः।

## तत्त्वचिन्तामणिः

अन्ये तु यद्व्यावृत्त्या यस्य साधनस्य साध्यं निवर्त्तते, स धर्मस्तत्र हेतावुपाधिः। स च धर्मो यस्याभावात् पक्षे साध्यसाधनसम्बन्धाभावः, यथा

(१) 'आपाद्यपरम्' इति पाठान्तरम्। तच्च न समीचीनम्, तदभावस्त्वित्याद्युत्तरग्रन्थस्य सहैव निरुद्धस्यानुपपत्तेः। (२) 'बन्धकत्व' इति पाठान्तरम्। (३) 'सम्पादनेन' इति पाठान्तरम्।

(ण) धूमवान् वह्नेरित्याद्यसद्धेतुकस्थले वह्निर्यदि धूमव्यभिचारी स्याद् द्रव्यं न स्यादित्याद्यसत्तर्कविषयीभूतस्य द्रव्यत्वाभावरूपस्यापाद्यस्ययो व्यतिरेको द्रव्यत्वं तदभावरूपप्रकृतानुकूलतर्काभावस्य उपाधिमति प्रकृतहेतावबर्त्तमानतया उपाधेस्तादृशानुकूलतर्काभावव्याप्यत्वासम्भव इति सत्तर्कानुधावनम्।

(त) 'तदभावस्तु' इत्यस्य सत्तर्कविषयीभूतापाद्यव्यतिरेकाभावस्त्वित्यर्थः। तथा हि वह्निमान् धूमादित्यादिसद्धेतुस्थले धूमो यदि वह्निव्यभिचारी स्यात्तदा वह्निजन्यो न स्यादित्यादिसत्तर्कस्य विषयीभूतमापाद्यं यत् वह्निजन्यत्वाभावादि तद्व्यतिरेको वह्निजन्यत्वादिः तदभावात्मकस्यानुकूलतर्काभावस्य धूमादिरूपसद्धेतौ न सम्भव इति भावः।

आर्द्रेन्धनवत्त्वम्। व्यावर्त्तते हि तद्व्यावृत्त्या धूमवत्त्वमयोगोलके। अत एव तत्र साध्यसाधनसम्बन्धाभावः पक्षे।

एवं भावत्वव्यावृत्त्या ध्वंसे जन्यत्वानित्यत्वयोः सम्बन्धो निवर्त्तमानः पक्षधर्मताबलादनित्यत्वाभावमादाय सिध्यति। तथा वायावुद्भूतरूपवत्त्वं निवर्त्तमानं बहिर्द्रव्यत्वे सति प्रत्यक्षत्वं निवर्त्तयत् प्रत्यक्षत्वाभावमादाय सिध्यति। तथा च उभयत्रापि पक्षे साध्याभावसिद्ध्या साध्यसाधनसम्बन्धाभावोऽस्तीति। अत एव बाधानुन्नीतपक्षेतरस्यानुपाधित्वम्; स्वव्याघातकत्वेन तद्व्यतिरेकस्य साध्याव्यावर्त्तकत्वादिति।

## दीधितिः

'यद्व्यावृत्त्ये'ति,—अत्र पक्ष इति पूरणात्(१) पक्षनिष्ठसाध्यव्यावृत्त्युन्नायकव्यावृत्तिप्रतियोगित्वमर्थः। सत्प्रतिपक्षोन्नायकत्वञ्चात्र दूषकताबीजम्। तत्र(२) चाप्रयोजकत्वात् साधनाव्यापकत्वं नोक्तम्(३)।

साधनस्य सोपाधित्वव्युत्पादनायैव केवलं 'यस्य साधनस्ये'ति। यद्वा साधनस्येत्यनन्तरमधिकरण इति पूरणात् साधनवन्निष्ठसाध्यव्यावृत्त्युन्नायकव्यावृत्तिप्रतियोगित्वमर्थः। तथा च यद्व्यभिचारित्वेनेत्यादेरुपदर्शितार्थनिष्कर्ष एवायम्।

शुद्धस्य साधनावच्छिन्नस्य च साध्यस्य व्यापकानामुपाधीनां पक्षे क्वचित् साधनवति वा साध्याभावस्यैकमुन्नयनप्रकारमाह—'स चे'त्यादि। साधनवत्त्वेन ज्ञायमाने पक्षे साध्यसाधनसम्बन्धाभावः सिध्यन् पक्षधर्मताबलात् साध्याभावमादायैव पर्य्यवस्यति।

## दीधितिप्रकाशः

ननु पर्वतो वह्निमान् धूमादित्यादौ महानसत्वादावतिव्याप्तिः, ह्रदो वह्न्यभाववान् ह्रद(४)महानसान्यतरत्वे सति महानसत्वाभावादिति क्रमेण तद्व्यावृत्तेरपि

(१) 'पूरणीयम्' इति क्वचित् पाठः। (२) 'अत्र' इति क्वचित् पाठः। (३) 'नोपात्तम्' इति पाठान्तरम्।

(४) ह्रदपरिहारेण घटादीनां ह्रदभिन्नानामन्यतरत्वघटकत्वेन परिग्रहे स्वरूपासिद्धिः स्यादतः सत्यन्तघटकान्यतरत्वगर्भे ह्रदेति। सत्यन्तगर्भे महानसपरिहारेण केषाञ्चिद् वह्न्यभाववतां घटादीनां निवेशे विशेष्यदलवैयर्थ्यम्। वह्निमतां पर्वतादीनां निवेशे तदन्तर्भावेण व्यभिचारः। विशेष्यदलानिवेशे महानसान्तर्भावेण व्यभिचारो बोध्यः।

क्वचित्(द) साध्यव्यावर्त्तकत्वादत आह—'अत्र(१) पक्ष' इति। पक्षनिष्ठा या साध्यव्यावृत्त्युन्नायिका व्यावृत्तिः(ध) तत्प्रतियोगित्वमित्यर्थः। उन्नायकत्वं तद्योग्यता, तेन व्याप्तेर्लाभः।

ननु ह्रदो वह्निमान् धूमादित्यादौ(२) वह्निसामग्र्यादौ तदतिव्याप्तिः तेषां व्यभिचारानुन्नायकत्वादत आह—'सत्प्रतिपक्षे'ति। तत्र तेषां लक्ष्यत्वमेवेति भावः। 'अत्र' सत्प्रतिपक्षोन्नयने।

नन्वेवं पक्षे यद्व्यावृत्त्या साध्यं व्यावर्त्तेत(३) इत्यत एव सामञ्जस्ये यस्य साधनस्येति व्यर्थमत आह—'साधनस्ये'ति। यत्साधनीयं साध्यं निवर्त्तते तत् साधनं सोपाधि इत्येवं परम्परासम्बन्धलाभायेत्यर्थः। केवलपदमवधारण(४)-परम्, न तु लक्षणे विवक्षितमित्यवधारणार्थः।

लक्षणे तत्सत्त्व(५)मप्युपपादयितुं कल्पान्तरमाह—'यद्वे'ति। नन्वेवं यदभावेन साधनवति साध्यं निवर्त्तेत इति पूर्वलक्षणार्थेन पौनरुक्त्यमत आह—'तथा चे'ति। तथा च यद्व्यभिचारित्वेनेत्यस्य तदर्थपरतया व्याख्यानं न कर्त्तव्यमिति भावः।

ननु यद्व्यावृत्त्या साध्यं व्यावर्त्तेत(६) इति लक्षणमुपक्रम्य साध्यसाधन-सम्बन्धव्यावर्त्तकत्वरूपतदर्थोपवर्णनेनोपसंहारो विरुद्ध इत्यत आह—'शुद्धस्ये'ति। तथा च उन्नयनप्रकारमात्रकथनम्, न तु लक्षणार्थोपवर्णनमिति न विरोधः।

---

(१) 'अत्रापि' इति पाठान्तरम्। तन्मते दीधितावपि स एव पाठः। (२) 'धूमादित्यादावतिव्याप्ति'रिति पाठान्तरम्। (३) 'निवर्त्तते' इति पाठान्तरम्। (४) 'धारणे' इति पाठान्तरम् 'पर'मिति नास्ति। (५) 'तत्प्रवेश' इति पाठान्तरम्। (६) 'निवर्त्तेत' इति पाठान्तरम्।

---

(द) 'तद्व्यावृत्तेरपी'ति महानसत्वादिव्यावृत्तेरपीत्यर्थः। 'क्वचित्' निरुक्तरूपस्थले ह्रदादौ। 'साध्यव्यावर्त्तकत्वात्' वह्न्यादिरूपसाध्याभावसाधकत्वादित्यर्थः।

(ध) पक्षनिष्ठत्वस्य साध्यव्यावृत्तौ प्रथमोपस्थितायां विशेषणत्वे अयोगोलकं धूमवद् वह्नेरित्यादौ अयोगोलकात्मकपक्षनिष्ठा या धूमरूपसाध्यव्यावृत्तिस्तदुन्नायकवह्निव्यावृत्ति-प्रतियोगितया वह्न्यादावतिव्याप्तिरिति प्रथमोपस्थितसाध्यव्यावृत्तिमपहाय तदुन्नायकव्यावृत्तौ पक्षनिष्ठत्वं विशेषणम्।

प्रथमव्याख्यानुसारेणाह—'पक्ष' इति। द्वितीयव्याख्यानुसारेणाह—'क्वचित् साधनवती'ति। 'एक'मिति—साधनावच्छिन्नसाध्यव्यापकोपाध्यनुरोधेनैव(१) तत्-प्रकारस्याश्रयणीयत्वे शुद्धसाध्यव्यापकस्थलेऽपि तत्प्रकारः सम्भवतीत्याशयेनो-भयसाधारणोन्नयनप्रकारकथनमिति भावः। साध्यसाधनसम्बन्धाभावसिद्धौ कथं साध्याभावसिद्धिरत आह,—'साधनवत्त्वेने'ति। विशिष्टाभावस्यैव तत्सम्बन्धाभा-वस्यापि अनतिरिक्तत्वादिति भावः।

## दीधितिः

ननु शुद्धसाध्याभावोन्नायकस्यार्द्रेन्धनवत्त्वादेः कथं साध्यसाधनसम्बन्धा-भावोन्नायकत्वमत आह—'व्यावर्त्तते ही'ति(४)। 'अत एवे'ति,—साध्याभावसत्त्वे साध्यसाधनसम्बन्धाभावस्यावश्यकत्वात्तदुन्नायकत्वमक्षतमिति भावः। 'द्रव्यत्व' इति—द्रव्यत्वस्य हेतुत्वाभिप्रायेण। अयञ्च प्रायशः सम्भवतीत्यभिहितः।

वस्तुतस्तु प्रकारभेदेऽपि न क्षतिः। तथा च शुद्धसाध्यव्यापकोपाधिस्थले शुद्धसाध्याभावः अवच्छिन्नतद्व्यापकस्थले त्ववच्छेदकवत्यवच्छिन्नसाध्याभावोऽव-च्छेदकवत्त्वविशेषितेन चोपाधिविरहेण शुद्धसाध्याभावः साधनीयः। अत एव गगनादौ स्पर्शवत्त्वेन प्रमेयत्वेन च प्रत्यक्षत्वे साध्ये वहिर्द्रव्यत्वावच्छिन्नसाध्य-व्यापकस्य उद्भूतरूपस्य तादृशसाध्याभावोन्नयनहेतुत्वमिति।

पक्षे यद्व्यावृत्त्या यस्य साधनस्य सम्बन्धि यत्साधनविशिष्टं साध्यं निवर्त्तते इत्यर्थस्तु यथाश्रुतग्रन्थस्वरससिद्धः। तत्र दूषकताबीजं यदि सत्प्रतिपक्षोन्नाय-कत्वम्, तदा साधनानुप्रवेशो व्यर्थः, जलं द्रव्यं गन्धवत्त्वादित्यादौ पृथिवीत्वादावति-व्याप्तिश्च।

## दीधितिप्रकाशः

ननु साध्यसाधनसम्बन्धाभावोन्नायकत्वप्रदर्शने प्रकृते कर्त्तव्ये शुद्धसाध्या-भावोन्नायकत्वप्रदर्शनमसङ्गतमतस्तत् सङ्गमयितुं शङ्कामवतारयति—'नन्वि'ति। 'साध्याभावसत्त्व' इति, तथा च साध्याभावस्य साध्यसम्बन्धाभावव्याप्यत्वात् व्याप्य व्याप्यस्य सुतरां तद्व्याप्यत्वादित्यभिप्रायेण उपाध्यभावे साध्याभावे व्याप्यत्वं

(१) 'नैतत्' इति पाठान्तरम्।

दर्शयितुं शुद्धसाध्यव्यावर्त्तकत्वमुक्तमिति भावः। वायोः प्रत्यक्षत्वे साध्ये प्रत्यक्ष-स्पर्शाश्रयत्वस्यैव हेतुत्वेन प्रतिपादनात् 'द्रव्यत्वे सती'ति मूलमनुपपन्नमत आह— 'द्रव्यत्व इती'ति। द्रव्यपदं वहिर्द्रव्यपरम्, प्रत्यक्षपदं वा वहिरिन्द्रिय(१)प्रत्यक्षपरम्।

ननु उक्तक्रमेणोन्नायकतयैव उपाधेर्दूषकत्वे यत्र साध्यसाधनसम्बन्धाप्रसिद्धया पक्षस्य साधनवत्त्वेनाज्ञानेनाव्यापकत्वेन वा उपाधेर्नैतत्प्रकारस्य(२) सम्भवः, तत्र निरुक्तलक्षणस्या(३)सङ्गतत्वादसङ्गतिरत आह—'अयञ्चे'ति। 'प्रायश' इति,— तथा च प्रायिकोऽयं प्रकारः, न तु सार्वत्रिक इति भावः।

'शुद्धसाध्याभाव' इति— साधनीय इत्यग्रेतनेनान्वयः। 'अवच्छेदकवती'ति,— विशेषणवत्त्वेन ज्ञाने विशिष्टाभावबुद्धेर्विशेष्याभावावलम्बितत्वादिति भावः। विशिष्टा-भावस्यातिरिक्तत्वपक्षेऽप्याह —'अवच्छेदकवत्त्वविशेषितेने'ति। 'प्रायश' इत्यस्य व्यावृत्तिं स्फुटयति(४)—'अत एवे'ति। गगनं प्रत्यक्षं स्पर्शात् प्रमेयत्वाद्वेत्यादौ(५) गगनं (न)तदुभयसम्बन्धाभाववद् उद्भूतरूपाभावादित्यत्र पक्षे गगने(६) शुद्धसाध्या-भावोन्नायकत्वसम्भवात् द्वितीय(प)हेत्वनुसरणम्। तत्र गुणादौ व्यभिचारात् प्रत्यक्षत्वप्रमेयत्वसम्बन्धव्यापकत्वाभावादुद्भूतरूपस्य न तथा(फ) उन्नायकत्वमिति।

---

(१) 'वहिरिन्द्रियज' इति पाठान्तरम्। (२) 'प्रकारसम्भव' इति पाठान्तरम्। (३) 'सत्त्वादसङ्गतिरत आह' इति पाठान्तरम्। (४) 'स्पष्टयति' इति पाठान्तरम्। (५) 'प्रमेयत्वाद्वेत्यत्र' इति पाठान्तरम्। (६) 'पक्षे गगने' इत्यनन्तरं 'तादृशसाध्याभावेति' इत्यतः पूर्वम् क्वचित् पुस्तके 'स्पर्शात्मकसाधनवत्त्वेन ज्ञानाभावान्नोक्तक्रमेण पक्षे साध्याभावसिद्धिपर्य्यवसानम्। अत्र क्वचित् स्पर्शवति उभयसम्बन्धाभावस्य साधने शुद्धसाध्याभावोन्नायकत्वसम्भवाद् द्वितीयहेत्वनुसरणम्। तत्र गुणादौ व्यभिचारात् प्रत्यक्षत्वप्रमेयत्वसम्बन्धव्यापकत्वाभावादुद्भूतरूपस्य न तथोपाधित्वमिति' इति पाठो दृश्यते।

(न) 'तदुभयसम्बन्धाभावव'दिति साध्यसाधनसम्बन्धाभाववदित्यर्थः। स्पर्शरूपप्रथम-हेतुकल्पे स्पर्शप्रत्यक्षत्वोभयसम्बन्धाभाववदिति भावः।

(प) 'द्वितीयहेत्वनुसरणं' प्रमेयत्वरूपद्वितीयहेत्वनुधावनमित्यर्थः।

(फ) 'न तथा उन्नायकत्व'मिति स्पर्शहेतुकल्पोक्तरीत्या न प्रकृतसाध्यसाधनोभयसम्बन्धा-भावोन्नायकत्वमुद्भूतरूपाभावस्येत्यर्थः।

अत्र क्वचित् स्पर्शवति तदुभयसम्बन्धाभावस्य साधने तादृशस्पर्शात्मकसाधनवत्त्वेन ज्ञानाभावान्नोक्तक्रमेण शुद्धसाध्याभावसिद्धिपर्य्यवसानम्। 'तादृशसाध्याभावे'ति,— वहिर्द्रव्यत्वेन विशेषिते गगने वहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वाभावस्य वहिर्द्रव्यत्वे सत्युद्भूतरूपाभावादिति क्रमेण वा प्रत्यक्षत्वरूपशुद्धसाध्याभावस्योन्नायकत्व-मित्यर्थः।

यथाश्रुतार्थत्यागे वीजमादर्शयितुं यथाश्रुतार्थमाह 'यत्र' इत्यादिना। 'यत् साधनसम्बन्धी'त्येतावन्मात्रेण साधनविशिष्टसाध्याभावोन्नायकत्वालाभात् तदर्थ-माह—'यत् साधनविशिष्ट'मिति। वैयर्थ्यमुक्त्वा विपरीतार्थकत्वमप्याह—'जल'-मिति। तत्र पृथिवीत्वस्य जले द्रव्यत्वाभावानुन्नायकत्वेनालक्ष्यत्वात् गन्धविशिष्ट-द्रव्यत्वाभावोन्नायकत्वेन च लक्षणसत्त्वादित्यर्थः। एवमग्रेऽप्यूह्यम्। तदेत्यादि दूषणं पूर्वत्रापि बोध्यम्।

## दीधितिः

अथासिद्ध्युन्नायकत्वम्, तदा साध्यानुप्रवेशो निरर्थकः, जलं गन्धवत् द्रव्यत्वादित्यादौ पृथिवीत्वादावतिप्रसङ्गश्च।

अथ यथासम्भवमसिद्धेः सत्प्रतिपक्षस्य चोन्नायकत्वम्, तदा वायुः स्नेहवान् गन्धवत्त्वादित्यादौ जलत्वपृथिवीत्वादा(१)वव्याप्तिः, साधनविशिष्टसाध्याप्रसिद्धेः। साध्यसाधनवत्त्वप्रकारकबोधविरोधिबुद्धिकाभावोन्नायकत्वमर्थः। विरुणद्धि चैकैका-भावबुद्धिरुभयवत्ताबोधम्(२)। विरुद्धस्थले तु भ्रमादिरूपतथाविधबोधप्रसिद्ध्या समन्वय इत्यपि वदन्ति।

## दीधितिप्रकाशः

'साधनविशिष्टसाध्याप्रसिद्धे'रिति,—साध्यसाधनोभयं निवर्त्तत इत्यर्थे तु यद्यपि नायं दोषः, विरुद्धयो(३)रुभयत्वेनाभावस्य सुलभत्वात्, तथापि यत्र भिन्न(४)सम्बन्धेन साध्यसाधनभावः, तत्र सद्धेतौ 'पर्वतो(५) वह्निमान्

---

(१) 'जलत्वादावव्याप्ति'रिति क्वचित् पाठः। (२) 'बुद्धिम्' इति पाठान्तरम्। (३) 'विरुद्धयोरप्युभयत्वेने'ति पाठान्तरम्। (४) 'भिन्नभिन्ने'ति क्वचित् पाठः। (५) ग्रन्थविशेषे 'पर्वत' इत्यारभ्य 'तदुन्नायक' इत्यन्तग्रन्थो न दृश्यते।

एतद्रूपादित्यादौ हेतुतावच्छेदकसम्बन्धेन(१) समवायेन साध्यतावच्छेदकेन संयोगेन वा उभयाभावस्य केवलान्वयितया(२) तदुन्नायकपर्वतत्वादिरूपव्यतिरेकप्रतियोगिनि पर्वतत्वाभावादावतिव्याप्तिरिति । साध्यवत्त्वप्रकारकप्रमाविशेष्यत्वसाधनवत्त्वप्रकारकप्रमाविशेष्यत्वोभयं निवर्त्तते इत्यर्थे तु अवृत्तिहेतुके तत्साध्यके चा(ब)-प्रसिद्धिरित्यादिकमूह्यम् ।

यथासम्भवमसिद्धेः सत्प्रतिपक्षस्य(३) उन्नायकत्वं लक्ष्यतानियामकमिति पक्ष एव निष्कर्षमाह—'साध्यसाधनवत्त्वे'ति । साध्यवत्त्वप्रकारकसाधनवत्त्वप्रकारको यो बोधस्तद्विरोधिनी बुद्धिर्यस्य एवम्भूतो योऽभावः साध्यस्य साधनस्यवा भावः(४), पक्षे(भ) तदुन्नायकव्यतिरेकप्रतियोगित्वमित्यर्थः ।

पर्वतत्वाद्यवच्छेदेन वह्न्याद्यभावभ्रमदशायां पर्वतत्वादि(५)बुद्धेरपि व्यावर्त्तकधर्मदर्शनादिविधया तादृशबोधविरोधित्वात् तदुन्नायकेऽतिव्याप्ति वारणाय 'अभावे'ति ग्राह्याभावमुद्रया विलक्षण(म)विरोधित्वप्रापकम् । अत्र यद्यपि साध्यसाधनघटादिमत्त्वबोधस्यापि तादृशत्वात् (य) तद्विरोधि-बुद्धिकघटाद्यभावस्योन्नायके अतिव्याप्तिः, तादृशबोधत्वावच्छिन्नविरोधित्वञ्चा-

(१) हेतुतावच्छेदकेन समवायेन' इति पाठान्तरम् । (२) 'केवलान्वयित्वात्' इति पाठान्तरम् । (३) क्वचित् 'च' इत्यत्र 'वा' कारः पठ्यते । (४) क्वचित् 'वा'कारस्थले चकारपाठः । (५) 'पर्वतत्वादेर्बुद्धेरपि' इति पाठान्तरम् ।

(ब) अवृत्तिहेतुके साधनवत्त्वप्रकारकप्रमायाः अवृत्तिसाध्यके च साध्यवत्त्वप्रकारक-प्रमाया अप्रसिद्धया तन्निरूपितविशेष्यत्वद्वयलक्षणप्रतियोग्यप्रसिद्धिरित्यर्थः । एवञ्चालीक-प्रतियोगिकनिवृत्तिरप्यसिद्धेति भावः ।

(भ) 'पक्ष' इति—प्रकृतपक्ष इत्यर्थः । अत्र पक्षाप्रवेशे अन्यत्र साध्यसाधनाभावोन्नायक-व्यतिरेकप्रतियोगिनि प्रकृतोपाधिभिन्ने अतिप्रसङ्गापात इति भावः ।

(म) 'विलक्षणे'ति—व्यावर्त्तकधर्मदर्शनादिव्यावृत्तेत्यर्थः ।

(य) 'तादृशत्वा'दिति—साध्यसाधनवत्त्वप्रकारकबोधत्वादित्यर्थः ।

प्रसिद्धम् (र), तन्मात्रप्रकारकबोधविरोधित्वञ्च साध्ये साध्यतावच्छेदकाभावादावपि, तथापि धर्मितावच्छेदकविशिष्टे धर्मिणि यदभाववत्त्वज्ञाने नियमतस्तादृशसाध्य-साधनवत्त्वबोधप्रतिरोधः, तदभावो विवक्षितः। साध्यतावच्छेदकाद्यभावस्तु साध्यादिवृत्तितया गृह्यमाण एव तादृशबोधविरोधी. न त्वन्यधर्मितावच्छेदकेनेति नातिप्रसङ्गः।

'भ्रमरूपे'ति, एकधर्मिकसाध्यवत्त्वसाधनवत्त्वबोधस्य तत्र(ल) भ्रमैकरूपत्वा-दिति भावः। 'भ्रमादिरूपे'ति पाठे एकधर्मिकत्वं तादृशबोधे न विवक्षितम्, किन्तु साध्यसाधनप्रकारकबोधं प्रति समानधर्मितावच्छेदकत्वप्रत्यासत्त्या(१) विरोधित्वं विवक्षितम्। तच्च वायुः स्नेहवान् गन्धादित्यादौ जलपृथिव्योः स्नेहगन्धप्रकारकप्रमामादायापि(२)सुलभम्। अवृत्तिहेतुके तत्साध्यके वा भ्रममादायैव प्रसिद्धिरिति। एवं व्याख्यानेऽपि साधनस्य साध्यमिति यथाश्रुतार्थत्याग एव, अवृत्तिहेतुकादिस्थले(व) भ्रमा(३)सम्भवेन लक्षणस्याव्याप्तिः, मूले च लक्षणमुक्त्वा साध्यव्यावर्त्तकत्वमेव सर्वत्र दर्शितम्, क्वापि साधन-व्यावर्त्तकत्व(४)मित्यादिरस्वरसोऽपि वदन्तिभ्यां सूचितः।

## दीधितिः

यत्तु साध्यावृत्तित्वे सति साधनावृत्तिर्यस्तच्छून्यत्वेन साध्यसाधने अनुगमय्य तदभावोन्नायकत्वं वाच्यमिति, तन्न; यत्र भिन्नभिन्नसम्बन्धेन साध्यसाधनभावः,

(१) 'समानधर्मितावच्छेदकावच्छिन्नविशेष्यकत्वप्रत्यासत्त्ये'ति पाठान्तरम्।
(२) 'प्रमामादाय सुलभ'मिति पाठान्तरम्। (३) 'प्रमासम्भवेन' इति पाठान्तरम्।
(४) 'साधनप्रकारकबोधव्यावर्त्तकत्व'मिति पाठान्तरम्।

(र) साध्याभावसाधनाभावनिश्चयदशायां साध्यमात्रप्रकारकसाधनमात्रप्रकारकबोधयो-रप्यनुत्पत्त्या साध्यप्रकारकबुद्धित्वावच्छिन्नं प्रति साध्याभावनिश्चयस्य साधनप्रकारक-बुद्धित्वावच्छिन्नं प्रति च साधनाभावनिश्चयस्य विरोधितायाः क्लृप्तत्वात् तेनैव तत्तदभाव-निश्चयदशायां उभयप्रकारकबोधस्य वारणसम्भवेन पृथक्तया उभयबोधत्वावच्छिन्नविरोधिताया अतिरिक्ताया अकल्पनादिति भावः।

(ल) 'तत्रे'ति विरुद्धस्थल इत्यर्थः।

(व) आदिपदेन अवृत्तिसाध्यकस्थलपरिग्रहः।

तत्र सद्धेतुके हेतुतासम्पादकेन सम्बन्धेन साध्यस्य साध्यतासम्पादकेन च हेतोरन्यत्रापि च यथाकथञ्चित्सम्बन्धेनोभयस्याभावोन्नायके अतिव्याप्तिः ।

किञ्च तादृशधर्मशून्यत्वेन रूपान्तरेण वा तदभाव(१)स्योन्नायकत्वमभिमतम् ? नाद्यः ; साध्यसाधनान्यतरवति तदसम्भवात् । नान्त्यः, धूमेन पर्वते वह्नौ साध्ये महानसीयवह्नित्वाद्यवच्छिन्नाभावोन्नायक(२)महानसत्वादावतिव्याप्तेः ।

## दीधितिप्रकाशः

अस्मिन्नेव पक्षे सार्वभौमव्याख्यानं दूषयितुमुपन्यस्यति—'यत्तु' इति । पक्षे साध्यसाधनान्यतरव्यावर्त्तकत्वं लक्षणं वक्तव्यम् , तत्र जलं गन्धवत् प्रमेयात् प्रमेयवद्वा गन्धादित्यादौ(३) सत्प्रतिपक्षस्य असिद्धेर्वोन्नायके(४) पृथिवीत्वादौ लक्षणगमनाय प्रमेयत्वावच्छिन्नभेदघटितस्यान्यतरत्वस्याप्रसिद्ध्या अन्यथा तन्निर्वक्ति—'साध्यावृत्तित्वे सती'ति । तत्र च अवृत्तिरेव तादृशः(५) प्रसिद्ध इति नाव्याप्तिः ।

तादृशाभावः किं साध्यतावच्छेदक(६)सम्बन्धेन हेतुतावच्छेदक(७)सम्बन्धेन यत्किञ्चित्सम्बन्धेन वा ? आद्ययोराह—'यत्र भिन्नभिन्ने'ति । पर्वतो वह्निमान् एतद्रूपादित्यादौ समवायसम्बन्धेन वह्न्यभावस्योन्नायके तदवयवत्वादौ संयोगेन रूपाभावस्योन्नायके व्यतिरेकिणि धर्ममात्रे अतिव्याप्तिः(श) ।

(१) 'साध्याभावोन्नायकत्व' इति पाठान्तरम् । (२) 'भावोन्नायके' इति सप्तम्यन्तपाठः क्वचित् । (३) 'जलं गन्धवत् प्रमेयादित्यादौ प्रमेयवद् गन्धादित्यादौ च' इति पाठान्तरम् । (४) 'असिद्धेश्चोन्नायके' इति पाठान्तरम् । (५) 'तादृशो धर्मे' इति क्वचित् पाठः । (६) 'साध्यतावच्छेदकेन सम्बन्धेन' इति पाठान्तरम् । (७) 'हेतुतावच्छेदकेन' इति पाठान्तरम् ।

(श) अत्र पूर्वोक्त-साध्यतावच्छेदकसाधनतावच्छेदकसम्बन्धक्रममुल्लङ्घ्य आदौ हेतुतावच्छेदकसम्बन्धेन तादृशाभावनिवेशनस्य पर्वतो वह्निमानित्यादितदवयवत्वादावित्यन्तग्रन्थेन साध्यतावच्छेदकसम्बन्धेन तादृशाभावनिवेशनस्य च संयोगेनेत्यादिग्रन्थेन व्यावृत्तिर्दर्शिता ।

वरमे(प)ऽस्याह—'अन्यत्रापि चे'ति। एकसम्बन्धेन साध्यसाधनभावेऽपि(१) वह्निमान् धूमादित्यादौ समवायादिना सम्बन्धेन वह्न्यभाव(२)स्योन्नायके वह्न्यवयवत्वादावतिव्याप्तिरित्यर्थः।

न च साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यनिष्ठप्रतियोगिता-साधनतावच्छेदकसम्बन्धावच्छिन्नसाधननिष्ठप्रतियोगितान्यतरवदभावोक्तौ नायं दोष इति वाच्यम्; जलं प्रमेयवत् सत्त्वादित्यादौ स्वरूपसम्बन्धेन साध्यतायां प्रमेयत्वेन सत्त्वस्यापि हेतोः साध्यतया स्वरूपसम्बन्धेन तदभावोन्नायके अतिव्याप्तेरिति।

सम्बन्धभेदेनेव प्रतियोगितावच्छेदक(३)भेदेनापि दूषणं दातुमाह—'किञ्चे'ति। 'साध्यसाधनान्यतरवतो'ति,—तत्र सत्प्रतिपक्षस्य असङ्केर्वा उन्नायके अव्याप्तिरिति भावः (स)।

'महानसीये'ति,—न च साध्यतावच्छेदकसाधनतावच्छेदकान्यतरावच्छिन्नप्रतियोगिताकाभावोन्नायकत्वं वाच्यम्; यत्र(४)भिन्नभिन्नसम्बन्धेन साध्यसाधनतावच्छेदकता तत्र प्रागुक्तरीत्या(ह) तदवच्छिन्नतादृशाभावोन्नायके अतिव्याप्तेः।

---

(१) 'साध्यसाधनयोरपि' इति क्वचित् पाठः। (२) 'वह्न्याद्यभावे अतिव्याप्तिरित्यर्थ' इति पाठान्तरम्। (३) 'सम्बन्धभेदेनेव अवच्छेदकभेदेनापि' इति पाठान्तरम्। (४) 'यत्र यत्रे'ति पाठान्तरम्।

---

(प) 'वरम' इति यत्किञ्चित्सम्बन्धेन तादृशाभावनिवेशकल्प इत्यर्थः।

(स) अत्राहुर्भट्टाचार्याः—'किञ्चे'ति—तादृशधर्मेति-धर्मपदं स्वरूपार्थकम्। तादृशान्यतरत्वावच्छिन्नप्रतियोगिताकस्य तादृशान्यतरत्वाश्रयप्रतियोगिताकस्य वा अभावस्योन्नायकत्वं विवक्षितमित्यर्थः। अन्यतरवति-पक्षे तदसम्भवात्-अन्यतरत्वावच्छिन्नाभावस्य बाधेनोन्नायकत्वासम्भवात्। तथा च ह्रदो वह्निमान् द्रव्यत्वादित्यादौ वह्निसामग्र्यादेः, पर्वतो वह्निमान् महानसत्वादित्यादौ च व्यञ्जनवत्त्वादेः सत्प्रतिपक्षस्यासिद्धेश्चोन्नायकस्यासंग्रह इति भाव इति।

(ह) 'प्रागुक्तरीत्ये'ति यथा पूर्वं तादृशाभावस्य साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकत्वादिविकल्पेनातिव्याप्तिर्दर्शिता, तथा प्रकृते साध्यतावच्छेदकतावच्छेदकसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकत्वादिविकल्पेन अतिव्याप्तेरित्यर्थः। तथा हि 'साध्यतावच्छेदक-साधनतावच्छेदकान्यतरावच्छिन्नप्रतियोगिताके'त्यत्रान्यतरनिष्ठा प्रतियोगितावच्छेदकता

## दीधितिः

यत्र पक्षावृत्तित्वे सति ये साधनवद्वृत्तयस्तच्छून्यत्वेन पक्षसाधनवन्ताविति प्रमाविशेष्यत्वेन वा द्वावनुगतीकृत्य तत्र साध्यव्यावर्त्तकत्वमर्थमाहुः। तत्र यदि सत्प्रतिपक्षव्यभिचारयोरन्यतरमात्रोन्नायकत्वं दूषकताबीजम्, तदा द्वयोरनुगमनमफलम्। अथ यथासम्भवमुभयोन्नायकत्वम्, तदा अवृत्तिहेतुके सत्प्रतिपक्षोन्नायके अव्याप्तिः।

## दीधितिप्रकाशः

प्रमेयपक्षके प्रमेयत्व(१)हेतुके वा तदन्यान्यत्वरूपस्यान्यतरत्वस्याप्रसिद्धेरन्यथा तन्निर्वक्ति 'पक्षावृत्तित्वे सती'ति। लाघवादाह—'पक्षसाधनवन्ताविति। पक्षतावच्छेदकस्य साधनस्य वा भ्रमविशेष्ये ह्रदे वह्निव्यावर्त्तके(२) अतिव्याप्तिवारणाय 'प्रमे'ति। तादृशप्रमा च समूहालम्बनात्मिका शृङ्गग्राहिकयोपादेया। तेन पर्वतो(३) वह्निमान् धूमादित्यादौ पर्वतधूमवन्तौ ह्रदश्चेति समूलाम्बनप्रमाविशेष्ये ह्रदे(४) वह्निव्यावर्त्तके वह्निसामग्र्यादौ नातिव्याप्तिः।

पक्षतावच्छेदकादेरपि विषयत्वात् तद्विशेष्यत्वेनेति। 'द्वौ', पक्षसाधनवन्तौ। 'तत्र'(५) तादृशप्रमाविशेष्ये। अवृत्तिहेतुके वक्ष्यमाणाव्याप्तिदूषणस्य लक्ष्यत्वनिर्णय एव सम्भवात् लक्ष्यत्वं(६) घटयितुमाह—'तत्रे'ति। 'तत्र' तादृशलक्षणे। 'दूषकता-

(१) 'प्रमेयत्वादिहेतुक' इति पाठान्तरम्। (२) 'भ्रमविशेष्ये साध्यव्यावर्त्तक' इति पाठान्तरम्। (३) 'तेन वह्निमान् धूमादित्यादा'विति पाठान्तरम्। (४) 'जलह्रदश्च' इति पाठान्तरम्। (५) पुस्तकविशेषे 'तत्रे'ति पाठो नास्ति। (६) 'लक्ष्यं द्रढयितुमाह' इति पाठान्तरम्।

साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्ना साधनतावच्छेदकताघटकसम्बन्धावच्छिन्ना यत्किञ्चित्सम्बन्धावच्छिन्ना वा विवक्षिता? तत्र न प्रथमः कल्पः, पर्वतो विषयितया वह्नित्ववज्ज्ञानवान् रूपादित्यादौ विभिन्नसाध्यतावच्छेदकताघटकसाधनतावच्छेदकताघटकसम्बन्धस्थले विषयितया रूपत्ववज्ज्ञानाद्यभावोन्नायके तादृशज्ञानसामग्र्यादावतिप्रसङ्गात्। न द्वितीयः, निरुक्तस्थले एव समवायेन वह्नित्ववद्वह्न्यभावोन्नायकवह्न्यवयवत्वादावतिप्रसङ्गापातात्। न तृतीयः, निरुक्तरीत्या निरुक्तोभयदोषप्रसङ्गात्।

बीजं' लक्ष्यतानियामकमिति शेषः। 'अफल'मिति,—सत्प्रतिपक्षोन्नयने साधनवतो व्यभिचारोन्नयने च पक्षस्यानुपयोगित्वेनोपादानं(१) निष्फलं स्यादिति भावः। 'अवृत्तिहेतुक' इति जलं वह्निमदाकाशादित्यादावित्यर्थः। 'अव्याप्ति'रिति—साधनवतोऽप्रसिद्ध्या निरुक्तलक्षणासम्भवादिति भावः। पक्षतावच्छेदक-मनुपादायापि पक्षस्य(२) तत्तद्व्यक्तित्वेनोपादाने अवृत्तिपक्षतावच्छेदकस्थले(क्ष) व्यभिचारोन्नायके अव्याप्तिर्न सम्भवतीति सा नोक्ता।

## दीधितिः

यदपि च पक्षतावच्छेदके साधने च न वर्त्तते यत् तच्छून्यस्य पक्षतावच्छेदक-साधने इति प्रतीतिविशेष्यस्य वा आश्रये साध्यव्यावर्त्तकत्वमर्थमाहुः। तत्रापि किं येन सम्बन्धेन हेतुता तेन, अथ येन सम्बन्धेन पक्षतावच्छेदकं पक्षे वर्त्तते तेन, उत येन केनचित् तादृशधर्माश्रये साध्यव्यावर्त्तकत्वमभिमतम्?

नाद्यः, जलं वह्निमद् धूमादित्यादौ(३) जलपक्षकवह्निसाध्यके संयोगसम्बन्धेन साधने धूमादौ वह्निसामग्र्यादावव्याप्तेः। पक्षतावच्छेदकस्य संयोगेनावृत्तेः, संयोगेन धूमवतश्च वह्निमत्त्वनियमात्।

न द्वितीयः; घटो जातिमान् मेयत्वादित्यादौ समवायित्वादावव्याप्तेः। वह्निमत्-पर्वतपक्षके पर्वतो वह्निमान् धूमादित्यत्र धूमावयवे वह्निव्यावर्त्तके वह्निसामग्र्यादावतिव्याप्तेश्च। अत एव नेतरोऽपीत्यादि स्वयमूहनीयमिति कृतं पल्लवितेन।

(१) 'पक्षस्यानुपयोगित्वेनोपादानस्य निष्फलत्वादिति भाव' इति पाठान्तरम्। (२) ग्रन्थविशेषे 'पक्षस्ये'ति पाठो नास्ति। (३) पुस्तकविशेषे 'जलं वह्निमद्धूमादित्यादा'विति पाठो नास्ति।

(क्ष) अवृत्तिपक्षतावच्छेदकस्थले गगनवान् धूमवान् वह्नेरित्यादावित्यर्थः।

## दीधितिप्रकाशः

अवृत्तिहेतुके(१)सत्प्रतिपक्षोन्नायके अव्याप्तिमुद्धर्त्तुं प्रकारान्तरमुपन्यस्यति—'यद्यपी'ति। 'पक्षतावच्छेदक-साधने इती'ति—अत्रापि प्रतीतिविशेषो(क) विशिष्योपादेयः, तेन न समूहालम्बनमादाय दोषः।

यद्यपि साधनावच्छेदकस्यानुपादाने द्रव्यं विशिष्टसत्त्वादित्यत्र सत्त्वाश्रये द्रव्यत्वाभावोन्नायके अतिव्याप्तिः, तदुपादाने च तद्(ख)भ्रममादाय अतिव्याप्तिवारणाय प्रमात्वोपादानमुचितम्, तथापि तादृशप्रतीतिविशेषस्य तद्व्यक्तित्वेनोपादाने कर्त्तव्ये प्रमात्वं न निविशत इत्याशयेन प्रमात्वं नोपात्तम्।

'तत्रापि' तादृश(२)वाक्यार्थेऽपि। अभिमतमित्यनेनान्वितं 'तेने'त्यादि तृतीयान्तत्रिकं तादृशभ्रमाश्रय इत्यनेन सम्बध्यते। 'संयोगेने'ति,—समवायेन हेतौ जलत्वस्य समवायेनाश्रये वह्निव्यावर्त्तकत्वेन लक्षणसम्भवादिति भावः।

'पक्षतावच्छेदकस्ये'ति,—तथा च तदाश्रये साध्याव्यावर्त्तकत्वेन न लक्षणगमनमिति भावः। संयोगेन साधनवतः प्रसिद्धावपि तत्र साध्यव्यावर्त्तकत्वाभावान्न लक्षणगमनमित्याह—'संयोगेन धूमवतश्चे'ति। 'समवायित्वादा'विति,—पक्षतावच्छेदकताघटकसमवायेन मेयत्वस्यावृत्तेः, पक्षतावच्छेदकघटत्वाश्रये च जातिमत्त्वस्य साध्यस्य सत्त्वनियमादिति।

(१) 'हेतुमत्प्रति' इति पाठान्तरम्। (२) 'तादृशतादृशे'ति पाठान्तरम्।

(क) 'प्रतीतिविशेषः' साधनपक्षतावच्छेदकधर्मभिन्नाविशेष्यक-ज्ञानविशेषः। 'विशिष्य' पूर्वकल्पवत् शृङ्गग्राहिकया तत्तद्व्यक्तित्वेनेति भावः। 'तेन' तादृशप्रतीतिविशेषोपादानेन। 'समूहालम्बनं' पक्षतावच्छेदकसाधने ह्रदत्वञ्चेत्यादिरूपं समूहालम्बनमादाय। 'न दोषः' न तादृशसमूहालम्बनविशेष्याश्रये ह्रदे वह्निव्यावर्त्तके वह्निसामग्र्यादौ पर्वतो वह्निमान् धूमादित्यादिस्थले अतिप्रसङ्ग इत्यर्थः।

(ख) 'तद्भ्रम'मिति-साधनतावच्छेदकप्रकारकभ्रममित्यर्थः। 'अतिव्याप्ती'ति-वह्निमान् धूमादित्यादिसद्धेतुस्थले धूमत्वादिप्रकारकभ्रमविषयीभूतवाष्पाद्याश्रये जलादौ साध्यव्यावर्त्तकवह्निसामग्र्यादावतिव्याप्तीत्यर्थः।

तत्रैव(१) कल्पे अतिव्याप्तिमप्याह—'वह्निमत्पर्वते'ति। निर्वह्निपर्वतपक्षके सत्प्रतिपक्षोन्नायकत्वेन संग्राह्यत्वात् 'वह्निमदि'ति। 'धूमावयव' इति.—तस्य पक्षतावच्छेदकताघटकसमवायेन साधनाश्रयत्वादिति भावः। 'अत एव' उक्तातिव्याप्तेरेव(२)।

## तत्त्वचिन्तामणिः

यत्तु उपाधिमात्रस्य लक्षणं व्यतिरेकिधर्मत्वम(ग), पक्षेतरोऽपि क्वचिदुपाधिरेव(३)। तत्तदुपाधेस्तु तत्तत्साध्यव्यापकत्वे सति तत्तत्साधनाव्यापकत्वम्। न च वह्निधूम(४)सम्बन्धोपाधिः(घ) पक्षेतरत्वं स्यादिति वाच्यम्; आपाद्याप्रसिद्धेरिति। तन्न; अनुमितिप्रतिबन्धकज्ञानविषयतावच्छेदकमुपाधित्वमिह निरूप्यम्; तच्च न व्यतिरेकित्वम्, अतिप्रसङ्गात्, विशेषलक्षणत्वे(५) तु वह्निधूमसम्बन्धे पक्षेतरत्वस्य उपाधित्वप्रसङ्गाच्च

## दीधितिः

'आपाद्याप्रसिद्धेः'—आपाद्यस्य वह्निव्यापकत्वे सति धूमाव्यापकत्वस्य अप्रसिद्धेः। 'अनुमिती'ति,—अस्मदुक्तं व्यभिचारोन्नायकत्वं तदुन्नयनस्वरूपयोग्यत्वं तद्व्याप्तिपक्षधर्मतारूपम् (६)पर्य्यवसितसाध्यव्यापकत्वादिकञ्च अनुमितिप्रतिबन्धकज्ञानविषयतावच्छेदकमेवेति भावः।

---

(१) 'अत्रैव कल्पेऽव्याप्तिव्याप्तिमप्याह' इति पाठान्तरम्। (२) 'उक्तातिप्रसङ्गादेव' इति पाठान्तरम्। (३) 'एव'शब्दः सर्वत्र न दृश्यते। (४) क्वचित् 'धूमवह्नि' इति व्यतिक्रमेण पाठः। (५) 'लक्षणे तु' इति क्वचित् पाठः। (६) 'इत्यत्राह' इति पाठान्तरम्।

---

(ग) ननु व्यतिरेकित्वमभावप्रतियोगित्वम्, एवञ्च व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगित्वस्य यत्किञ्चित्सम्बन्धावच्छिन्नप्रतियोगित्वस्य च निर्विशेषण सर्वत्रैव सम्भवात् व्यतिरेकित्वमव्यावर्त्तकमिति चेत् सत्यम्, तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावप्रतियोगितावच्छेदकत्वे सति तत्सम्बन्धावच्छिन्नवृत्तितावच्छेदको यो धर्मस्तद्रूपत्वं तेन सम्बन्धेन तेन रूपेण च उपाधित्वमित्यस्य निष्कर्षे वक्तव्यत्वात्। संयोगादिसम्बन्धेन गुणत्व-गुणघटोभयत्वाद्यवच्छिन्नादीनामुपाधित्वप्रसङ्गनिराकरणार्थं विशेष्यदलम्।

(घ) 'वह्निधूमसम्बन्धोपाधि'रिति-वह्नित्वावच्छिन्नविधेयक-धूमत्वावच्छिन्नहेतुकोपाधिरित्यर्थः। पक्षेतरत्वं तादृशोपाधिः स्यादित्यापत्त्याकारो बोध्यः।

ननु सामान्यलक्षणमितरव्यावृत्त्यौपयिकम्। विशेषलक्षणन्तु दूषकतायामुपयुज्यत इत्यत आह(१)—'विशेषे'ति।

## दीधितिप्रकाशः

उपाधिपदवाच्यत्वादिरूपापाद्यस्य नाप्रसिद्धिरतो व्याचष्टे—'आपाद्यस्ये'त्यादिना। 'वह्नी'ति,—न च धूमाव्यापके पक्षेतरे वह्निव्यापकत्वस्य आपाद्यत्वे नाप्रसिद्धिरिति वाच्यम्; व्यतिरेकिधर्मत्वस्य तद्व्याप्यत्वेन अनापादकत्वादिति।

ननु भवदुक्तं 'यद्व्यभिचारित्वेने'त्यादिकमपि नानुमितिप्रतिबन्धकतावच्छेदकमिति तुल्य एवानुयोग इत्यत आह—'अस्मदुक्त'मिति। 'तदुन्नयनस्वरूपयोग्यत्व'मिति—फलोपधानरूपतदुन्नायकत्वस्य व्याप्तिपक्षधर्मतारूपत्वासम्भवादिति भावः।

'तद्व्याप्तीति—साध्यव्यभिचारव्याप्तीत्यर्थः। व्यभिचारस्येव तद्(ङ)व्याप्यवत्ता(२)ज्ञानस्यापि व्याप्तिधीविरोधित्वादिति भावः। पर्य्यवसितसाध्यव्यापकत्वादिकञ्चेति,—उपाधिशरीरभाने(३) व्यभिचारादिविषयकत्वसहिष्णुतायां साध्यव्यभिचारित्वेन साधनविशेषणात्। इतरथा तु व्यभिचारव्याप्यतावच्छेदकसाध्यव्यापकाभावसमानाधिकरणत्ववत्त्वावच्छिन्नघटितत्वात् तदपि प्रतिबन्धकतावच्छेदकमेवेति भावः। 'व्यावृत्त्यौपयिकम्' न तु दूषकम्।

## दीधितिः

यथाश्रुते अवच्छिन्नसाध्यव्यापकोपाध्यव्याप्त्या यत्किञ्चिद्धर्मावच्छिन्नसाध्यव्यापकत्वमेव वक्तव्यम्। तथा च वह्निना धूमस्य धूमेन वह्नेर्वा साधने(४) पक्षेतरस्य तद्रूपज्ञानादनुमितिप्रतिबन्धापत्तिरित्यर्थः। व्यवहारौपयिकत्वे च तत्रोपाधि-

(१) 'पर्य्यवसितेत्यादिकञ्चे'ति पाठान्तरम्। (२) 'व्याप्यवत्ताया' इति पाठो युक्तः। (३) 'पर्य्यवसितेत्यादिकञ्चेति' इति पाठान्तरम्। (४) 'अस्मन्नय एव प्रवेशः' इति पाठान्तरम्।

(ङ) 'तद्व्याप्यवत्तेति'-व्यभिचारव्याप्यवत्त्येत्यर्थः। अभाववत्ताबुद्धिं प्रति भावबुद्धेरिव भावव्याप्यवत्ताबुद्धेरपि प्रतिबन्धकत्वस्य नियमतः क्लृप्तत्वादिति भावः।

व्यवहाराापत्तिः। पर्य्यवसितेत्याद्यभिधाने च अस्मन्नयप्रवेश इति भावः। व्यवहारौपयिकं स्वव्यभिचारेण साध्यव्यभिचारोन्नायकत्वम्। लक्षणन्तु तत्तत्साध्यसमानाधिकरणत्वे सति तत्तत्साधनाव्यापकत्वं साध्यसाधनभेदाद् भिन्नमेव। वस्तुतो व्यभिचारिणः साधनस्यैवानुप्रवेशाच्च नातिप्रसङ्गः।

न च रूपेण गुरुत्वे साध्ये पृथिवीत्वाभावादेरुपाधितापत्तिः, गुरुत्वव्यभिचारिरूपव्यक्तेस्तद्व्याप्यत्वात् तद्व्याप्यरूपव्यक्तेश्च गुरुत्वाव्यभिचारादिति। दूषणतौपयिकन्तु यथासम्भवमननुगतमेवेति मतमिदं परे परिष्कुर्वन्ति।

## दीधितिप्रकाशः

पक्षेतरत्वस्य(१) शुद्धसाध्यव्यापकत्वाभावान्नातिव्याप्तिः सम्भवतीति तदुपपादयति—'यथाश्रुत' इत्यादिना। 'यथाश्रुते' शुद्धसाध्यव्यापकत्वघटिते। 'वह्निना धूमस्ये'ति(२)—पर्वतो धूमवान् वह्नेरित्यत्र धूमवत्-पर्वतस्य पक्षतायां पक्षेतरस्य निरुक्तयद्धर्मावच्छिन्नसाध्यव्यापकत्वादिरूपपर्य्यवसितसाध्यव्यापकत्वाद्युपाधिलक्षणानाक्रान्ततया सिद्धान्तिनये अलक्ष्यत्वादिति भावः। 'तद्रूपे'ति,—यत्किञ्चिद्धर्मावच्छिन्नसाध्यव्यापकत्वघटितोपाधिलक्षणज्ञानादित्यर्थः(३)। व्यवहारौपयिकमिदं, न दूषकमिति यदि ब्रूयात् तत्राह—'व्यवहारौपयिकत्वे चे'ति।

ननु यथापि यद्धर्मावच्छिन्नसाध्यव्यापकत्वं तद्धर्मावच्छिन्नसाधनाव्यापकत्वमेव तदर्थो वाच्य इत्यत आह—'पर्य्यवसितेत्यादी'ति। मतान्तरमाह 'व्यवहारौपयिक'मित्यादिना। 'व्यवहारौपयिकम्' उपाधिव्यवहारौपयिकम् लक्ष्यतावच्छेदकम्। तेन सत्प्रतिपक्षोन्नायके साधनव्यापके वक्ष्यमाणलक्षणाव्याप्तिर्न दोषायेति भावः। 'तत्तत्साध्ये'ति—धूमसमानाधिकरणत्वे सति वह्न्यव्यापकत्वमित्यादिकमित्यर्थः।

नन्वेवमननुगम इत्यत आह—'साध्यसाधने'ति,—लक्ष्यस्याप्यननुगतत्वादित्यर्थः(४)।

(१) 'पक्षेतरस्ये'ति पाठान्तरम्। (२) 'वह्निना धूमेन वा धूमस्य वह्नेर्वा साधन इति' इति पाठान्तरम्। (३) 'लक्षणेत्यर्थं' इति पाठान्तरम्। (४) 'लक्ष्यस्याप्यननुगतत्वादिति भाव' इति पाठान्तरम्।

नन्वेवं वह्निमान् धूमादित्यादौ धूमाव्यापके वह्निसमानाधिकरणे महानसत्वादावतिप्रसङ्ग इत्यत आह—'वस्तुत' इति। 'वस्तुतो' वस्तुगत्या, न तु व्यभिचारित्वेन तत्प्रवेशः, येन उपाधिशरीरभाने व्यभिचारानुमानमफलं स्यादिति भावः।

'नातिप्रसङ्गः'(१) वह्निमान् धूमादित्यादौ। 'न च रूपेण'त्यादि, रूपवद् द्रव्यत्वादित्यादौ पृथिवीत्वाभावः संग्राह्य एवेति भावः। इदं(२) गुरु रूपादित्यत्र पृथिवीत्वाभावो न संग्राह्य एवेति भावः।

'पृथिवीत्वाभावादे'रिति,—तस्यापि गुरुत्वसमानाधिकरणस्य रूपाव्यापकत्वादिति। 'गुरु चाव्यभिचारी'ति,—तादृशतैजसरूपव्यक्तेः। 'तद्व्याप्यत्वात्'—पृथिवीत्वाभावव्याप्यत्वात्। 'तद्व्याप्ये'ति—पृथिवीत्वाभावाव्याप्येत्यर्थः। तथा च वस्तुतो यद्व्यभिचारि यत् साधनं, तद्व्यक्त्यव्यापकत्वं लक्षणार्थः, न तु व्यभिचारितावच्छेदकसाधनतावच्छेदकावच्छिन्नाव्यापकत्वं; येन अतिव्याप्तिः स्यादिति भावः। 'दूषणौपयिकन्त्वि'ति,—दूषणं व्यभिचारोन्नयनादि। यद्धर्मावच्छिन्नसाध्यव्यापकत्वं तद्धर्मावच्छिन्नसाधनाव्यापकत्वं व्यभिचारोन्नयनौपयिकम्। पक्षधर्मावच्छिन्नसाध्यव्यापकत्वे सति पक्षावृत्तित्वञ्च सत्प्रतिपक्षस्येत्यादिकमित्यर्थः।

## दीधितिः

तत्र(३) साधीयः, तथाहि साध्यसाधनव्यक्तिस्वरूपगर्भं नोपाधित्वम्, अपि तु साध्यतावच्छेदक-साधनतावच्छेदकधर्मगर्भम्। तत्तद्गुणत्वेन सकलगुणव्यक्तिषु(४) सोपाधेरपि द्रव्यत्वस्य गुणत्वेन सकलगुणेष्वेव निरुपाधित्वात्। गुणत्वेन गुणे साध्ये सत्तात्वेन रूपेण सोपाधेरपि सत्ताया गुणकर्मान्यत्वविशिष्टसत्तात्वेन निरुपाधित्वात्। तथा च तद्रूपावच्छिन्ने साध्ये तद्रूपावच्छिन्ने साधने च क उपाधिरित्यत्र तद्रूपावच्छिन्नसाध्यसमानाधिकरणत्वे सति तद्रूपावच्छिन्नसाधनाव्यापकत्वमनुगतं लक्षणं वाच्यम्, न तु तद्रूपावच्छिन्नतत्तत्साधनव्यक्त्यव्यापकत्वम् अननुगमात्। तथा च गुरुत्वत्वावच्छिन्नसमानाधिकरणस्य रूपत्वावच्छिन्ना-

(१) 'नातिप्रसङ्ग' इत्यत आरभ्य 'धूमादित्यादा'विति 'न चे'त्यतः पूर्ववर्त्ता पाठः पुस्तकविशेषे नास्ति। (२) 'इद'मित्यत आरभ्य 'न संग्राह्य एवेति भाव' इत्यन्तः पाठः पुस्तकविशेषे नोपलभ्यते। (३) 'साधीय' इति पाठो न सार्वत्रिकः। (४) 'व्यक्तिष्वेव' इति पाठान्तरम्।

व्यापकस्य पृथिवीत्वाभावादेरुपाधित्वं दुर्वारम्। व्यभिचारित्वेन साधनविशेषणन्तु उपदर्शितमेवेति संक्षेपः।

## दीधितिप्रकाशः

साध्यतावच्छेदकगर्भत्वे वीजमाह—'तत्तदि'ति। 'सकलगुणव्यक्तिष्वि'ति,—यदि कस्याञ्चिद् गुणव्यक्तौ द्रव्यत्वं निरुपाधि स्यात्तदा गुणत्वेन निरुपाधिव्यवहारे सैव व्यक्तिर्विषय इत्युक्तेऽपि(१) परिहारसम्भवे साध्यतावच्छेदकगर्भता नोपादीयेत न त्वेतत् सम्भवतीति भावः। 'निरुपाधित्वा'दिति,—तथा च साध्यतावच्छेदकाप्रवेशे तत्तद्गुणसमानाधिकरणस्य द्रव्यत्वा(२)वच्छिन्नसाध्यव्यापकेऽप्युपाधिव्यवहारः स्यादिति भावः। साधनतावच्छेदकगर्भतायां वीजमाह—'गुणत्वेन गुण' इत्यादिना। 'गुणकर्मान्यत्वे'ति,—साधनतावच्छेदकाप्रवेशे गुणत्वावच्छिन्नसमानाधिकरणस्य द्रव्यत्वस्य सत्ताव्यक्तयव्यापकस्य(३) विशिष्टसत्तात्वावच्छिन्नहेतुतायामप्युपाधिव्यवहारः स्यादिति भावः। प्रागुक्तातिप्रसङ्गवारणाय साध्यतावच्छेदकादिगर्भमुपाधित्वं वक्तुं तथैव लक्ष्यं द्रढयितुं जिज्ञासामाह 'तथाचे'त्यादिना। 'अनुगत'मिति—तद्रूपावच्छिन्नसाध्यसाधनकयावदुपाध्यनुगतमित्यर्थः।

ननु साधनतावच्छेदकानुधावन(४) पुरःसरमेव तद्व्यक्तिगर्भतायां न रूपेण गुरुत्वे साध्ये पृथिवीत्वाभावादावतिव्याप्तिः, न वा गुणत्वेन गुणे साध्ये सत्तायाः सोपाधित्वेऽपि गुणकर्मान्यत्वविशिष्टसत्तात्वेन सोपाधितापत्तिरित्यादिदोषः, अत(५) आह—'न त्वि'ति।

'अननुगमा'दिति-व्यभिचारिसाधनव्यक्तीनामेकव्यक्तिव्यापकस्यापि व्यक्त्यन्तराव्यापकस्य, व्यक्त्यन्तरव्यापकस्यापि एतद्व्यक्त्यव्यापकस्य उपाधित्वेन तद्व्यक्तिघटितलक्षणस्य तत्साधनक-यावदुपाधिसाधारणत्वाभावादिति भावः।

---

(१) 'इत्युक्त्वापि' इति पाठान्तरम्। (२) 'द्रव्यत्वापादकस्य गुणत्वावच्छिन्नसाध्यकेऽपि' इति पाठान्तरम्। (३) 'समानाधिकरणस्य सत्ताव्यक्त्यापादकस्य' इति पाठान्तरम्। (४) 'साधनतावच्छेदकानुप्रवेशपुरःसरमेवे'ति पाठान्तरम्। (५) 'इत्यत' इति पाठान्तरम्।

'रूपत्वावच्छिन्नाव्यापकस्ये'ति,—न चात्र रूपत्वावच्छिन्नतेजोरूपाव्यापकत्वमेव वाच्यमिति युक्तम्(१), तथा सति शब्दैक्याभावादिति ।

ननु साध्यव्यभिचारि यत् साधनतावच्छेदकावच्छिन्नं तदव्यापकत्वस्योक्तौ नाननुगम इत्यत आह—'व्यभिचारित्वेने'ति । 'उपदर्शित'मिति—'उपाधिशरीर-भानस्य साधननिष्ठसाध्यव्यभिचारादिविषयकत्वसहिष्णुताया'मित्यादिना ।

## तत्त्वचिन्तामणिः

केचित्तु साधनव्यापकोऽप्युपाधिः कश्चिद्यत्र पक्षावृत्तिर्हेतुः ; यथा करका पृथिवी कठिनसंयोगा(२)दित्यत्रानुष्णाशीतस्पर्शवत्त्वम् । न च तत्र स्वरूपासिद्धिरेव दोष इति वाच्यम्(३) ; सर्वत्रोपाधेर्दूषणान्तरसङ्करादित्याहुः ।

## दीधितिः

उपाधिलक्षणे साधनाव्यापकत्वं न विशेषणम् दूषकतायामनुपयोगादव्याप्ति-करत्वा(४)च्चेति सत्प्रतिपक्षोन्नायकत्वेनोपाधेर्दूषकतावादिनामभिप्रायं प्रकाशयति—'केचित्तु' इति ।

## दीधितिप्रकाशः

ननु 'अन्ये तु' इति कृत्वा यन्मतमुपन्यस्तं, तत्रापि साधनाव्यापकत्वस्या(५)-प्रवेशादर्थतः साधनव्यापकस्योपाधित्वस्वीकारात् 'केचि'दित्यादिना तन्मतापार्थक्येन मतोपन्यासोऽनुचित इत्यत आह—'उपाधिलक्षण' इत्यादिना । 'दूषकतायाम्' सत्प्रतिपक्षोन्नायकतायाम् । आनुकूल्याभावमुक्त्वा प्रातिकूल्यमप्याह—'अव्याप्ती'ति । करका पृथिवी कठिनसंयोगवत्त्वादित्यत्र अनुष्णाशीतस्पर्शवत्त्वादौ साधनव्यापके अव्याप्तिकरत्वादित्यर्थः ।

'अभिप्रायं प्रकाशयती'ति,—तथा च 'अन्ये त्वि'ति कृत्वा यन्मतमुपन्यस्तं तस्यैवाशयप्रकाशनं 'केचिदि'त्यादिना कृतम् ; न तु मतान्तरमेतदिति भावः ।

---

(१) 'इति युक्तम्' इति पाठो न सार्वत्रिकः । (२) 'संयोगवत्त्वा'दिति पाठान्तरम् । (३) 'इति वाच्यम्' इति पाठो न सार्वत्रिकः । (४) 'परत्वाच्चेति' इति पाठान्तरम् । (५) 'कत्वस्योपाधिलक्षणेऽप्रवेशात्' इति पाठान्तरम् ।

# तत्त्वचिन्तामणिः

साध्यश्च नोपाधिः ; व्यभिचारसाधने साध्याविशिष्टत्वादनुमितिमात्रोच्छेद-प्रसङ्गाच्च ।

# दीधितिः

साध्यतावच्छेदकावच्छिन्नं साध्यश्च नोपाधिः परं प्रति उद्भाव्यः, साध्याविशिष्टत्वात् पक्षे साधनस्य निश्चये अनुमानस्य वैयर्थ्यात्, अनिश्चये(१) च तस्यायोगात् ।

सन्दिग्धोपाधित्वेनापि न तदुद्भावनमित्याह—'अनुमिती'ति । हेतौ साध्यव्यभिचारः सन्दिग्धश्चेत्, कृतं सन्दिग्धोपाधिना । असन्दिग्धश्चेत्, कथं तस्य सन्दिग्धोपाधित्वमिति तु तत्त्वम् ।

# दीधितिप्रकाशः

धूमवान् वह्नेरित्यादौ साध्यस्याप्ययोगोलकावृत्तित्वादिना उपाधित्वादाह 'साध्यतावच्छेदके'ति । साध्यतावच्छेदकरूपेणापि साध्यव्यापकत्वादिरूपोपाधित्वस्य सत्त्वात् तत्(च)प्रतिक्षेपोऽसङ्गत इत्यत आह—'परं प्रती'ति ।

साध्याविशिष्टत्वस्य(२) दूषकताबीजं दर्शयति 'पक्ष' इत्यादिना । प्रकृते च स्थापना(३)हेतुरेव पक्षः, तत्र साध्यव्यभिचारस्य(४) साधनस्य निर्णये अनुमानवैयर्थ्यात्, अनिर्णये च तत्र पक्षधर्मताया अनिर्णयात् तस्यानुमानस्यायोगादित्यर्थः ।

'न तदुद्भावनम्',—न साध्यतावच्छेदकावच्छिन्नसाध्योद्भावनम् । ननु यत्रानुकूलतर्कादिना हेतौ न साध्यव्यभिचारसन्देहः, तत्रैवानुमानं भविष्यतीत्यतो दूषणं स्वयमाह—'हेता'वित्यादिना । 'सन्दिग्धोपाधिना' साध्यव्यापकत्वादिलक्षणोपाधित्वसन्देहेन । 'कथं तस्ये'ति,—साध्यस्य स्वव्यापकताया निर्णयात् साधना(५)व्यापकतासन्देहेनैव सन्दिग्धोपाधित्वस्य प्रसक्तत्वादिति भावः ।

(१) 'अनिर्णये' इति पाठान्तरम् । (२) 'साध्याविशेषस्य' इति पाठान्तरम् । (३) 'प्रकृतोपस्थापना' इति पाठान्तरम् । (४) 'चारसाधनस्य' इति पाठान्तरम् । (५) 'साधनव्यापकता' इति पाठान्तरम् ।

(च) 'तत्प्रतिक्षेप' इति—'साध्यश्च नोपाधि'रिति मूलसन्दर्भेण साध्ये उपाधित्वस्य प्रतिषेध इत्यर्थः ।

## तत्त्वचिन्तामणिः

स चायं द्विविधः; निश्चितः सन्दिग्धश्चेति। साध्यव्यापकत्वेन साधनाव्यापकत्वेन च निश्चितो व्यभिचारनिश्चयाधायकतया(१) निश्चितोपाधिः। यथा वह्निमत्त्वेन धूमवत्त्वे साध्ये आर्द्रेन्धनप्रभववह्निमत्त्वम्। यत्र च साधनाव्यापकत्व(२)-सन्देहः, साध्यव्यापकत्वसंशयो(३) वा तदुभयसन्देहो वा तत्र हेतुव्यभिचारसंशयाधायकतया(४) सन्दिग्धोपाधिः। यथा मित्रातनयत्वेन श्यामत्वे साध्ये शाकाद्याहारपरिणतिजत्वम्।

## दीधितिः

'हेतुव्यभिचारे'ति,—व्याप्यसंशयस्य व्यापकसंशये(५) हेतुत्वादिति भावः। न चात्र(६) मानाभावः, कोटिस्मरणादित एव तदुपपत्तेः, क्वचित् तदनुविधानस्यापि व्याप्यतदभावयोर्व्यापकतदभावसाहचर्य्यस्य गृहीतत्वेन तत्स्मरण एवोपक्षीणत्वात्। तद्ग्रहे तु तत्संशयाद् व्यापकसंशया(७)भावादिति वाच्यम्; महानसे हुताशनो न जलह्रद इति स्मरतां पर्वतादिकमपि पश्यतां धूमादिसंशयभावाभावाभ्यां हुताशनसंशयभावाभावदर्शनात् तस्यापि तद्धेतुत्वात्। अत एवोत्कटकोटिकाद् व्याप्यस्य संशयाद् व्यापकस्यापि उत्कटकोटिकः संशयः, कारणोत्कर्षेणैव कार्योत्कर्षात(८)। समानेत्यादिसूत्रन्तु उपलक्षणपरम्, तत्रस्थ(९)श्चकारो वा अनुक्तसमुच्चयार्थ इति वदन्ति।

## दीधितिप्रकाशः

ननु उपाधित्व(१०)सन्देहः किंविधया साध्य(११)व्यभिचारसंशयाधायक इत्यत आह—'व्याप्यसंशयस्ये'ति। साधनाव्यापकत्वसन्देहे साध्यव्यापको(१२)

(१) 'धायकत्वेन' इति पाठान्तरम्। (२) 'कतासन्देहो वा' इति पाठान्तरम्। (३) 'व्यापकतासन्देहो वा' इति पाठान्तरम्। (४) 'धायकत्वेन' इति पाठान्तरम्, क्वचित् 'संशायकत्वेने'ति। (५) 'संशयहेतुत्वा'दिति पाठान्तरम्। (६) 'न च तत्रे'ति पाठान्तरम्। (७) 'संशयस्याप्यभावादिति' इति पाठान्तरम्। (८) 'कर्ष' इति' इति पाठान्तरम्। (९) 'तत्रस्थचकारो वा' इति पाठान्तरम्। (१०) 'उपाधिसन्देह' इति पाठान्तरम्। (११) ग्रन्थविशेषे 'साध्ये'ति नास्ति। (१२) 'साध्यव्यापकव्यभिचारस्ये'ति पाठान्तरम्।

पाधिव्यभिचारस्य साध्यव्यभिचारव्याप्यस्य साध्यव्यापकत्वसन्देहे च साध्ये साधनाव्यापकव्याप्यत्वस्य साधनाव्यापकत्वव्याप्यस्य सन्देहस्तत्तद्व्यापकसंशयाधायक(१) इति भावः।

ननु तेन(छ) विना संशयानुपपत्तिरेव तत्र(ज) मानमत आह—'कोटिस्मरणादि'त' इति। एवकारेण व्याप्यसंशयव्युदासः। 'तदुपपत्तेः'—व्यापकसंशयोपपत्तेः।

ननु संशयसामान्यस्य व्याप्यसंशयं विना सम्भवेऽपि संशय(झ)विशेषे तदन्वयाद्य(ञ)नुविधानाद्धेतुत्वं(२) भविष्यतीत्यत आह—'क्वचिदि'ति। 'तदनुविधानस्य' व्याप्यसंशयानुविधानस्य। 'तत्स्मरण एव'—व्यापकतदभावयोः स्मरण एव, न तु संशय इति भावः।

ननु यत्र तत्साहचर्यं न गृहीतम्, तत्रैव तदनुविधानात् कारणत्वं(३) भविष्यतीत्यत आह—'तद्ग्रह' इति। तादृशसाहचर्याग्रह इत्यर्थः। 'स्मरता'मिति,—तथा(४) च व्याप्यसंशयस्य कोटिस्मारकतया नोपयोग इति भावः।

धर्मिज्ञानादिरूप(५) कारणान्तरेणान्यथासिद्धिं(६)निरसितुमाह—'पर्वतादिकमपी'ति। आदिना धूमसंशयशून्यचत्वरादिरूपधर्मिपरिग्रहः। 'धूमादी'ति,—पर्वते धूमादिसंशयस्य भावेन हुताशनसंशयस्य भावः, चत्वरादौ धूमसंशयस्याभावेन वह्निसंशयस्याभावः, तयोर्दर्शनादित्यर्थः।

'अत एव' व्याप्यसंशयस्य कारणत्वादेव। व्याप्यांशे उत्कटकोटिकात् संशयाद् व्यापकांशेऽपि 'उत्कटकोटिकः संशय इत्यर्थः। उत्कटत्वञ्चात्र

(१) 'संशायक' इति पाठान्तरम्। (२) ग्रन्थविशेषे 'हेतुत्व'मिति नास्ति। (३) क्वचित् 'कारणत्व'मिति नास्ति। (४) क्वचित् 'तथा च' इति पाठो नास्ति। (५) 'रूप' इति सर्वत्र न दृश्यते। (६) 'कारणान्यथासिद्धि'मिति पाठान्तरम्।

---

(छ) 'तेन विने'ति—व्याप्यसंशयेन विनेत्यर्थः। 'संशयानुपपत्ति'रिति—व्यापकसंशयानुपपत्तिरित्यर्थः।

(ज) 'तत्रे'ति—व्याप्यसंशयस्य व्यापकसंशयात्मकसन्देहभेद इत्यर्थः।

(झ) 'संशयविशेष' इति—व्यापकसंशयात्मकसन्देहभेद इत्यर्थः।

(ञ) 'तदन्वयाद्यनुविधाना'दिति—व्याप्यसंशयान्वयव्यतिरेकानुविधानादित्यर्थः।

अव्याप्य(ड)वृत्तिर्जातिः विषयताविशेषो वेति भावः। 'कारणोत्कर्षेणैवे'त्येवकारेण अकारणोत्कर्षव्यवच्छेदः।

नन्वेवं सूत्रे(ढ) व्याप्यसंशयस्य हेतुत्वादर्शनात् तद्विरोध इत्यत आह—'समानेत्यादिसूत्रन्त्वि'ति। 'उपलक्षणपरम्',—व्याप्यसंशयोपलक्षकत्वे तात्पर्य्य-ग्राहकम(१)। चकारस्य निरर्थकत्वापत्त्या तस्यैव तदर्थकत्वसम्भवे पदान्तरे लक्षणाकल्पना(२) अन्याय्येत्यत(३) आह—'तत्रस्थश्च(४)कारो वे'ति।

'समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशय' इति सूत्रम्। अस्यार्थः; समानो यः अनेकेषां तत्कोटितदभावकोटि-मतां धर्मः, तदुपपत्तेः—धर्मिणि तद्वत्त्व(५)ज्ञानात्, विप्रतिपत्तेः—विरुद्धकोटिद्वय-प्रतिपादकात् शब्दात्(६) शब्दो नित्यो न वेत्याकारकात्(७)। उपलब्धिरनुपलब्धिश्च तत्कोटेः। तथा च तत्कोटेर्यत्र(८) उपलब्धिः, यत्र वा अनुपलब्धिः अभावो-पलब्धिः कार्ये कारणोपचारात्, तयोरव्यवस्था अभावनिश्चयः, तस्मात् सपक्षविपक्ष-व्यावृत्तधर्मवत्ताज्ञानादिति यावत्। विशिष्यते व्यावर्त्यते विशेषदर्शनविशेषो यस्मात्

(१) 'व्याप्यसंशयोपलक्षकार्थतात्पर्य्यक'मिति पाठान्तरम्। (२) क्वचित् 'कल्पने'ति नास्ति। (३) 'अन्याय्या इत्याशयेनाह' इति पाठान्तरम्। (४) 'तत्रस्थचकारो वेति' इति पाठान्तरम्। (५) 'तद्वत्ताज्ञाना'दिति पाठान्तरम्। (६) पुस्तकविशेषे 'शब्दात्' इति नास्ति, परन्तु 'त्याकारकात्' इत्यनन्तरं 'वाक्यात्' इति वर्त्तते। (७) 'नवेत्यादिवाक्या'दिति पाठान्तरम्। (८) क्वचित् 'यत्र तत्कोटेरुपलब्धिरि'ति पाठो व्यतिक्रमेण।

(ड) अव्याप्यवृत्तित्वं स्वाधिकरणवृत्त्यभावप्रतियोगित्वम्। तेन संशये किञ्चिद् विषयकत्वावच्छेदेन सा जातिः, किञ्चिद्विषयकत्वावच्छेदेन च तदभाव इति। अत एव पुरुषत्वविषयकोत्कटसंशयात्मकसम्भावनास्थले धर्मिणि पुरुषत्वं सम्भावयामीत्येवानुव्यवसायः, न तु धर्मिणि पुरुषत्वाभावं सम्भावयामीत्यपि। तत्र धर्मिविषयतानिरूपित-पुरुषत्वविषयता-कत्वावच्छेदेन ताहशजातेः सत्त्वात् ताहशपुरुषत्वाभावविषयताकत्वावच्छेदेन च तदसत्त्वादिति भावः।

(ढ) 'सूत्रे' इति न्यायदर्शनोक्तसंशयसूत्र इत्यर्थः।

स विशेषः विशेषादर्शनं तत्सापेक्ष इत्यन्तेन कारणमुक्त्वा लक्षणमाह—'विमर्श' इति। एकधर्मिकविरुद्धो(ड)भयार्थो(१) विमर्श इत्यर्थः।

अत्र च शब्दो नित्यो न वेति संशयस्य साधारणधर्मदर्शनादितः प्रत्येकं सम्भवात् परामर्शानुमित्योरिवाव्यवहितोत्तरत्वं कार्य्यतावच्छेदकीकृत्य हेतुता(ढ)ग्रहः, साधारणधर्मस्य धर्मितावच्छेदकत्वेन संशयविषयत्वसम्भवेऽपि असाधारणत्वस्य स्वरूपसत्साध्यतदभावनिश्चयगर्भतया विप्रतिपत्तेश्च तथात्वासम्भवादिति भावः।

## दीधितिः

कोटिद्वयसहचरितधर्मवत्तया धर्मिज्ञानं हेतुः। धर्मस्यैकत्वं ज्ञानस्य च निश्चयत्वं नोपयुज्यते गौरवात्। अवगाहते च लिङ्गसन्देहो लैङ्गिकतदभावसहचरितौ लिङ्गतदभावौ धर्मिणि(२)। तथा च साधारणधर्म एव अस्यान्तर्भाव(३) इति तु नव्याः।

## दीधितिप्रकाशः

यथाश्रुतमेव(ण) सूत्रमुपपादयितुं मतान्तरमाह—'कोटिद्वये'त्यादिना। तत्कोटिसहचरितधर्मवत्ताज्ञानं तदभावकोटिसहचरितधर्मवत्ताज्ञानञ्चेत्यर्थः।

---

(१) 'विरुद्धोभयाभ्या'मिति पाठान्तरम्। (२) 'धर्मिण' इति पाठान्तरम्। (३) 'तस्यान्तर्भाव' इति पाठान्तरम्।

---

(ड) 'विरुद्धोभयार्थ' इति—विरुद्धं उभयमर्थः विषयो यस्य स इति व्युत्पत्त्या विरुद्धधर्मद्वयविषयक इत्यर्थः, विरुद्धोभयधर्मप्रकारक इति यावत्। विमर्श इति ज्ञानमित्यर्थः। विभिन्नधर्मिकोभयविरुद्धधर्मप्रकारकसमुच्चये अतिव्याप्तिनिराकरणाय 'एकधर्मिके'ति। विभिन्नरूपादिना एकधर्मिकोभयविरुद्धधर्मप्रकारकसमुच्चयादावतिप्रसङ्गवारणाय एकधर्मपर्य्याप्तावच्छेदकताकविशेष्यताकत्वं विभिन्नावच्छेदकताकान्यविशेष्यताकत्वं वा एकधर्मिकेत्यस्यार्थो वक्तव्यः। एवञ्च न तत्र तत्रातिप्रसङ्गसम्भावनापि। तादृशोभयप्रकारतानिरूपिततादृशैकविशेष्यतायाः निष्कर्षे विवक्षणाच्च न तादृशसमुच्चये अतिप्रसङ्गः, समुच्चये प्रकारताद्वयनिरूपितविशेष्यताद्वयोपगमात्।

(ढ) साधारणधर्मदर्शनोत्तरसंशयं प्रति साधारणधर्मदर्शनत्वेन इत्यादिरीत्या हेतुताग्रह इति भावः।

(ण) पूर्वदीधितौ 'समाने'त्यादि सूत्रन्तु उपलक्षणपरम्। तत्रत्यचकारो वा अनुक्तसमुच्चयार्थ' इत्यनेन निरुक्तन्यायसूत्रस्य यदुपलक्षणपरत्वं चकारस्य वा अनुक्तसमुच्चायकत्वं व्याख्यातम् तद्व्यवच्छेदार्थमाह 'यथाश्रुतमेवे'ति।

'धर्मस्यैकत्व'मिति,—कोटिद्वयसहचरितो य एको धर्मः, तद्वत्ताज्ञानत्वेन न हेतुत्व(त)मित्यर्थः। इदमुपलक्षणम्, कोटिद्वयाधिकरणे एकसम्बन्धेन तस्य(१) वृत्तित्वमपि नापेक्ष्यत इति(२) बोध्यम्।

एतावता लिङ्ग(थ)सन्देहस्य कथं तत्रान्तर्भावस्तद्(३) दर्शयति—'अवगाहते चे'ति। 'लैङ्गिके'ति,—लैङ्गिकञ्च(द) तदभावश्च तयोः सहचरितौ, साध्यसहचरितं लिङ्गं साध्याभावसहचरितश्च(४) लिङ्गाभाव इत्यर्थः। 'साधारणधर्म एव' तज्ज्ञान एव। 'अस्य' व्याप्यसंशयस्य।

अत्र वह्निसहचरितधूमवान् वह्न्यभावसहचरितधूमाभाववान् वेत्याकारक-संशयाभावेऽपि धूमवान्नवेत्याकारकसंशयादनुभवसिद्धस्य वह्निसंशयस्यानुपपत्तिः, अनुवृत्तत्व—व्यावृत्तत्वसम्बन्धेन वह्नितदभावसहचरितधूमज्ञानात् संयोगेन वह्नि-सहचरितधूमवत्त्वावगाहिनः समवायेन वह्न्यभावसहचरितद्रव्यत्वाव(५)गाहिनो ज्ञानादपि वह्नि(६)संशयापत्तिश्चास्वरसो नव्या इत्यनेन सूचितः।

## दीधितिः

लिङ्गतदभावयोः प्रत्येकमेकैककोटिसाधारण्येऽपि मिलितयो(७)रसाधारण्यम्, सत्प्रतिपक्षस्थले विरुद्धयोरिव हेत्वोरिति(८) टीकाकारानुयायिनः।

## दीधितिप्रकाशः

'मिलितयो'रिति,—अत्र मेलनं(९) न अपेक्षाबुद्धिविशेषविषयत्वरूपं तदुभयत्वम्, तथा सति संयोगसम्बन्धावच्छिन्नप्रतियोगिताकस्य लिङ्गतदभावो-भयत्वावच्छिन्ना(१०)भावस्य केवलान्वयिनः कोटिद्वयसहचरिततया तत्प्रतियोगिता-

(१) 'धर्मस्ये'ति पाठान्तरम्। (२) 'इत्यपि' इति पाठान्तरम्। (३) 'तदन्तर्भावः अतस्तद्' इति पाठान्तरम्। (४) 'चरितो लिङ्गाभाव' इति पाठान्तरम्। (५) 'द्रव्यत्ववत्त्वावगाहिन' इति पाठान्तरम्। (६) क्वचिद् वह्निशब्दो नास्ति। (७) 'मिलितयोरसाधारणत्वम्' इति पाठान्तरम्। (८) 'हेत्वोरिति तु' इति पाठान्तरम्। (९) 'मिलनम्' इति पाठान्तरम्। (१०) 'तदभावोभयत्वावच्छिन्नप्रतियोगिताकाभावस्य' इति पाठान्तरम्।

(त) तादृशहेतुतायामवच्छेदककोटौ उभयत्वस्य गुरुधर्मस्य प्रवेशेन गौरवादिति भावः।

(थ) 'लिङ्गसन्देहस्ये'ति—व्याप्यसंशयस्येत्यर्थः।

(द) 'लैङ्गिकं' साध्यमित्यर्थः।

वच्छेदकसंयोगसम्बन्धेन लिङ्गतदभावोभयवत्ताज्ञानस्यासम्भवादसाधारणस्थले यत्-सम्बन्धावच्छिन्नाभावस्य कोटिद्वयसाहचर्य्यं, तेन सम्बन्धेन प्रतियोगितावच्छेदका-वच्छिन्नप्रतियोगिनो(१) धर्मिवृत्तिताज्ञानस्यैव संशयहेतुत्वात्. अन्यथा समवाय-सम्बन्धावच्छिन्नधूमाभावस्य वह्नितदभावसाहचर्य्यग्रहे संयोगेन धूमवत्ताज्ञानेनापि संशयापत्तेः :

नापि पक्षविशिष्टापरत्वम, धूमधूमाभावयोर्विरुद्धत्व(२)ज्ञाने पक्षविशिष्टा-परत्वेन तज्ज्ञानासम्भवात्। तस्माद् धूमस्य संयोगेन तदभावस्य च विशेषण-तयैव धर्मिणि(३) संशयविषयत्वेन(घ) अपेक्षाबुद्धिविषयत्वरूपोभयत्वावच्छिन्नत्व-ग्रहे तादृशसंयोगविशेषणतान्यतरसम्बन्धेन(४) तदुभयत्वावच्छिन्नप्रतियोगिता-कत्वेनाभावस्य कोटिद्वयसाहचर्य्यग्रहाद् भवति कथञ्चित् संशयोपपत्तिरित्याशयः।

'टीकाकारे'ति, टीकाकृता सत्प्रतिपक्षस्थले विरुद्धयोर्हेत्वोः प्रत्येकमेकैक-कोटिसमानाधि(५)करणत्वेऽपि मिलितयोरसाधारणविधया संशयजनकत्व-स्वीकारात्; लिङ्गतदभावसन्देह(६)स्थले तथात्वस्यानुक्तत्वादनुयायिन इति।

अत्रापि वह्नितदभावसहचरितव्यतिरेकप्रतियोगितावच्छेदकोभयत्ववद्धूमतद-भाववानयमित्याकारकज्ञानाभावेऽपि धूमवान्न वेति संशयादनुभवसिद्धस्य वह्निसंशयस्य अनुपपत्तिः, अन्यतरसम्बन्धेन अभावज्ञानासम्भवाद् भ्रमरूपतादृश(न)ज्ञानेनापि नोपपत्तिरित्यस्वरसः।

## दीधितिः

इत्थञ्च साधनाव्यापकत्वसन्देह(७) साध्यव्यापकव्यभिचारसन्देहात्(८) साध्यव्यभिचारसन्देहो हेतौ स्फुट एव। साध्यव्यापकत्वसन्देहे तु साधनाव्यापक-

(१) क्वचित् 'प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिन' इति पाठो नास्ति।
(२) 'विरोधज्ञान' इति पाठान्तरम्। (३) 'एकधर्मिणि' इति पाठान्तरम्।
(४) 'सम्बन्धावच्छिन्ने'ति पाठान्तरम्। (५) 'साधारण्येऽपि' इति पाठान्तरम्।
(६) 'लिङ्गसन्देहस्थले' इति पाठान्तरम्। (७) 'संशये' इति पाठान्तरम्।
(८) 'संशयात्' इति पाठान्तरम्।

(घ) केचिदत्र 'संशयविषयत्वे' इति प्रथमाद्विवचनान्तं पाठमत्रैव च च्छेदमाहुः।
(न) अपिना प्रमात्मकतादृशज्ञानसमुच्चयः।

व्याप्यत्वसन्देहात् साध्ये साधनाव्यापकत्वसन्देहो बोध्यः। उपाधेः साध्यव्यापकत्व-सन्देहेनाहितात् साधने साध्यव्यापकव्यभिचारसन्देहात् साध्यव्यभिचारसन्देहः, इत्यमेव च दलद्वये संशयस्थले व्यभिचारसंशयस्योक्तिसम्भव इत्यपि वदन्ति।

## दीधितिप्रकाशः

'इत्थञ्चे'ति,—व्याप्यसंशयस्य स्वातन्त्र्येण साधारणधर्मादिज्ञानविधया वा संशयहेतुत्वे चेत्यर्थः। 'स्फुट एवे'ति,—उपाधौ साधनसमानाधिकरणाभावप्रतियोगित्वसन्देहे साधनेऽपि उपाध्यभाववद्वृत्तित्वसन्देहस्य औचित्यावर्जितत्वात्(१) तस्य(प) च स्व(२)साध्यव्यभिचारव्याप्यतया हेतौ साध्याभाववद्वृत्तित्यस्य च स्व(३)साध्यव्यभिचाररूपतायाः स्फुटत्वादित्यर्थः।

'साधनाव्यापके'ति,–साधनाव्यापकव्याप्यत्वस्य साधनाव्यापकत्वव्याप्यत्वात् साधने साध्याभाववद्वृत्तित्वस्येव(४) साध्ये साधनवद्वृत्त्यभावप्रतियोगित्वस्यापि व्यभिचारत्वाद् व्यभिचारसंशयोपपत्तिरिति भावः।

मतान्तरमाह—'उपाधे'रित्यादिना 'वदन्ती'त्यन्तेन। यथा दण्डवत्त्वेन पुरुषस्य निश्चयेऽपि(५) तद्दण्डे रक्तत्वसन्देहात्(६) पुरुषो रक्तदण्डवान्न वेति संशयः, तथा उपाधिव्यभिचारित्वेन निर्णीतेऽपि साधने तदुपाधौ साध्यव्यापकत्वसन्देहात(७) साधनं साध्यव्यापकोपाधिव्यभिचारि न वेति संशय इत्यर्थः। 'इत्थमेवे'ति,—साध्यव्यापकत्वस्यानिर्णयात् प्रथमप्रकारस्य, साधनाव्यापकत्वस्यानिर्णयाद् द्वितीयप्रकारस्य च तत्रासम्भवादिति भावः।

अत्र साध्यव्यापकव्यभिचारित्वं न तद्व्यापकतावच्छेदकावच्छिन्नाभाववद्वृत्तित्वम्, साध्यव्यापकस्य प्रमेयत्वादेः सर्वत्र सम्भवेन तदभावग्रहासम्भवात्।

(१) 'औचित्यात्' इति पाठान्तरम्। (२-३) पुस्तकविशेषे स्वपदद्वयं नास्ति। (४) 'वृत्तित्वस्येव' 'इत्यारभ्य' भाव 'इत्यन्तपाठस्थले क्वचित्' 'वृत्तित्वस्यैव साध्ये साधनवद्वृत्त्यभावप्रतियोगित्वस्यापि व्यभिचारसंशयाधायकस्योपपत्तिरिति भाव' इति पाठो दृश्यते। (५) 'पुरुषनिर्णयेऽपि' इति पाठान्तरम्। (६) 'सन्देहे' इति पाठान्तरम्। (७) 'साधने साध्यव्यापकोपाधिव्यभिचारो न वेति' इति पाठान्तरम्।

(प) 'तस्ये'ति साधननिष्ठोपाध्यभाववद्वृत्तित्वस्येत्यर्थः।

तथा च आर्द्रेन्धनत्वे धूमव्यापकतावच्छेदकत्वस्य सन्देहे तद्व्यभिचारित्वेन निर्णीते वह्नौ कथं धूमव्यापकतावच्छेदकार्द्रेन्धनत्वावच्छिन्नाभाववद्वृत्तित्वस्य सन्देहः, तादृरूप्येण कोट्युपस्थितेः साधारणादिधर्मदर्शनस्य चाभावात्(१) ?

किञ्च आर्द्रेन्धनं यदि(२) धूमव्यापकं तदा वह्निर्धूमव्यापकव्यभिचारी भविष्यति ; यदि न तद्व्यापकं तदा नेति क्रमेण संशयाधायकत्वं न सम्भवति। संशयकोटितावच्छेदकधूमव्यापकतावच्छेदकार्द्रेन्धनत्वानुल्लेखे तादृशकोट्यप्रसिद्धेः। आर्द्रेन्धनत्वाद्युल्लेखे धूमव्यापकार्द्रेन्धन(३)त्वावच्छिन्नव्यभिचारि नवेति(४) संशयस्य धूमव्यापकार्द्रेन्धनादिव्यभिचारस्य वह्नौ निर्णयेनासम्भवात्। आर्द्रेन्धनत्वमनुल्लिख्य धूमव्यापकतावच्छेदक-यत्किञ्चिद्रूपावच्छिन्नाभाववद्वृत्तित्वस्य च संशये आर्द्रेन्धनत्वे धूमव्यापकतावच्छेदकत्वसन्देहोऽप्रयोजक इत्यादि(क)रस्वरसो वदन्तीत्यनेन सूचितः।

उभयत्र सन्देहस्थले च उपाधिव्यभिचारस्य साध्यव्यभिचारव्याप्यत्वसन्देहे तस्य(ख) च वह्नौ सन्देहे व्याप्यत्वसन्देह(५) विषयस्य सन्देहे विषयसन्देहकोटितावच्छेदकांशे सन्देहात् कथञ्चिद् हेतौ व्यभिचारसंशय इति भावः।

## तत्त्वचिन्तामणिः

न च तेनैव हेतुना शाकपाकजत्व(६)मपि साध्यम्, तत्र श्यामत्वस्य उपाधित्वात्, उभयस्यापि(७) साधने अर्थान्तरम्। श्यामत्वमात्रे(८) विवादो न तूभयत्र।

(१) 'चासम्भवा'दिति पाठान्तरम्। (२) क्वचित् 'यदि आर्द्रेन्धनम्' इति व्यतिक्रमेण पाठः। (३) 'व्यापकार्द्रेन्धनव्यभिचारि' इति पाठान्तरम्। (४) 'न वेति' इत्यतः परं 'सामान्यत' इति पाठः क्वचिदधिकः। (५) 'सन्देहे' इति क्वचित् पाठः। (६) 'तदपि' इति पाठान्तरम्। (७) 'उभयसाधने च' इति पाठान्तरम्। (८) 'मात्र हि' इति पाठान्तरम्।

(क) आदिपदेन यत्र उपाधौ साध्यव्यापकतासंशयदशायामन्यत्र केवलान्वयिनि एव साध्यव्यापकतानिर्णयस्तत्र साध्यव्यापकीयोऽभाव इत्यनिश्चयेन साधनं साध्यव्यापकाभाववद्वृत्ति न वेति संशयासम्भव इत्यस्य दूषणस्य संग्रहो बोध्यः।

(ख) 'तस्य चे'ति उपाधिव्यभिचारस्य चेत्यर्थः।

न चैवं धूमाद् वह्न्यनुमानेऽपि वह्निसामग्री उपाधिः स्यादिति वाच्यम् (१) तत्र वह्निनेव तत्सामग्र्यापि समं धूम(२)स्यानौपाधिकत्वनिश्चयात्, अत्र तु मित्रातनयत्वव्याप्यश्यामत्वसामग्र्या स्थातव्यमित्यत्र कार्य्यकारणभावादीनां व्याप्तिग्राहकाणामभावात्। अत एव साध्यसामग्र्या सह हेतोरपि यत्र(३) व्याप्तिग्राहकमस्ति, तत्र सामग्री नोपाधिः। यत्र तु तन्नास्ति, तत्र सापि उपाधिरित्यभिसन्धाय सामग्री च क्वचिन्नोपाधिः, न तु सर्वत्रेत्युक्तम्। यथा 'तुल्ययोगक्षेमयोरुपाधेः साध्य(४)व्यापकतासन्देहे ईश्वरानुमाने शरीरजन्यत्वाणुत्वादौ, यथा च शाकपाकजत्वस्य साध्यव्यापकतासन्देहे मित्रातनयत्वे(भ)।

## दीधितिः

'उभये'ति,—एकांशेऽपरस्य एकविशिष्टापरसाध्यतायान्तु एकैकस्य उपाधित्वमिति तत्त्वम्। 'ईश्वरे'ति,—वस्तुतः सत्त्वेऽपि तत्त्वाग्रहदशायामुपाधि(५)-सन्देहेन(६) व्यभिचारसन्देह(७) इति भावः।

## दीधितिप्रकाशः

अर्थान्तरस्य पुरुषदोषत्वाद् वस्तुदोषमाह,—'एकांश' इत्यादिना। यदि प्रत्येकरूपेण साध्यतया(८)मुभयस्य समूहालम्बनानुमितिः तदा(९) 'एकांशे अपरस्ये'ति श्यामत्वांशे शाकपाकजत्वस्य, शाकपाकजत्वांशे श्यामत्वस्येत्यर्थः।

यदि च उभयत्वमेकविशिष्टापरत्वम्, अपेक्षाबुद्धिविशेषविषयत्वं वा साध्यतावच्छेदकं, तत्राह—'एकविशिष्टे'त्यादिना। मूले 'तुल्ययोगक्षेमयो'रिति,—सहचारदर्शन-व्यभिचारादर्शनरूपव्याप्तिग्राहकसत्त्वेन तुल्ययोगक्षेमयोः साध्यसाधनयोः साध्योपाध्योश्चेत्यर्थः।

---

(१) क्वचित् 'इति वाच्यम्' इत्यंशविनाकृत एव पाठः। (२) 'तस्यानौपाधिकत्वे'ति पाठान्तरम्। (३) 'अत एव' इत्यनन्तरमेव क्वचित् 'यत्र' इत्यस्य पाठो दृश्यते। (४) ग्रन्थविशेषे साध्येति पाठो नास्ति। (५) 'उपाधित्व' इति पाठान्तरम्। (६) 'संशयेन' इति पाठान्तरम्। (७) 'संशय' इति पाठान्तरम्। (८) साध्यतयोभयस्य इति पाठान्तरम्। (९) 'तत्रे'ति पाठान्तरम्।

---

(भ) मित्रातनयत्वे हेतौ शाकपाकजत्वमिति शेष इति माथुरी व्याख्या।

क्षित्यङ्कुरादिकं(१) सकर्तृकं कार्य्यत्वादित्यस्य सदनुमानत्वात् कथं तत्रोपाधिसम्भव इत्यत आह,—'वस्तुत' इति। 'तत्त्वाग्रहे'ति,—सद्धेतुत्वाग्रह इत्यर्थः। 'उपाधित्वसन्देहेने'ति,—उपाधित्वघटक(२)सन्देहेनेत्यर्थः। तथा च साध्यव्यापकत्वसन्देहस्य व्यभिचारसंशयाधायकत्वे उदाहरणप्रदर्शनमिदम्, न तु वास्तविकोपाधिप्रदर्शन(३)मिति भावः।

## तत्त्वचिन्तामणिः

यत्तु उपाधिसन्देहो नोपाधिः, न वा हेत्वाभासान्तरमिति तदुद्भावने निरनुयोज्यानु(म)योग इति, तन्न; सन्दिग्धानैकान्तिकवद् व्यभिचारसंशयाधायकत्वेन दूषकत्वात्(४) उपाधेरिव व्यभिचारनिश्चयाधायकतया।

## दीधितिः

'सन्दिग्धे'ति,—न च अनैकान्तिकत्वसन्देहः प्रतिबन्धको, न तु तज्ज्ञानमिति तदर्थं तदुद्भावनमफलमिति वाच्यम्; अनैकान्तिकत्वसंशयान्मम(५)व्याप्तिग्रहो मा भूदित्यभिप्रायेण प्राचां हेतुदोषत्वेनासाधकतासाधकतया जिज्ञासा(६)द्वारा परम्परया सन्देहोपयोगित्वेन च तदुद्भावनस्य साम्प्रदायिकत्वात्।

## दीधितिप्रकाशः

दृष्टान्तासिद्धिमाशङ्कते 'न चानैकान्तिकत्वे'ति। 'तज्ज्ञानं' सन्देहज्ञानम्। 'तदर्थं'(७) तत्-सन्देहज्ञानार्थम्। 'तदुद्भावनम्' अनैकान्तिकत्व(८)सन्देहोद्भावनम्। 'इत्यभिप्रायेण' तदुद्भावनस्य साम्प्रदायिकत्वादित्यग्रिमेणान्वयः। व्याप्त्यज्ञानस्यैवोद्भावनं किमर्थमत आह—'प्राचा'मिति। अज्ञानरूपासिद्धेरपि तेषां मते हेत्वाभासत्वेन(९) असाधकतानुमाने लिङ्गतया तज्ज्ञानार्थं तदुद्भावनमित्यर्थः।

(१) 'क्षित्यादिक'मिति पाठान्तरम्। (२) 'घटकसाध्यव्यापकतासन्देहेनेत्यर्थ' इति पाठान्तरम्। (३) 'प्रदर्शनपरमिति' इति पाठान्तरम्। (४) 'दूषणत्वात्' इति पाठान्तरम्। (५) 'सन्देहान्मम' इति पाठान्तरम्। (६) 'जिज्ञासाद्वारा' इति पाठान्तरम्। (७) ग्रन्थविशेषे 'तदर्थ'मिति पाठो नास्ति। (८) ग्रन्थविशेषे 'तदुद्भावन'मिति पाठो नास्ति। (९) 'तेषां हेत्वाभासत्वे' इति पाठान्तरम्।

(म) तथा च परार्थानुमान एव उपाधिसन्देहो दूषणं, न तु स्वार्थानुमानेऽपीति भाव इति माथुरी व्याख्या। निरनुयोज्यानुयोगश्च अनिग्रहस्थाने निग्रहस्थानाभियोग इति।

नवीनमते(१)ऽपि तदुद्भावनोपयोगं दर्शयति 'जिज्ञासादी'ति। अनैकान्तिकत्वसन्देहोद्भावने तद्बीजजिज्ञासायां साधारणधर्मवत्त्वादिज्ञानस्य तद्बीजस्यानुसरणे स्वस्यापि साधारणधर्मवत्त्वादिज्ञाने कोट्युपस्थितौ संशयस्यापरीहारादिति भावः। 'जिज्ञासादी'त्यादिपदात्(२) कोट्युपस्थित्यादिपरिग्रहः। 'तदुद्भावनस्य,'—अनैकान्तिकत्वसन्देहोद्भावनस्य।

## दीधितिः

उपाधित्वस्य संशये निश्चये च जायमानं यज्ज्ञानमनुमितिं विरुणद्धि, तदेवास्य दूषकताबीजमित्यभिप्रायेणाह 'सन्दिग्धे'ति। तद्व्यतिरेकस्य क्वचिद् व्याप्यत्वेन क्वचिच्च पक्षधर्मत्वेन सन्दिग्धत्वाद् 'बाधोन्नीते'ति।

## दीधितिप्रकाशः

सन्दिग्धोपाधेरपि निश्चयदशायां सत्प्रतिपक्षोन्नायकत्वस्य सत्त्वाद्(३) दूषकत्वापत्तिरित्यसङ्गतमत आह—'उपाधित्वस्ये'ति। 'तदेवास्ये'ति,—सत्प्रतिपक्षोन्नयनञ्च उपाधित्वस्य संशये न सम्भवतीति न दूषकताबीजमिति भावः।

साध्यव्यापकत्वसन्देहे साधनाव्यापकत्वनिर्णयस्थले तद्व्यतिरेकस्य पक्षे न सन्दिग्धत्वमतः पूरयति(४)—'क्वचिद् व्याप्यत्वेने'ति। 'क्वचित्',—साध्यव्यापकत्वसन्देहस्थले(५)। 'पक्ष' इत्यस्य व्याख्या 'क्वचिच्चे'ति। 'क्वचित्' साधनाव्यापकत्वसन्देहस्थले पक्षधर्मत्वेनेति।

## तत्त्वचिन्तामणिः

इदानीमुपाधेर्दूषकताबीजं निरूप्यते(६)। नाप्यस्य स्वव्यतिरेकद्वारा सत्प्रतिपक्षोन्नायकतया दूषकत्वम्, तदा हि सत्प्रतिपक्षे सत्प्रतिपक्षान्तरवदुपाध्युद्भावनं न स्यात्। न च प्रतिपक्षबाहुल्येनाधिकबलार्थमुपाध्युद्भावनम्, शतमप्यन्धानां न पश्यतीति न्यायात्, एकेनापि बहूनां प्रतिबन्धाच्च।

(१) 'नवीनस्य तदुद्भावनोपयोग'मिति पाठान्तरम्। (२) 'जिज्ञासादीत्यादिना' इति पाठान्तरम्। (३) 'सम्भवा'दिति पाठभेदः। (४) 'तद्दूषयति' इति पाठान्तरम्। (५) ग्रन्थविशेषे 'क्वचित्' 'साध्यव्यापकत्वसन्देहस्थले' इति पाठो नास्ति। (६) 'चिन्त्यते' इति पाठान्तरम्।

व्याप्तिपक्षधर्मते हि बलम्, तच्च तुल्यमेव, न तु भूयस्त्वमपि, एकस्मादप्य(१)नुमितिदर्शनात्, सन्दिग्धोपाधेरदूष(२)कतापत्तेश्च, तद्व्यतिरेकस्य पक्षे(३) सन्दिग्धत्वात्। अपि चैवं बाधोन्नीतपक्षेतरस्योपाधित्वं न स्यात्, व्यतिरेके असाधारण्यात्।

पक्षवृत्ति(४)श्चोपाधिर्न स्यात्, यथा घटोऽनित्यो द्रव्यत्वादित्यत्र कार्य्यत्वम्, अन्धकारो द्रव्यं स्वातन्त्र्येण प्रतीयमानत्वादित्यत्राश्रावणत्वं, तद्व्यतिरेकस्य पक्षावृत्तित्वात्। न च नायमुपाधिः, तल्लक्षणसत्त्वात्, अन्यथापि(५) दूषकत्वसम्भवाच्च।

किञ्च साध्यव्याप्याव्यापकत्वेनोपाधेः साध्याव्यापकत्वे कथं(६) तद्व्यतिरेकेण सत्प्रतिपक्षः? न ह्यव्यापकाव्यतिरेकाद्व्याप्यव्यतिरेकः।

## दीधितिः

ननु बाधे अवतीर्णे तत एव हेतोरसाधकत्वात् कृतमुपाधिना। न वा असाधारण्यम् पक्षस्यैव सपक्षत्वात्। अनवतीर्णे तु नोपाधित्वम्, पक्षेतरान्तरवत् साध्यव्यापकताया एवाग्रहात्। अनुकूलतर्कादिना कथञ्चित् तद्ग्रहे च नासाधारण्यम्, व्यतिरेकितया अन्वयव्याप्त्यग्रहस्य सत्प्रतिपक्षतया च सत्प्रतिपक्षान्तरस्याकिञ्चित्करत्वादित्यरुचेराह—'पक्षवृत्तिश्चे'ति(७)। पक्षे तद्ग्रहदशायां तदभावग्रहासम्भवादिति भावः।

## दीधितिप्रकाशः

'तत एव' बाधावतारादेव। 'कृतमुपाधिने'ति,—तथा च इष्टापत्तिरिति भावः। 'व्यतिरेके असाधारण्या'दिति हेतुं दूषयति 'न वे'ति। 'पक्षस्यैव

(१) 'अनुमिते'रिति पाठान्तरम्। (२) 'दूषकत्वापत्ताच' इति पाठान्तरम्। (३) ग्रन्थविशेषे 'पक्ष' इति पाठो नास्ति। (४) 'पक्षधर्म' इति पाठान्तरम्। (५) 'अपि' शब्दो न सार्वत्रिकः। (६) क्वचित् 'तद्व्यतिरेकेणे'त्यनन्तरं 'कथ'मिति पाठः। (७) मूले 'पक्षधर्मे' इति पाठकल्पे 'पक्षधर्मश्चेति' इति बोध्यम्।

सपक्षत्वा'दिति,—हेतोश्च तद्व्यावृत्त(१)त्वाभावादिति भावः। 'अन(२)वतीर्णे तु' बाधे 'नोपाधित्वं' न दूषकत्वम्। 'पक्षेतरान्तरवदि'ति,—यथा वह्निमान् धूमादित्यत्र पक्षेतरो नोपाधिः, तथा अत्रापीत्यर्थः। अत्र हेतुमाह—'साध्यव्यापकताया' इति। तथा च पक्षे साध्यसन्देहान्न व्यापकत्वनिश्चय इति भावः।

'अनुकूलतर्कादिने'त्यादिना स्वतःसिद्धव्यभिचाराग्रहसंग्रहः। 'तद्ग्रहे' साध्यव्यापकताग्रहे, नासाधारण्यं क्षतिकरम्। असाधारण्यस्य हि साध्यसहचारधीप्रतिबन्धेनान्वयव्याप्तिधीप्रतिबन्धः।

व्यतिरेकव्याप्त्यादरे तु साध्यतदभावयो(३)र्द्वयोरपि तदविशेषात् सत्प्रतिपक्षो दूषकताबीजम्। तदुभयमप्यत्र न सम्भवतीत्याह—'व्यतिरेकितये'त्यादिना। अन्वयव्याप्त्यग्रहस्य अकिञ्चित्करत्वादित्यग्रिमेणान्वयः। पक्षवृत्तेरपि पक्षवृत्तित्वाग्रहदशायां सत्प्रतिपक्षोन्नयनसम्भवादाह—'पक्षे तद्ग्रहे'ति।

## तत्त्वचिन्तामणिः

नापि व्याप्तिविरहरूपतया, असिद्धत्वेनानौपाधिकत्वस्य व्याप्तित्वनिरासात्। नाप्यनौपाधिकत्वज्ञानस्य व्याप्तिधीहेतुत्वेन व्याप्तिज्ञानकारणविघटकतया व्याप्यत्वासिद्धावन्तर्भावः(४)। नह्यन्यस्य साध्यव्यापकत्वज्ञानमन्यव्याप्तिज्ञानं प्रति प्रतिबन्धकमित्युक्तम्।

## दीधितिः

व्याप्तिविरहरूपतां निरस्य व्याप्तिज्ञानाभावद्वारकतां निरस्यति—'नापी'ति। 'अनौपाधिकत्वज्ञानस्य' औपाधि(५)कत्वज्ञानाभावस्य। 'कारणविघटकतया' कारणाभावरूपतादृशज्ञानविषयतया। अनौपाधिकत्वज्ञानस्य कारणत्वं नान्वयव्यतिरेकसिद्धम्, परन्तु सोपाधित्वज्ञानस्य प्रतिबन्धकताया विना कारणीभूतज्ञान-

---

(१) 'तद्व्यावर्त्तकत्वाभावादिति भाव' इति पाठान्तरम्। (२) 'अनवतीर्णे तु' इत्यनन्तरं 'अनुकूलतर्कादिनेत्यादिने'त्यतः पूर्ववर्त्ती सन्दर्भः क्वचित् स्खलितो दृश्यते। (३) 'तदभावयोरपि' इति क्वचित् पाठः। (४) 'व्याप्तिधीहेतुत्वस्य तत्त्वेन व्याप्तिज्ञानकारणविघटकतया व्याप्यत्वासिद्धेऽन्तर्भाव' इति पाठान्तरम्। (५) 'सोपाधिकत्वज्ञानाभावस्य' इति पाठान्तरम्।

विघटनमसम्भवित्वेन कल्पनीयम्, सैव त्वसिद्धेति दूषणतात्पर्य्याद् यथाश्रुतमेव साधीय इत्यपि वदन्ति। 'व्याप्यत्वासिद्धौ'(१) व्याप्यत्वाज्ञाने। 'अन्तर्भाव:' तद्द्वारा दूषकत्वम्।

## दीधितिप्रकाशः

पौनरुक्त्यपरिहाराय व्याचष्टे—'व्याप्तिविरहे'ति। 'व्याप्तिज्ञानाभावद्वारकता'मिति,—'व्याप्यत्वासिद्धा(२) वतर्भाव' इत्यस्य(३) यथाश्रुतार्थानुरोधेनेदमुक्तम्। सोपाधित्वज्ञानस्य प्रतिबन्धकतायाः पूर्वपक्षिणोऽभिप्रायाविषयत्वे 'न ह्यन्यस्ये'त्यादिदूषणस्य(४)दानमसङ्गतमतस्तदभिप्रायेणैव व्याचष्टे—'अनौपाधिकत्वे'ति(५)। तथा च नञर्थस्य औपाधिकत्वज्ञानेन सममन्वय इति भावः। तत्प्रतिबन्धकत्वरूपस्य विघटकत्वस्यासम्भवादाह,—'कारणाभवरूपे'ति। 'तादृशज्ञानम्', औपाधिकत्वज्ञानम्।

नञर्थस्यौपाधिकत्वेन सममन्वयं समर्थयितु'(६) मतान्तरमाह—'अनौपाधिकत्वज्ञानस्ये'त्यादिना। 'विना कारणीभूते'ति,—साक्षाद्विरोधिनो ज्ञानस्य जनकीभूतज्ञानविघटनद्वारैव प्रतिबन्धकत्वादिति। 'कल्पनीय'मिति 'कारणत्व'मिति पूर्वेणान्वितम्। 'सैव' सोपाधित्वज्ञानस्य प्रतिबन्धकतैव। 'दूषणे'ति 'न ह्यन्यस्य साध्यव्यापकत्वे'त्यादिदूषणग्रन्थेत्यर्थः। 'यथाश्रुतमेवे'ति,—प्रतिबन्धकत्वरूपस्य यथाश्रुतविघटकत्वस्यैव रक्षणादिति भावः।

एतद्व्याख्याने दूषणग्रन्थे 'स्वतः प्रतिबन्धक'मित्यत्र 'स्वत' इत्यस्यासङ्गतिरित्यस्वरसोऽपि 'वदन्तिभ्यां सूचितः। व्याख्यानद्वय एवोपाधेर्व्याप्तिविरहत्वाभावात्। 'व्याप्यत्वासिद्धा' वित्यादिप्रतीकस्यार्थमाह—'व्याप्यत्वा(७)सिद्धौ' इति। व्याप्यत्वा(८)ज्ञाने उपाधेरन्तर्भावासम्भवादाह—'अन्तर्भाव' इति।

(१) मूले 'व्याप्यत्वासिद्ध' इति पाठकल्पे अत्रापि 'व्याप्यत्वासिद्ध' इति पाठो ज्ञेयः। (२) अत्रापि 'व्याप्यत्वासिद्ध' इति पाठान्तरं ज्ञेयम्। (३) 'इत्यग्रिमस्य' इति क्वचित् पाठः। (४) 'न ह्यन्यस्येत्यादिना दूषणमसङ्गत'मिति पाठान्तरम्। (५) 'औपाधिकत्वे'ति पाठान्तरम्। (६) 'समर्थ्य' इति पाठान्तरम्। (७) 'व्याप्यत्वासिद्धे' इति पाठान्तरम्। (८) 'व्याप्यत्वज्ञाने' इति क्वचित् पाठः।

## तत्त्वचिन्तामणिः

न च साध्यव्यापकाव्याप्यत्वज्ञाने विद्यमाने साधनस्य साध्यव्याप्यत्वज्ञानं नोत्पत्तुमर्हतीति वाच्यम् ; न हि साध्यव्यापकव्याप्यत्वज्ञानं व्याप्तिज्ञान(१)कारणम् , येन तत् प्रतिबन्धकं स्यात्, किन्तु साध्यव्यापकव्यभिचारित्वेन साध्यव्यभिचारित्वज्ञानद्वारा ।

नापि व्यभिचारोन्नायकत्वेन, यथा हि साध्यव्यापकव्यभिचारित्वेन(२) साधनस्य साध्यव्यभिचारित्वमनुमेयम् , तथा साध्यव्याप्यव्यभिचारित्वेन साध्यव्यभिचारित्वमुपाधेर(३)प्यनुमेयम् , व्याप्तिग्राहकसाम्यात्(४) ।

नापि साध्यव्यापकाव्याप्यत्वेन व्याप्तिविरहोन्नायकतया साध्यव्याप्याव्यापकत्वेनोपाधेरेव साध्याव्यापकत्वसाधनात् , तस्मादुपाधिर्हेत्वाभासान्तरमिति ।

## दीधितिः

भिन्नधर्मिकत्वं परिहरन्नाह—'न चे'ति । 'न ही'ति,—विरोधिविषयकत्वाभावेन साक्षात् प्रतिबन्धकत्वासम्भवादिति भावः । 'साध्यव्याप्यव्यभिचारित्वेन' 'साध्यव्यभिचारित्व'मित्युभयत्रैव बहुव्रीहिः । तस्मादित्यादेरदूषणं वेति शेषः ।

## दीधितिप्रकाशः

साध्यव्यापके साधनाव्यापकत्वं साधने वा साध्यव्यापकाव्याप्यत्वमित्यनयोर्विशेषण—विशेष्यभावमात्रभेदेऽपि तुल्यत्वादेकदूषणेनैवान्यस्यापि दुष्टत्वात् पुनराशङ्कनमनुचितमतस्तच्छङ्काबीजमाह—'भिन्नधर्मिकत्व'मिति । 'न ह्यन्यस्ये'त्यादिना भिन्नधर्मिकत्वमेवा(य)प्रतिबन्धकत्वे बीजमुक्तम् , तदेव(र) परिहर्त्तुं पुनः शङ्केति भावः ।

---

(१) 'व्याप्तिज्ञाने' इति पाठान्तरम् । (२) 'चारितया' इति पाठान्तरम् । (३) 'पाधेरनुमेयम्' इति पाठान्तरम् । (४) 'तौल्यात्' इति पाठान्तरम् ।

(य) 'एव'कारेण विरोधाविषयकत्वव्यवच्छेदः ।

(र) 'तदेवे'ति-भिन्नधर्मिकत्वमेवेत्यर्थः ।

कारणविघटकत्वाभावेनाप्रतिबन्धकत्वाशङ्कनमनुचितं साक्षात् प्रतिबन्धकत्वस्यापि सम्भवादतस्तदसम्भवमाह—'विरोधिविषयकत्वे'ति। तदभावतद्(१)-व्याप्याविषयकत्वेनेत्यर्थः। 'उभयत्रैवे'ति,—'साध्यव्याप्यव्यभिचारित्वे'नेत्यत्र बहुव्रीह्यकरणे व्यभिचारः स्यादतः साध्यव्याप्यं व्यभिचारि यस्येति व्युत्पत्त्या साध्यव्याप्याव्यापकत्वेनेत्यर्थः करणीयः।

'साध्यव्यभिचारित्व'मित्यत्र तदकरणे(ल)प्रकृते क्षतिः, साध्यव्यापकत्वादिघटितोपाधित्वस्याक्षतेः, अतः साध्यं व्यभिचारि यस्येति बहुव्रीहिणा साध्याव्यापकत्वमर्थः करणीय इति भावः।

'तस्मादि'ति मूलस्य क्लृप्तदूषकताबीजस्याभावादित्यर्थः। ततोऽदूषकत्वस्यापि सम्भवात् 'हेत्वाभासान्तर'मिति निर्द्धारण(व)मनुचितमतः पूरयति—'तस्मादित्यादे'रिति।

## तत्त्वचिन्तामणिः

उच्यते;—आर्द्रेन्धनवत्त्वादेस्तर्कादिना साध्यव्यापकत्वसाधनाव्यापकत्वे निश्चिते दूषकताबीजचिन्तनम्। यदि हि(२) साध्यसाधनसहचारदर्शनेनोपाधौ साध्यव्यापकतानिश्चय एव नास्ति, तदोपाधित्वनिश्चयाभावाद्(३) दूषकतैव नास्तीति क्व बहिर्भावान्तर्भावचिन्ता?

किञ्च सत्प्रतिपक्षतया व्याप्यत्वासिद्धतया स्वातन्त्र्येण वा यदि दूषकत्वम्(४) सर्वथा साध्यव्यापकतानिश्चयो, वाच्यः(५), तेन विना तेषामभावात्, तस्मादुपाधेर्निश्चयाद्(६) व्यभिचारनिश्चयः, तत्संशयात् तत्संशय इति व्यभिचारज्ञानद्वारा साध्यव्यापकाव्याप्यत्वेन व्याप्तिविरहोन्नायकतया वा उपाधेर्दूषकत्वम्।

---

(१) 'तदभाववत्तद्व्याप्ये'ति पाठान्तरम्। (२) 'यदि च' इति पाठान्तरम्। (३) 'भावेन' इति पाठान्तरं क्वचित्। तत्र च 'दूषकतैव नास्तीति' अंशो न दृश्यते। (४) 'दोषत्व'मिति पाठान्तरम्। (५) 'वक्तव्य' इति पाठान्तरम्। (६) 'तस्मादुपाधिनिश्चया'दिति पाठान्तरम्।

(ल) 'तदकरण' इति-बहुव्रीह्यकरण इत्यर्थः।

(व) 'निर्द्धारण'मिति-सर्वं हि वाक्यं सावधारणं भवतीति न्यायप्राप्तमवधारणमित्यर्थः।'

## दीधितिः

'दूषकताबीजचिन्तन'मिति,–निश्चयदशामधिकृत्य। यन्निश्चयद्वारा उपाधित्वनिश्चयस्य दूषकत्वं तत्संशयद्वारा तत्संशयस्यापि तथात्वमिति भावः।

'व्यभिचारज्ञानद्वारे'ति,—मानसे व्यभिचारनिश्चये उपाधिज्ञानं विशेषदर्शनरूपत्वेनोपयुज्यते। व्यभिचारानुमानं पुनरग्रे वक्ष्यते (१)।

## दीधितिप्रकाशः

ननु साध्यव्यापकत्वादिनिश्चय एवोपाधेर्दूषकत्वे सन्दिग्धोपाधेरदूषकत्वप्रसङ्ग इत्यत आह—'निश्चयदशा'मिति। नन्वेवं सन्देहदशायां दूषकताबीजस्याकथनान्न्यूनत्वमत आह—'यन्निश्चयद्वारे'ति। 'तत्संशयस्य'—उपाधित्वसंशयस्य। 'यद्वे'त्यादिवक्ष्यमाणेन पौनरुक्त्यमाशङ्क्याह—'मानस' इति। चाक्षुषादिरूपतन्निश्चयस्य साध्योपाधिव्यभिचारनिरूपकाधिकरणसन्निकर्षाधीनतया तत्सन्निकर्षसत्त्वे युगपदेवोभय(२)निर्णया(श)दुपाधिनिर्णयस्य प्रयोजकत्वं(ष) न सम्भवतीति भावः।

यद्यप्युपनीतभानात्मकचाक्षुषादिरूपतन्निश्चयेऽप्युपाधिनिर्णयस्य कथञ्चिदुपयोगः(३) सम्भवत्येव, तथापि परार्थाभिप्रायेणेदम्। तथा च उपाध्युपन्यासे परस्य क्वचिन्मानसं क्वचिच्चानुमानिकं व्यभिचारज्ञानमिति भावः।

## दीधितिः

'व्याप्ती'ति—साध्यसम्बन्धितावच्छेदकरूपविरहः साधनतावच्छेदके साध्यसम्बन्धितानवच्छेदकत्व(४)पर्य्यवसन्नः, साध्यवदन्यावृत्तित्वविशिष्टसाध्यवद्वृत्तित्व-

---

(१) 'वक्ष्यति' इति क्वचित् पाठः। (२) 'युगपदेवोभयोर्निर्णये'ति पाठान्तरम्। (३) 'क्वचिदुपयोग' इति पाठान्तरम्। (४) 'च्छेदकरूपत्वे'ति पाठान्तरम्।

---

(श) 'उभयनिर्णया'दिति-साध्यव्यभिचारस्य उपाधिव्यभिचारस्य च निर्णयादित्यर्थः।

(ष) 'प्रयोजकत्व'मिति-साध्यव्यभिचारनिर्णयं प्रतीति शेषः, सव्येतरविषाणयोरिव युगपज्जायमानयोः प्रयोज्यप्रयोजकभावस्यासम्भवादिति भावः।

विरहो वा उन्नेयः, न तु स्वसमानाधिकरणात्यन्ताभावप्रतियोगिसाध्यकत्वम्; स्वत्वस्यानुगतस्याभावेन तत्तत्साधन(१)पर्य्यवसाने साध्यप्रसिद्धिमात्रेणैव कृतार्थत्वात्। साध्यव्यापकोपाधिव्यभिचारित्वेन हेतौ साध्यव्यभिचारित्वं साधनाव्यापकोपाधिव्याप्यत्वेन साध्ये साधनाव्यापकत्वमनुमेयमिति तु नव्याः।

## दीधितिप्रकाशः

अग्रे(२) 'यद्व'त्यादिग्रन्थे व्यभिचारानुमानाद् व्याप्तिविरहानुमानस्य पृथग्भावं दर्शयति—'साध्यसम्बन्धिते'त्यादिना।

ननु द्रव्यं सत्त्वादित्यादौ गुणकर्मान्यत्वविशिष्टसत्त्वात्वादेः साध्यसम्बन्धितावच्छेदकस्य सत्त्वात् तादृशव्याप्तिविरहानुमानं बाधितमित्यत आह—'साधनतावच्छेदक' इति। तथा च साधनतावच्छेदकमेव पक्षीकृत्योपाधिव्यभिचारिवृत्तित्वादिना साध्यसम्बन्धितानवच्छेदकत्वमनुमेयमिति भावः।

अव्यभिचरितसामानाधिकरण्यं कारणीभूतज्ञानविषयतावच्छेदकं व्याप्तिरिति मतमनुसृत्याह—'साध्यवदन्ये'त्यादि। 'स्वत्वस्यानुगतस्ये'ति,—अनुगततत्सम्भवे तु साधनान्तरे तत्प्रसिद्ध्या प्रकृतसाधने तदनुमानं सम्भवतीति भावः।

'कृतार्थत्वा'दिति,—वह्निसमानाधिकरणात्यन्ताभावप्रतियोगिधूमकत्वग्रहे धूमे वह्निसमानाधिकरणात्यन्ता(३)भावप्रतियोगित्वस्यापि विषयीकृतत्वेन व्यभिचारधीमुद्रया तस्यैव विरोधित्वसम्भव इत्यलं व्याप्तिविरहानुमानेनेति भावः(४)।

नन्वेवं व्यापकसामानाधिकरण्यरूपव्याप्त्यनुपाधिज्ञानमकिञ्चित्करमतस्तत्प्रतिबन्धकत्वाभिप्रायेण व्याप्तिरूपाद्युदाहरणे—'साध्यव्यापकोपाधी'त्यादिना(५)। 'साधनाव्यापकोपाधी'ति,—तथा च 'व्याप्तिविरहोन्नायकतये'ति ग्रन्थस्य धूमत्वं वह्नि-

(१) 'साधनत्वे'ति पाठान्तरम्। (२) 'अत्र' इति पाठान्तरम्। (३) 'करणाभावे'ति पाठान्तरम्। (४) 'तस्यैव विरोधित्वसम्भवादिति भाव' इत्येतन्मात्रकः क्वचित् पाठः। (५) 'प्रायेणाह साध्यव्यापकोपाधीत्यादिना' इति पाठान्तरम्।

समानाधिकरणात्यन्ताभाव(१)प्रतियोगितावच्छेदकं वह्निव्यापकार्द्रेन्धनादिव्याप्यतावच्छेदकत्वादित्यनुमाने तात्पर्य्यमिति भावः।

## तत्त्वचिन्तामणिः

यद्वा साध्यव्यापकाभाववद्वृत्तितया साध्यव्यभिचारित्वमुन्नेयम्। न च साधनाभाववद्वृत्तित्वमुपाधिरिति वाच्यम्(२), उपाधिमात्रोच्छेदप्रसङ्गात्, सत्प्रतिपक्षे पूर्वसाधनव्यतिरेकवत्, अवृत्तिगगनादौ साध्याव्यापकत्वात् संयोगादौ हेतौ साधनव्यापकत्वाच्च।

## दीधितिः

व्यतिरेकिणि साधने व्याप्तिविरहस्य व्यभिचारस्य चोन्नयने उपाधिः साधनाभाववद्वृत्तित्वम्। व्यभिचारास्फुटतादशायामुपाध्यनुसरणाद् यत्राधिकरणे हेतोः(३) साध्यव्यभिचारित्वं तद्वीयधर्मे(४)नास्य साध्याव्यापकत्वग्रहः।

'उपाधिमात्रे'ति,—तेनापि व्यभिचारानुमाने तत्रापि तथाविधोपाधिसम्भवादिति भावः।

## दीधितिप्रकाशः

वह्निमान् प्रमेयत्वादित्यादिकेवलान्वयिसाधने व्यभिचारानुमाने साधनाभावस्याप्रसिद्ध्या तद्वद्वृत्तित्वस्योपाधित्वासम्भवादाह—'व्यतिरेकिणी'ति। अव्यवहितप्रक्रान्तव्यभिचारानुमान एवास्योपाधित्वमिति शङ्कानिराकरणायाह—'व्याप्तिविरहस्ये'ति। अत एवावृत्तिगगनादौ(५) दूषणं वक्ष्यति।

ननु वह्निर्धूमव्यभिचारी आर्द्रेन्धनव्यभिचारित्वादित्यत्र वह्न्यभाववद्वृत्तित्वं वस्तुगत्या नोपाधिः(६) तस्य साध्याव्यापकत्वात्। साध्यव्यापकत्वघटितोपाधित्व-

---

(१) 'करणाभावे'ति पाठान्तरम्। (२) क्वचित् पुस्तकान्तरे 'इति वाच्यम्' इति नास्ति। (३) 'हेतौ' इति पाठान्तरम्। (४) 'तद्वृत्तिधर्मादौ' इति पाठान्तरम्। (५) 'अवृत्तिगगनादाविति दूषणमिति' इति पाठान्तरम्। (६) 'नोपाधिः साध्याव्यापकत्वात्। तस्योपाधित्वज्ञानादनुमितिप्रतिबन्ध' इति पाठान्तरम्।

ज्ञानादनुमितिप्रतिबन्धः स्यादित्यपि न, धूमव्यभिचारनिरूपकायोगोलकवृत्तिधर्म एव धूम(१)व्यभिचारिणि वह्न्यभाववद्वृत्तित्वस्यासत्त्वेन साध्यव्यापकताया एवाग्रहादत आह—'व्यभिचारास्फुटत्वे'ति। अयोगोलकवृत्तिधर्मान्तरे धूमव्यभिचारस्फुरणे वह्नावपि तुल्यसामग्रीकतया व्यभिचारस्फूर्त्तिः स्यात्तदानीञ्च उपाध्यनुसरणमफलं स्यादिति भावः। तथा(२) च धूमाभाववद्वृत्तित्वं ह्रदत्वादौ, तत्र च वह्न्यभाववद्वृत्तित्वमपि वर्त्तत इति तस्य साध्य(३)व्यापकत्वमित्यर्थः।

'अस्य'-साधनाभाववद्वृत्तित्वस्य उपाधेः। ननु नोपाधिमात्रोच्छेदः, अस्यै(स)वोपाधेः सत्त्वादत आह—'तेनापी'ति। 'तेन' साधनाभाववद्वृत्तित्वेन। 'तथाविधे'ति—साधनाभाववद्वृत्तित्वोपाधिना यत्र साधने व्यभिचारोऽनुमेयः, तत्साधनाभाववद्वृत्तित्वोपाधेस्तत्र सम्भवात्, आर्द्रेन्धनव्यभिचारित्वं धूमव्यभिचारित्वव्यभिचारि वह्न्यभाववद्वृत्तित्वव्यभिचारित्वादिति व्यभिचारानुमाने आर्द्रेन्धनव्यभिचारा(४)भाववद्वृत्तित्वस्योपाधेः सम्भवादित्यर्थः।

## दीधितिः

वस्तुतस्तु व्यापकव्यभिचारिणो व्याप्याव्यभिचारित्वे व्याप्यव्यापकभावव्याघातापत्त्या हेतोः साध्यव्याप्यत्वेन साधनाभाववद्वृत्तित्वस्य साध्याव्यापकत्वान्नोपाधित्वमिति तत्त्वम्(५)।

'अवृत्ती'ति—व्याप्यत्वाभावसाधनाभिप्रायेण। साधनाव्याप्यत्वस्योपाधित्वे च नैष दोषः। 'साधने'ति यथाश्रुताभिप्रायेण, प्रतियोगिव्यधिकरणसाधनाभाववद्वृत्तित्वस्य साधनवदन्यवृत्तित्वस्य चोक्तौ तथात्वासम्भवात्।

(१) ग्रन्थविशेषे 'धूमे'ति पाठो नास्ति। (२) ग्रन्थविशेषे 'तथाच'इत्यारभ्य 'साध्यव्यापकत्वमित्यर्थ' इत्यन्तः सन्दर्भो नास्ति। (३) 'तस्य व्यापकत्वमित्यर्थ' इति पाठान्तरम्। (४) 'चारित्वाभाव' इति पाठान्तरम्। (५) क्वचित् 'तत्त्वम्' इति नास्ति।

(स) 'अस्यैवे'ति—साधनाभाववद्वृत्तित्वस्यैवेत्यर्थः।

## दीधितिप्रकाशः

ननु नोपाधिमात्रोच्छेदः, केवलान्वयिसाधनीयोपाधेरेव सम्भवात्, व्यतिरेकिसाधनेऽपि तथा(ह)विधोपाधेरप्रतिसन्धानेऽस्योपाधित्वसम्भवादत आह—'वस्तुतस्त्वि'ति। 'व्याप्यव्यापकभावव्याघाते'ति,—व्यापकव्यभिचारिणो व्याप्या(ख)व्यभिचारित्वं व्यापकव्यभिचारनिरूपकाधिकरणे व्याप्यसत्त्व एव सम्भाव्येत, तच्च व्यापकाभाववति व्याप्यसत्त्वे कुतो व्याप्यव्यापकभाव इति भावः।

'हेतोः' व्यभिचारानुमानहेतोरार्द्रेन्धनादिव्यभिचारित्वस्य। 'साध्याव्याप्यत्वेन' धूमादिव्यभिचारित्वरूपसाध्याव्याप्यत्वेन। साध्याव्यापकत्वादित्यस्य साध्यव्याप्यहेत्वव्यापकतयेत्यादिः। व्यभिचारसाधने अवृत्तिगगनादौ व्यभिचाररूपसाध्यस्यैवासत्त्वेन(क) कथं तत्र साध्यव्यापकत्वमत आह—'व्याप्यत्वाभावे'ति। तत्रापि साध्याव्यापकत्वं परिहरति 'साधनाव्याप्यत्वस्ये'ति। मूले 'संयोगादा'विति,—रूपवत् संयोगादित्यत्र स्पर्श उपाधिः, तत्र व्यभिचारानुमाने संयोगः रूपव्यभिचारी स्पर्शव्यभिचारित्वादित्येवंरूपे संयोगाभाववद्वृत्तित्वं स्पर्शव्यभिचारित्वरूपसाधनव्यापकत्वान्नोपाधिरित्यर्थः।

तद्दूषणं समुद्धरति(१)—'प्रतियोगिव्यधिकरणे'ति। संयोगे संयोगाभाववद्वृत्तित्वस्य सत्त्वेऽपि प्रतियोगिव्यधिकरणसंयोगाभाववद्वृत्तित्वस्य सत्त्वात् साधनाव्यापकत्वमक्षतमिति भावः; प्रतियोगित्वस्यैकस्याभावात् प्रकृते संयोगानधिकरणवृत्तिसंयोगाभाववद्(२)वृत्तित्वं फलितम्। तत्र च संयोगां(३)शस्य वैयर्थ्याद् गौरवाच्चाह—'साधनवदन्येति। 'तथात्वासम्भवात्' साधनव्यापकत्वासम्भवात्।

(१) 'तद्दूषणमप्युद्धरति' इति पाठान्तरम्। (२) 'संयोगाभाववत्त्व'मिति पाठान्तरम्। (३) 'संयोगाभावांशस्य' इति पाठान्तरम्।

(ह) 'तथाविधोपाधे'रिति—साधनाभाववद्वृत्तित्वरूपोपाधेरित्यर्थः।
(ख) एतत्प्रकरणे सर्वत्र व्याप्यव्यापकशब्दौ तत्त्वेनाभिमतपरौ अन्यथा व्याघातात्।
(क) 'असत्त्वेने'ति—व्यभिचारस्य वृत्तित्वात्मकत्वादिति भावः।

## दीधितिः

एवञ्च सत्प्रतिपक्षे निश्चितोपाधिवत् सन्दिग्धोपाधिरुद्भाव्यः। न च तत्कर्त्तव्यस्य व्यभिचारसन्देहस्य प्रतिहेतुसमाजादेव सिद्धेः किं तेनेति वाच्यम्; परस्परसंबल(१) नेनैवानुमित्यनुत्पादे तत्र व्यभिचारसन्देहस्यावश्यमुत्पत्तौ माना-भावात्, उपाधिसन्देहाद् विशिष्यैकत्र व्यभिचारसन्देहेन(२) तुल्यबलत्वाभावात्। न च अतुल्यबलेन सत्प्रतिपक्षो व्यभिचार(३)शङ्काधानं वा, स्वरसतः सन्दिग्ध-व्यभिचारादिनापि तथात्वप्रसङ्गादिति।

## दीधितिप्रकाशः

यदर्थं व्यभिचारोन्नायकत्वेन तत्संशयाधायकत्वेन च उपाधेर्दूषकत्वं व्यवस्थापितं तद् दर्शयति—'एवञ्चे'ति। 'सन्दिग्धोपाधि'रिति—निश्चितोपाधिना व्यभिचारनिश्चय(४)इव सन्दिग्धोपाधिना व्यभिचारसंशयेऽपि व्याप्तिग्रहे हेतो-स्तुल्यबलत्वाभावेन सत्प्रतिपक्षविच्छेदादिति भावः।

'तत्कर्त्तव्यस्य' सन्दिग्धोपाधेः कर्त्तव्यस्य(५)। 'समाजः' सम्बलनम् 'तेन' सन्दिग्धोपाधिना। तथा च प्रतिहेतुसम्बलनाधीनव्यभिचारसंशयास्कन्दितस्ये-वोपाधिसंशयाधीनव्यभिचारसंशयास्कन्दितस्यापि सत्प्रतिपक्षोन्नायकत्वस्याक्षुण्ण-त्वेन तत्र सन्दिग्धोपाध्युपन्यासस्य दूषणत्वा(६)सम्भवादिति भावः।

सत्प्रतिपक्षे(७) व्यभिचारसंशयस्यानावश्यकत्वे दूषकता तस्य कथमत आह—'परस्परे'ति। तथा च साक्षादनु(ख)मितिप्रतिबन्धेनैव तस्य दूषकत्वमिति भावः।

---

(१) 'परस्परप्रतिबन्धेनैवानुमित्यनुत्पादेन' इति पाठान्तरम्। (२) 'सन्देहे' इति क्वचित् सप्तम्यन्तः पाठः। (३) 'व्यभिचारादि' इति पाठान्तरम्। (४) 'निर्णय इवे'ति पाठान्तरम्। (५) 'सन्दिग्धोपाधिकर्त्तव्यस्य' इति पाठान्तरम्। (६) 'दूषणत्वाभावादिति' इति पाठान्तरम्। (७) ग्रन्थविशेषे 'सत्प्रतिपक्ष इत्यारभ्य 'दूषकत्वमिति भावः' इत्यन्तः सन्दर्भो नास्ति।

---

(ख) 'साक्षादनुमितिप्रतिबन्धेनैवे'ति—साध्यवत्ताबुद्धौ साध्याभावव्याप्यवत्ताविषयस्य प्रतिबन्धकत्वकल्पनेन विपरीतसाध्यानुमितिप्रतिबन्धेनैवेत्यर्थः। एवकारेण पूर्वोक्तरीत्या व्यभिचारसंशयं द्वारीकृत्य दूषकत्वव्यवच्छेदः।

'तत्र' सत्प्रतिपक्षे। क्वचिदुपाधिसन्देहवशात् तत्रापि व्यभिचारसन्देहो भवत्येवेत्यत आह 'अवश्य'मिति। उपाधिसन्देहात् कथं सत्प्रतिपक्षविच्छेद-स्तदाह 'उपाधी'ति। अनयोरन्यतरद् बाध्यमिति क्रमेणान्यतरत्वेन व्यभिचार-सन्देहस्य साधारणस्याप्रतिबन्धकत्वेऽपि विशिष्य व्यभिचारसन्देहोऽवश्यं प्रतिबन्धक इत्याह—'विशिष्ये'ति। 'विशिष्य' तत्तद्धेतुतावच्छेदकं धर्मितावच्छेदकीकृत्य। 'सत्प्रतिपक्षः' प्रतिहेत्वधीनानुमितिप्रतिबन्धः।

एकत्र व्याप्त्यादिभङ्गज्ञानद्वारा(१) सत्प्रतिपक्षस्य दूषकत्वमिति मतभेद-मनुसृत्याह—'व्यभिचारशङ्काधानं(२)वेति स्वरसत उपाधिसन्देहं विना साधारणादिधर्मवत्ताज्ञानेन(३)। 'व्यभिचारादी'त्यादिना व्याप्तिपक्षधर्मतादि-परिग्रहः। 'तथात्वप्रसङ्गात्' सत्प्रतिपक्षस्य व्यभिचारशङ्काधानस्य वा प्रसङ्गा-दित्यर्थः।

## दीधितिः

अत्र च क्वचिदुपाधेस्तुल्यबलत्वे सत्प्रतिपक्षोन्नायकतया तर्कादिसाचिव्या-दधिकबलत्वे च बाधोन्नायकतयापि दूषकत्वम्। व्याप्त्यादिप्रतिसन्धाने तदुन्नयनस्य ततोऽनुमितिप्रतिरोधस्य च दुर्वारत्वात्, परन्तु सार्वत्रिकत्वं न तस्येति ध्येयम्।

## दीधितिप्रकाशः

नन्वेवमुपाधेर्व्यभिचारज्ञानजननद्वारैव दूषकत्वे तदस्फूर्त्तौ(ग) सत्प्रति-पक्षोन्नायकताप्रयोजकव्याप्त्यादिस्फूर्त्तौ ततोऽनुमितिप्रतिबन्धो न स्यात्, एव-मसाधारणविपर्ययादीनां वक्ष्यमाणाभासत्वानुपपत्तिः, सत्प्रतिपक्षोन्नयन एव तदाभासत्वसम्भवादत आशयं पूरयति—'अत्रे'त्यादिना। 'तुल्यबलत्वे' समान(घ) व्याप्तिपक्षधर्मताज्ञापकसामग्रीसमवहितव्यतिरेकप्रतियोगित्वे। 'तर्कादिसाचिव्यात्'

(१) 'भङ्गद्वारा' इति पाठान्तरम्। (२) 'शङ्केति' इति पाठान्तरम्। (३) 'धर्मज्ञानेन' इति पाठान्तरम्।

(ग) 'तदस्फूर्त्ता'विति-व्यभिचारस्यास्फूर्त्तावित्यर्थः।

(घ) 'समानत्वमत्र व्याप्तिपक्षधर्मताज्ञापकसामग्र्या विशेषणम्। तच्च प्रकृतसाध्य-साधकहेतोर्व्याप्तिपक्षधर्मताप्रकारेण ज्ञानजनकसामग्रीतुल्यकालत्वम्

प्रतिबन्ध्य(ङ)परामर्शाप्रामाण्यप्रसञ्जकतर्कादिसाचिव्यात्। 'तर्कादी'त्यादिना, विशेषदर्शनपरिग्रहः। 'अधिकबलत्वे' प्रतिबन्ध्यपरामर्शा(च)प्रामाण्यज्ञानकालीनाप्रामाण्यज्ञानानास्कन्दित-परामर्शविषयव्यतिरेकप्रतियोगित्वे। 'बाधोन्नायकतया' बाधस्य साध्याभाववत्पक्षादेरनुमित्युपधायकतया।

व्यभिचारोन्नायकस्य कथं तदुन्नायकत्वमत(छ) आह—'व्याप्त्यादी'ति। व्याप्त्यादीत्यादिना पक्षधर्मतापरिग्रहः। 'तदुन्नयनस्य' सत्प्रतिपक्षबाधान्यतरोन्नयनस्य। सत्प्रतिपक्षोन्नयनञ्च स्वव्यतिरेके साध्याभावनिरूपितव्याप्त्यादिबोधजननम्। 'ततः' तदुन्नयनात्। 'परन्त्वि'ति,—इत्थञ्च व्यभिचारोन्नायकत्वस्यासार्वत्रिकत्वेऽपि(१) मूले तन्मात्रोपदर्शनमुपलक्षणपरमिति भावः।

वस्तुतस्तु(ज)उपाधिलक्षणप्रविष्ट साधनाव्यापकत्वदलस्य व्यभिचारोन्नयन एवोपयोगो, न तु सत्प्रतिपक्षोन्नयन इति तन्मात्रमुपदर्शितमिति भावः।

## तत्त्वचिन्तामणिः

अथोपाध्याभासाः। असाधारण(झ)विपर्य्ययः,—यथा अन्वयव्यतिरेकिणि साध्ये बाधोन्नीतान्यपक्षे(२)तरत्वम्। अप्रसिद्ध(ञ)साध्यविपर्य्ययः,—यथा केवलान्वयिनि साध्ये पक्षेतरत्वादिः(३)। बाधितसाध्यविपर्य्ययः,—यथा वह्निरुष्णस्तेजस्त्वादित्यत्र अकृतकत्वम्। पक्षाव्यापकविपर्य्ययः, यथा क्षित्यादिकं सकर्तृकं

(१) 'व्यभिचारोन्नायकत्वस्यासार्वत्रिकत्वात्' इति पाठान्तरम्। (२) 'पक्षेतर' इत्येतन्मात्रं पाठान्तरम्। (३) 'पक्षेतरादिः' इति पाठान्तरम्।

(ङ) 'प्रतिबन्ध्यपरामर्शे'ति—प्रतिबन्ध्यप्रकृतसाध्यानुमितिजनकपरामर्शेत्यर्थः।

(च) अत्रापि प्रतिबन्ध्यपरामर्शेत्यस्य पूर्वोक्त एवार्थः।

(छ) 'तदुन्नायकत्व'मिति—बाधसत्प्रतिपक्षोन्नायकत्वमित्यर्थः।

(ज) मूलस्य उपलक्षणपरत्वमसहिष्णुराह—'वस्तुतस्त्वि'ति।

(झ) 'असाधारणविपर्य्यय' इति—असाधारणः विपर्य्ययो व्यतिरेको यस्येति बहुव्रीहिः। साध्याभावे साध्य इति पूरणीयम्। तथा च यदभावः साध्याभावे साध्ये असाधारणो भवति स उपाध्याभास इत्यर्थः।

(ञ) 'अप्रसिद्धसाध्यविपर्य्यय'इति—अप्रसिद्धः अलीकः साध्यविपर्य्ययः साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावो यस्य स इति अत्रापि बहुव्रीहिः। यद्वृत्तिसाध्यस्य साध्यतावच्छेदकरूपेणाभावोऽलीकः, अत्यन्ताभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्याश्रय इत्यर्थः।

कार्य्यत्वादित्यत्राणुव्यतिरिक्तत्वम्। अत्र अणुव्यतिरिक्तत्वव्यतिरेकस्य(१) क्षित्यादेरेकदेशवृत्त्या(२) भागासिद्धेः। पूर्वसाधनव्यतिरेकः,—यथा शर्करारसोऽनित्योऽनित्यवृत्तिगुणत्वात्(ट), रसो नित्यः रसनेन्द्रियजन्यनिर्विकल्पकविषयत्वात् रसत्ववदित्यादौ। पूर्वसाधनतायाः प्रयोगानुरो(३)धित्वेनाव्यवस्थितत्वात् कदाचिन्नित्यत्वसाधनव्यतिरेकस्योपाधित्वं, कदाचिदनित्यत्वसाधनव्यतिरेकस्येति(४) वस्तुव्यवस्था न स्यात्, उपाधेर्नित्यदोषत्वात्(५)। न हि यद् येन सोपाधिसम्बद्धं तत्तेनानुपाधिसम्बद्धं सम्भवति।

न तु सत्प्रतिपक्षोच्छेदः पूर्वसाधनव्यतिरेकस्यानुपाधित्वे वीजम्। स्थापनाया यत्राभासत्वं तत्र पूर्वसाधनव्यतिरेकस्य साध्याव्यापकत्वेनानुपाधित्वात्। न च पूर्वहेतोस्तत्र पक्षासाधकत्वात् सत्प्रतिपक्षवैयर्थ्यं तत्रेति वाच्यम्; अगृह्यमाणविशेषदशायां सत्प्रतिपक्षसम्भवात्।

पूर्वसाधनव्याप्यव्यतिरेकः,—यथा(ठ) अकर्त्तृकत्वानुमाने नित्यत्वादिः। पक्षविपक्षान्यतरान्यः,—यथा प्रसिद्धानुमाने पर्वतजलह्रदान्यतरान्यत्वम्।

पक्षेतरसाध्याभावः,—यथा अत्रैव(६) पर्वतेतराग्निमत्त्वम्। न चात्र(७) व्यर्थविशेषणत्वं दूषणम्, तत्त्वे(८)ऽप्युपाधेराभासत्वात्। तत्साध्यश्च, यथा अत्रैव(९) पर्वतेतरेन्धनवत्त्वम्। एवं वह्निसामग्र्यादिकमूह्यम्।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ अनुमानखण्डे उपाधिप्रकरणं समाप्तम्।

(१) 'अणुव्यतिरेकस्य' इति पाठान्तरम्। (२) 'क्षित्याद्येकदेशवृत्तितया' इति पाठान्तरम्। (३) 'रोधेनाव्यवस्थितत्वात्' इति पाठान्तरम्। (४) 'रेकित्वस्येति' पाठान्तरम्। (५) 'दोषत्वाच्च' इति पाठान्तरम्। (६) 'तत्रैव' इति पाठान्तरम्। (७) क्वचित् 'अत्रेति नास्ति। (८) 'तथात्वे' इति पाठान्तरम्। (९) 'तत्रैव' इति पाठान्तरम्।

---

(ट) अत्र गुणान्यत्वे सतीति पूरणीयम्। अन्यथा घटादिवृत्तिरसे व्यभिचारापत्तेः। शर्कराया रस इत्युपनीतभानगोचरशर्करायां व्यभिचारवारणार्थं निर्विकल्पकेति। निर्विकल्पकत्वञ्च सप्रकारकभिन्नत्वम्। तेनांशिकनिर्विकल्पकमादाय न तद्दोषतादवस्थ्यमिति।

(ठ) यथेति कादाचित्कत्वेन सकर्त्तृकत्वस्य स्थापनायामिति शेषः। 'अकर्त्तृकत्वानुमान' इत्यकर्त्तृकत्वसाधके प्रतिहेतावजन्यत्व इत्यर्थः

## दीधितिः

'असाधारणविपर्यय' इति,—इदं सत्प्रतिपक्षोन्नायकत्वमभिप्रेत्य। यद्यपि व्यतिरेकेण(१) सत्प्रतिपक्षत्वे सत्प्रतिपक्षे सत्प्रतिपक्षान्तरस्यादोष(२)त्वादसा-साधारण्यम् दोषाय, तथापि सत्प्रतिपक्षोन्नयनौपयिक(३) साध्यव्यापकत्वग्राहक-प्रमाणाभावे तात्पर्य्यम्।

## दीधितिप्रकाशः

ननु असाधारणव्यतिरेकप्रतियोगिनाप्युपाधिना व्यभिचारोन्नयनस्य निष्प्रत्यूहं(ड) सम्भवात् कथं तस्या(ढ)भासत्वमत आह—'इद'मिति। 'इदम्' असाधारणविपर्य्यय-स्याभासत्वाभिधानम्। तत्रापि(ण) तदाभासत्वं(त) न सम्भवतीति शङ्कते—'यद्यपी'-त्यादिना। अन्वयव्याप्तिग्रहप्रतिबन्धोऽसाधारण(४)दूषकताबीजं नात्र सम्भवतीत्याह-'व्यतिरेकिणे'ति। सत्प्रतिपक्षोन्नायकतया दूषकत्वं न सम्भवतीत्याह—'सत्-प्रतिपक्षे(५) सत्प्रतिपक्षान्तरस्ये'ति।

इह स्वव्यतिरेकेणोपाधेः सत्प्रतिपक्षो(६)न्नायकत्वे असाधारण्यम्, साध्य-व्यापकताग्राहकप्रमाणशून्यस्याभासत्वे अवच्छिन्नसाध्यव्यापकस्यापि शाकपाकजत्वादे-राभासत्वं स्यादतः 'सत्प्रतिपक्षोन्नयनौपयिके'ति। प्रतिपक्षः साध्याभाववान् पक्षः, पक्षावृत्तित्वे सति पक्षधर्मावच्छिन्नसाध्यव्यापकत्वं तदुन्नयनौपयिकम्। यद्यपि पक्षवृत्तावपि उपाधावेतदस्ति, तथापि तस्याप्याभासतया एतदन्तर्भाव एवेति भावः।

(१) 'रेकिणा' इति पाठान्तरम्। (२) 'रस्यादोष इति नासाधारण्यम्' इति पाठान्तरम्। (३) 'न्नयनोपयोगिक' इति पाठान्तरम्। (४) 'धारणस्य' इति पाठान्तरम्। (५) ग्रन्थविशेषे 'सत्प्रतिपक्षे' इत्यंशो नास्ति। (६) 'पक्षोत्थापकत्वे' इति पाठान्तरम्।

(ड) 'निष्प्रत्यूह'मिति—असाधारणतया निरुक्तोपाधिव्यतिरेकस्य पक्षे साध्याभाव-साधनासामर्थ्येन तदुपाधिना सत्प्रतिपक्षोन्नयनं यद्यपि न सम्भवति, तथापि धूमो वह्निव्यभिचारी पर्वतेतरत्वव्यभिचारित्वाद्द्रव्यत्वादिवदित्यादिरूपेणोपाधिव्यभिचारेण साध्यव्यभिचारानुमाने असाधारण्यस्यासम्भवेन व्यभिचारोन्नयनमविघ्नितप्रसरमिति भावः।

(ढ) 'तस्ये'ति—असाधारणविपर्य्ययस्येत्यर्थः।

(ण) 'तत्रापि' तस्य दूषकताबीजत्वेऽपि।

(त) 'तदाभासत्व'मित्यत्र तस्य असाधारणसाध्यविपर्य्ययस्य आभासत्वमिति तत्पुरुषः।

## दीधितिः

तदयं निष्कर्षः; यत्र यद्दोषोन्नायकतया दूषणत्वमुपाधेः, तत्र तदुभयनौपयिकरूपवैकल्यमेवाभासत्वे प्रयोजकम्। एवञ्च यत्र स्थापनायां पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धिरुद्देश्या, तत्र पक्षाव्या(१)वर्त्तकविपर्य्ययस्याभासत्वम्। तद्व्यतिरेकेण(२) पक्षैकदेशे सत्प्रतिपक्षेऽप्येकदेशान्तरे साध्यसिद्धेरप्रत्यूहत्वात्।

यत्र तु पक्षतावच्छेदकावच्छेदेन तथा तत्र तादृशस्योपाधित्वमेव। एकदेशे प्रतिपक्षस्यापि तादृशसिद्धिविरोधित्वात् साध्यविपर्य्ययस्यासत्त्वमनुपाधित्वे प्रयोजकम्, न त्वज्ञानम्, अज्ञातस्यापि तस्य व्यापकव्यतिरेकेण सिद्धिसम्भवात्।

## दीधितिप्रकाशः

उपाध्याभासानामैक्योक्त्या आभासताप्रयोजकं रूपमाह— 'तदय'मिति। यत्र' यत्पक्षक-यत्साध्यक-यत्साधने 'यद्दोषः' व्यभिचारः सत्प्रतिपक्षो वा।

सामान्यतोऽभिहित(३)मुदाहरणविशेषे दर्शयति 'एवञ्चे'त्यादिना। 'सामानाधिकरण्येन' तन्मात्रेण। 'उद्देश्या' प्रकृता। प्रकृतानुमित्यविरोधितया आभासत्वमिति दर्शयति—'तद्व्यतिरेकेणे'त्यादिना। 'पक्षैकदेशे' तादृशोपाध्यभाववति 'एकदेशान्तरे' तादृशोपाध्यभावशून्ये। 'तथा' साध्यसिद्धिरुद्देश्या। 'तादृशस्य' पक्षाव्यावर्त्तकविपर्य्ययस्य। 'एकदेश' इति 'प्रतिपक्षस्यापी'(४)ति —पक्षैकदेशमात्रविषयकतदभावव्याप्यवत्तानिर्णयस्येत्यर्थः। 'तादृशसिद्धी'ति,— पक्षतावच्छेदकावच्छेदेन सिद्धीत्यर्थः।

अप्रसिद्धसाध्यविपर्य्ययस्याभासत्वं मूल उक्तम, तत्र अप्रसिद्धिपदस्य असदर्थकत्वमज्ञातार्थकत्वे दूषणञ्च दर्शयति—'साध्यविपर्य्ययस्ये'त्यादिना। साध्यविपर्य्ययस्यासत्त्वं साध्यस्य व्यतिरेकाप्रतियोगित्वमनुपाधित्वे प्रयोजकमिति भावः। साध्यस्य व्यतिरेकाप्रतियोगित्वे निश्चिते साध्यव्यतिरेकसिद्धेर(५)सम्भवादिति भावः। 'तस्य' साध्यविपर्य्ययस्य। 'सिद्धिसम्भवा'दिति,—अप्रसिद्धसाध्यव्यतिरेकसिद्धिसम्भवादिति भावः।

(१) 'पक्षाव्यापक' इति पाठान्तरम्। (२) 'तद्विरहेण' इति पाठान्तरम्। (३) 'हिते उदाहरणविशेषम्' इति पाठान्तरम्। (४) पुस्तकविशेषे 'प्रतिपक्षस्यापीति' पाठो नास्ति। (५) 'सिद्धेरभावसम्भवादिति' इति पाठान्तरम्।

# दीधितिः

अथ सिद्धसाध्यविपर्य्ययत्वेन चाभासत्वम् , व्यभिचारोन्नायकतया दूषकत्वपक्षे विनापि साध्यप्रसिद्धिं प्रत्येकपदार्थप्रसिद्ध्यैव घटो नाभिधेय इत्यादिप्रतिज्ञापत्तेः। व्युत्पादयिष्यते च तत्र प्रतिज्ञाविरहः; व्यापकाभावेनाप्रसिद्ध्यैव व्याप्याभावस्य सिद्धयभ्युपगमात्(१)।

पूर्वसाधनव्यतिरेकत्वन्तु नोपाधित्वेन नाप्यनुपाधित्वेन नियतम्। वह्निना धूमस्य स्थापनायां प्रतिहेतावार्द्रेन्धनाभावे वह्न्यभावस्योपाधितायाः, धूमाभावस्य चार्द्रेन्धनाभावेन स्थापनायां प्रतिहेतौ वह्नावार्द्रेन्धनस्यानुपाधितायाश्च प्रसङ्गात्। परन्तु पूर्वसाधनव्यतिरेकस्य प्रतिहेतावुपाधित्वेनोद्भावने सत्प्रतिपक्षमात्रमुच्छिद्येत, सर्वत्रैव तत्सम्भवात्। आभासत्वेऽपि स्थापनाया विशेषाग्रहदशायामेव सत्प्रतिपक्षोपन्यासात्।

वस्तुतः साध्याव्यापकस्यापि पूर्वसाधनव्यतिरेकस्य तदानीं तत्त्वेनाग्रहादुपन्यासासम्भवात्। अतो 'बलवत्तरानुकूलतर्कं विना पूर्वसाधनव्यतिरेको नोपाधित्वेनोद्भाव्य' इति कथकसमयवशादेवासावुपाधित्वेन नोपन्यस्यत इति। 'यथा अकर्तृकत्वे'ति,-कादाचित्कत्वेन सकर्तृकत्वस्थापनायामजन्यत्वे प्रतिहेतावित्यर्थः।

इति श्रीमद्रघुनाथशिरोमणिकृतायां दीधितौ अनुमानखडे
उपाधिप्रकरणं समाप्तम्।

# दीधितिप्रकाशः

पूर्वसाधनव्यतिरेकत्वं नाभासत्वे तन्त्रमिति वक्तुं विशेषनिषेधबलात् प्रसक्तां शेषाभ्यनुज्ञामपि निषेधति 'पूर्वे'त्यादिना। क्रमेण दूषणमाह—'वह्निने'ति। उपाधित्वनियमे अयं धूमवान् वह्नेरित्यत्र नायं धूमवान् आर्द्रेन्धनाभावादित्यत्र वह्न्यभावस्योपाधित्वप्रसङ्गात्।

अनुपाधित्वनियमे धूमाभाववानार्द्रेन्धनाभावादित्यस्य प्रतिहेतौ धूमवान् वह्नेरित्यत्र आर्द्रेन्धनाभावाभावात्मक-पूर्वसाधनव्यतिरेकस्य आर्द्रेन्धनस्य अनुपाधित्वप्रसङ्गादित्यर्थः। 'उपाधितायाः' इति—प्रसङ्गादित्यग्रिमेणान्वयः। 'सत्प्रतिपक्षमात्र'मिति,—व्यतिरेकिणि पूर्वहेताविति शेषः। 'तत्सम्भवात्'—पूर्वसाधनव्यतिरेकस्य उपाधित्वसम्भवात्।

(१) ग्रन्थविशेषे 'अथ' इत्यत आरभ्य 'सिद्धयभ्युपगमात्' इत्यन्तसन्दर्भो नास्ति।

ननु धूमवान् वह्नेरित्यत्र स्थापनायां न धूमवानार्द्रेन्धनाभावादित्यत्र प्रतिस्थापनायां पूर्वसाधनवह्न्यभावो नोपाधिः, अयोगोलके धूमाभाववति वह्न्यभावस्यासत्त्वेन साध्याव्यापकत्वादत आह—'आभासत्वेऽपी'ति। उक्तक्रमेण साध्याव्यापकत्वग्रहे स्थापनाहेतोर्व्यभिचारग्रह एव स्यात्, धूमाभाववति वह्न्यभावाभावस्य वह्नेर्ग्रहादुक्तरूपविशेषाग्रहदशायामेव सत्प्रतिपक्षोपन्यासात् तदानीं साध्याव्यापकत्वाग्रहादित्यर्थः। 'वस्तुतः'—वस्तुगत्या। 'तदानीं' स्थापनाहेतोर्व्यभिचाराग्रहकाले। 'तत्त्वेन' साध्याव्यापकत्वेन।

यद्यपि धूमाभाववति वह्निरित्याकारकं यत्र ज्ञानं न जातम्, वह्न्यभावाभाव इत्याकारकञ्च जातम्, तत्रैव स्थापनाहेतोर्व्यभिचाराग्रहात् साध्यव्यापकत्वग्रहाभावाच्च सत्प्रतिपक्षत्वमक्षतमेव, तथापि विचारकस्य धूमाभाववति वह्न्यभावाभाव इति ज्ञानकाले वह्नित्वेनापि ज्ञानसम्भवात्, तादृशाभिज्ञविचारकसत्प्रतिपक्षोच्छेदो बोध्यः।

'उपन्याससम्भवा'दिति,—पूर्वसाधनव्यतिरेकस्येत्यनुवर्त्तते। 'अतः' सत्प्रतिपक्षमात्रोच्छेदापत्तिभिया। 'बलवत्तरे'ति,—प्रतिस्थापनाहेतुव्याप्तिग्राहकानुकूलतर्काद् बलवत्तरेत्यर्थः(१)। 'बलवत्तरे'त्यादिः 'नोद्भाव्य'इत्यन्तः कथकसमयस्यैवाकार इति। 'कथकसमये'ति—इत्याकारक-कथकसमयेत्यर्थः। 'बलादेवे'ति,—न त्वाभासत्वादित्येवकारार्थः।

ननु क्षित्यादिकं सकर्त्तृकं कार्य्यत्वादित्यत्र स्थापनायामनित्यत्वस्य प्रागभाववृत्तेः कार्य्यत्वाव्याप्यत्वेन नित्यत्वं पूर्वसाधनव्याप्यव्यतिरेको न सम्भवति(२)। एवं क्षित्यादिकं न सकर्त्तृकं शरीराजन्यत्वाद् व्योमवदित्यादौ क्षित्यादिव्योमान्यतरत्वावच्छिन्नसाध्यव्यापकं नित्यत्वं सदुपाधिरेवेति कथमाभासत्वमित्यत आह—'कादाचित्कत्वेने'ति। तथा च क्षित्यादिकं सकर्त्तृकं कादाचित्कत्वादित्यत्र अनित्यत्वं कादाचित्कत्वव्याप्यं तद्व्यतिरेकश्च नित्यत्वमिति न पूर्वोक्तदोषः।

क्षित्यादिकमकर्त्तृकमजन्यत्वादित्यत्र प्रतिहेतौ क्षित्यादिव्योमान्यतरत्वावच्छिन्नसाध्यव्यापकं नित्यत्वं यथा तथा तदवच्छिन्नाजन्यत्वरूपसाधनव्यापकमपीति न सदुपाधित्वमिति न द्वितीयोऽपि दोषः

इति श्रीमद्भवानन्दीये तत्त्वचिन्तामणिदीधितिप्रकाशे अनुमानखण्डे
उपाधिप्रकरणव्याख्या समाप्ता।

---

(१) ग्रन्थविशेषे 'बलवत्तरेत्यर्थ' इत्यारभ्य 'एवकारार्थ' इत्यन्तग्रन्थो न दृश्यते।

(२) 'न भवति' इति पाठान्तरम्।

# अथ पक्षता-प्रकरणम्

## तत्त्वचिन्तामणिः

व्याप्त्यनन्तरं(क) पक्षधर्मता निरूप्यते। तत्र न तावत् सन्दिग्धसाध्यधर्मत्वं(१) पक्षत्वम्। सन्देहो हि न(२) विशेषणम्, परामर्शपूर्वं लिङ्गदर्शन-व्याप्तिस्मरणादिना तस्य नाशात्। नोपलक्षणम्, अव्यावर्त्तकतापत्तेः।

## दीधितिः

अनुमितिलक्षणैककार्य्यानुकूलतासङ्गत्या पक्षधर्मतां निरूपयितुमाह 'व्याप्ती'ति। 'सन्दिग्धे'ति,—यत्र साध्यस्य यादृशसम्बन्धावगाहिनिर्णयनिवर्त्यो यः संशयः,(३) तत्र स(४) तादृशसम्बन्धेन साध्यानुमितौ पक्षनेत्यर्थः। तेन न पक्ष(५)साध्यविशेष्यकसंशयाननुगमः, न वा सम्बन्धान्तरेण सन्देहेऽपि निर्णीतसम्बन्धेन पक्षत्वम्, न वा तमःप्रभृतिषु समवायेनाकाशादिसाधने तद्वैकल्यम्।

## दीधितिप्रकाशः

'एककार्य्यानुकूलत्वम्' प्रकृते एककार्य्यानुकूलज्ञाने विषयतया अवच्छेदकत्वम्(ख)। 'निरूपयितु'मिति,—पक्षतायाः(६) अनिरूपणे पक्षत्वविशिष्टपक्षधर्मत्वस्यानिरूपणादिति।

---

(१) 'धर्मवत्त्व'मिति पाठभेदः। (२) 'सन्देहो न' इति पाठभेदः। (३) 'सन्देहः' इति पाठभेदः। (४) 'स तत्र' इति पाठभेदः। (५) 'पक्षविशेष्यक-साध्यविशेष्यक' इति पाठान्तरम्। (६) 'पक्षताया अनिरूपणे पक्षधर्मताया अनिरूपणादिति' इति पाठान्तरम्।

---

(क) 'व्याप्त्यनन्तर'मित्यत्र व्याप्तिपदं व्याप्तिनिरूपणपरम्। अत्यन्ताभावादिरूपाया व्याप्तेर्ध्वंसघटितानन्तर्य्यस्यासम्भवात्। केचित्तु 'व्याप्तिनिरूपणानन्तर'मित्येव प्रकृते पठन्ति। तदनुसृत्यैव च दीधितौ 'व्याप्तीतीति-प्रकृतग्रन्थस्वरसम्बलितमूलप्रतीकधारणमुपपादयन्ति।

(ख) व्याप्तेरिव पक्षधर्मताया अपि पक्षसम्बन्धात्मिकाया विषयतया परामर्शनिष्ठहेतुतायामवच्छेदकत्वात् पक्षधर्मतायां तादृशानुकूलत्वोपपत्तिः। जगदीशस्तु पक्षधर्मतापदं पक्षतापरतया व्याख्याय कारणतावच्छेदकावृत्त्यन्यथासिद्धिचतुष्टयराहित्ये सति नियतपूर्ववर्त्तित्वरूपकारणकारणतावच्छेदकसाधारणप्रयोजकत्वलक्षणमनुकूलत्वमाह। तच्च कारणतावच्छेदकरूपायां व्याप्ताविव कारणरूपायां पक्षधर्मतायामप्यक्षतम्।

'याद्वशे'ति,—अत्र निर्णयत्वं पक्षे साध्यप्रकारकत्वे सति पक्षसाध्यवैशिष्ट्या-वगाहित्वे सति वा साध्ये पक्षनिष्ठात्यन्ताभावप्रतियोगित्वाविषयकत्वम्(ग), न तु साध्याभावाप्रकारकत्वगर्भम्, केवलान्वयिन्यप्रसिद्धेः(घ)।

तादृशनिर्णयनिवर्त्तनीयस्य(१) पक्षे साध्याभावनिर्णयस्य पक्षता(ङ)त्वाभावादाह—'संशय' इति। न च साध्याभावकोटिकसंशयस्य विवक्षितत्वे साध्ये पक्ष-

(१) 'निवर्त्यस्य' इति पाठान्तरम्।

(ग) पक्षे साध्याभावप्रकारकसंशयस्यापि तुल्यवित्तिवेद्यतया साध्ये पक्षनिष्ठात्यन्ताभावप्रतियोगित्वगोचरतया न निरुक्तनिर्णयत्वमतः संशयपदाभावे ग्राह्यसंशयस्य प्रत्यक्षनिश्चयं प्रति प्रतिबन्धकत्वमादाय न प्रत्यक्षनिश्चयेऽपि अतिव्याप्तिः।

(घ) 'केवलान्वयिनी'ति साध्य इति शेषः। 'केवलान्वयिनी'ति केवलान्वयिसाध्यकस्थले इति वा तदर्थः। 'अप्रसिद्धे'रिति साध्याभावाप्रसिद्ध्या साध्याभावाप्रकारकत्वघटितप्रकृतनिर्णयत्वस्याप्रसिद्धेरित्यर्थः। न च साध्यप्रकारतानिरूपितप्रतियोगित्वनिष्ठसांसर्गिकविषयतानिरूपिताभावनिष्ठप्रकारताशून्यत्वलक्षणसाध्याभावाप्रकारकत्वगर्भनिर्णयत्वस्य प्रकृते परिग्रहे घटाभावाद्यंशे प्रतियोगित्वसम्बन्धेन केवलान्वयिसाध्यस्य भ्रममादाय तादृशनिर्णयत्वस्य प्रसिद्धिसम्भवात् कथं निरुक्ताप्रसिद्ध्यभिधानमिति वाच्यम्; प्राचीनैः प्रतियोगितासम्बन्धेन भ्रमस्यानभ्युपगमादिति।

(ङ) न च विशिष्टबुद्धिसामान्यं प्रति बाधनिश्चयस्य प्रतिबन्धकतया तत्सत्त्वे अनुमित्यापत्तिरूपदोषासम्भवेन साध्याभावनिर्णयस्य पक्षतात्वेऽपि न क्षतिरिति वाच्यम्; तत्र पक्षताव्यवहारातिप्रसङ्गस्य तथाप्यवारणात्। यत्र निश्चयत्वेन कारणत्वं प्रतिबन्धकत्वं वा तत्र ज्ञानत्वेन, यत्र च तद्भिन्नरूपेण कारणत्वं प्रतिबन्धकत्वं वा तत्र निश्चयत्वेनाप्रामाण्यज्ञानस्योत्तेजकतया निश्चयत्वभिन्नरूपावच्छिन्नायां पक्षताहेतुतायामप्रामाण्यनिश्चयस्योत्तेजकत्वेन निश्चयत्वावच्छिन्नायां बाधनिश्चयप्रतिबन्धकतायाञ्चाप्रामाण्यज्ञानमात्रस्योत्तेजकत्वेन सन्दिग्धाप्रामाण्यकबाधनिश्चयसत्त्वे सिद्ध्यात्मकपरामर्शादनुमितिवारणाय संशयनिवेशस्य सुतरामावश्यकत्वाच्च।

न च इदानीन्तनपरामर्शादितोऽतीतानागताद्यनुमितिवारणाय तत्तदनुमितिं प्रति तत्तत्परामर्शव्यक्तेर्विशिष्य हेतुताया वक्तव्यत्वेन निरुक्तस्थलीयपरामर्शव्यक्तेः काञ्चिदप्यनुमितिं प्रति हेतुताया अकल्पनेन निरुक्तस्थले कथमनुमितिप्रसङ्ग इति वाच्यम्; यत्र प्रथमं सन्दिग्धाप्रामाण्यकबाधनिश्चयः, ततोऽपेक्षाबुद्ध्यात्मकसिद्ध्यात्मकपरामर्शः, ततः सिद्ध्यंशे परामर्शांशे च अप्रामाण्यज्ञानं, ततः साध्यसंशयः पूर्वाप्रामाण्यज्ञानधर्मिकाप्रामाण्यज्ञानञ्च ततोऽनुमितिस्तत्र तस्या अनुमितेः सिद्धिधर्मिकाप्रामाण्यज्ञानक्षणे बाधनिश्चयरूपपक्षताबलेन समुत्पादापत्तिवारणाय संशयनिवेशस्यावश्यकत्वात्, तत्र भाव्यनुमित्यर्थं तस्य परामर्शस्य तदनुमितिहेतुतायाः क्लृप्तत्वात्।

वृत्तित्वकोटिकसंशयासंग्रहः, पक्षवृत्तित्वकोटिकसंशयस्य विवक्षितत्वे साध्याभाव-कोटिकसंशयासंग्रह इति वाच्यम्; पक्षसाध्यसम्बन्धावगाहिज्ञानस्यैव प्रकृते संशयपदार्थत्वात्(१), वह्निमानिति सिद्धेर्निवर्त्यान्त(च)दलेनैव वारणादिति। केवलान्वयित्वज्ञानदशायां पक्षविशेष्यकसंशया(२)सम्भवात् साध्यविशेष्यकपक्ष-वृत्तित्वकोटिकसंशय(३) एव तथेति भावः।

'यादृशसम्बन्धेने'त्यस्य फलमाह—'न वे'ति। संयोगेन पर्वते वह्निनिश्चय(४)-सत्त्वेऽपि समवायेन तत्संशयसत्त्वात् संयोगेन तत्सिद्धौ न पक्षत्वमिति भावः।

'तमःप्रभृतिष्वि'ति,—'सन्दिग्धसाध्यधर्मा धर्मी'ति यथाश्रुतलक्षणे दूषण-मिदम्, आकाशस्य समवायेन धर्मत्वाभावात्(५)। तमःप्रभृतेश्च(६) न समवायेन धर्मित्वमिति(छ)। अत एव पक्षसमवेतत्वमाकाशे साध्ये सन्दिह्यत इति यद्युच्यते तदापि न निस्तार इति भावः। संयोगादिसम्बन्धेनाकाशस्यापि धर्मत्वात् स्वरूप-सम्बन्धेन तमःप्रभृतेरपि धर्मित्वादुक्तं 'समवायेने'ति। 'तद्वैकल्यं' पक्षतावैकल्यम्।

## तत्त्वचिन्तामणिः

नापि साधकबाधकप्रमाणाभावः, उभयाभावस्य(ज) प्रत्येकसत्त्वेऽपि सत्त्वात्। नाप्यभावद्वयं तथा, बाधकप्रमाणाभावस्य(७) व्यर्थत्वात्। ह्रदादेः पक्षत्वेऽपि बाधहेत्वसिद्ध्यादेरावश्यकत्वेनानुमित्यनुत्पादात्।

नापि साधकमानाभावः; 'श्रोतव्यो मन्तव्य' इति श्रुत्या समानविषयक-श्रवणानन्तरं मननबोधनात्, प्रत्यक्षदृष्टेऽप्यनुमानदर्शनात्, एकलिङ्गावगतेऽपि लिङ्गान्तरेण तदनुमानाच्च। मन्तव्यश्चोपपत्तिभिरिति बहुवचन(८)स्मरणात्।

(१) 'संशयत्वा'दिति पाठान्तरम्। (२) 'संशयायोगात्' इति पाठान्तरम्। (३) 'संशयस्तथेति' इति पाठान्तरम्। (४) 'वह्निनिर्णये' इति पाठान्तरम्। (५) 'आकाशस्य धर्मत्वाभावा'दिति पाठान्तरम्। (६) 'तमःप्रभृतिषु' इति पाठान्तरम्। (७) 'बाधकमानाभावस्य' इति पाठान्तरम्। (८) पुस्तकान्तरे 'बहुवचने'ति नास्ति।

(च) संशयपक्षतावादिमते तादृशसिद्धौ तादृशज्ञाननिवर्त्यत्वानङ्गीकारात्।

(छ) एतच्च प्रकृते धर्मत्वं धर्मित्वञ्च साध्यतावच्छेदकसम्बन्धेनेत्यभिसन्धाय।

(ज) उभयाभावस्येत्यादिग्रन्थस्य बाधाभावदशायां सिद्धिसत्त्वेऽपि अनुमित्यापत्ति-रूपदोषादिति भावः।

## दीधितिः

संशययोग्यतां निरस्यति 'नापी'ति। 'साधकबाधकमाने'(१) सिद्धिबाधौ। केवलान्वयिनि च पक्षनिष्ठाभावप्रतियोगित्वधीरेव सुलभो बाधः।

## दीधितिप्रकाशः

नापीत्यादेर्लक्षणान्तरपरत्वे योग्यताया मूलेऽनुक्तत्वान्न्यूनतापत्तिरत आह 'संशययोग्यता'मिति। 'निरस्यति—पक्षतात्वेने'ति शेषः। साधकमानस्यानुमानरूपस्य सत्त्वात्तदभावा(क्ष)सङ्गतेरुक्तेः सम्भवार्थमाह—'साधके'ति। 'सिद्धिबाधा'विति,—तथा च प्रत्ययार्थो(ञ) न विवक्षित इति भावः।

केवलान्वयिनि साध्याभावाप्रसिद्ध्या तन्निर्णयरूपबाधाप्रसिद्धेराह—'केवला(ट)न्वयिनी'ति।

## तत्त्वचिन्तामणिः

अथ सिषाधयिषितसाध्यधर्मा धर्मी पक्षः। तथा हि मुमुक्षोः शब्दादात्मावगमेऽपि मननस्य मोक्षोपायत्वेन सिद्धिविशेषानुमितीच्छया आत्मानुमानम्।

(१) दीधितौ 'साधकबाधकमाने' इति निर्देशः मूले 'नापि साधकबाधकप्रमाणाभाव' इत्यत्र 'नापि साधकबाधकमानाभाव' इति पाठान्तरं सूचयति।

---

(क्ष) 'सत्त्वा'दिति सर्वत्र अनुमितेः पूर्वमिति शेषः। सिद्धिबाधयोर्जनकस्य व्याप्तिज्ञान-मनोयोगादेः सर्वत्रैव अनुमितेः पूर्वं सत्त्वाद् व्याचष्टे साधकेत्यादि। तथा च साधकेन बाधकेन च जनितं यन्मानमिति मूले अन्वयः। 'स्वार्थे वा कद्वय'मिति पक्षतादीधितिव्याख्यायां जगदीशः।

(ञ) प्रत्ययार्थ इति,—साधकबाधकेतिपदद्वये कर्त्तृविहितणकप्रत्ययार्थो न विवक्षित इत्यर्थः, किन्तु साधनं साधः बाधनं बाध इत्यल्प्रत्ययान्त-साध-बाधशब्दोत्तरं कप्रत्ययेन निष्पन्नाभ्यां साधकबाधकशब्दाभ्यां सिद्धिबाधरूपप्रकृतिभूतधात्वर्थमात्रमेव विवक्षितमिति भावः।

(ट) केवलान्वयिनीत्यादि-दीधितिवाक्यान्तर्गतस्य 'सुलभ' इत्यस्य 'पर्वतो न वाच्यत्ववानित्याकारकः पटाद्यभावे प्रतियोगितासम्बन्धेन वाच्यत्वाद्यवगाह्यपि बाधः खण्डशः प्रसिद्ध्या तत्र सम्भवतीत्यावेदयितु' सुलभ इत्युक्त'मिति तात्पर्य्यमाह जगदीशः।

अत एव 'प्रत्यक्ष(ठ)परिकलितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिकाः'। 'नहि करिणि दृष्टे चीत्कारेण तमनुमिमते अनुमातारः'। इति वाचस्पतिवचनयोरविरोधः, अनुमित्सातद्विरहाभ्यां तदुपपत्तेरिति चेन्न ; सन्देहवत् परामर्शपूर्वं सिषाधयिषाया अप्यभावात्, योग्यतायाश्चानिरूपणात्, सिषाधयिषाविरहेऽपि घनगर्जितेन मेघानुमानात् स्वकारणाधीन(ड) तृतीयलिङ्गपरामर्शबलेनानपेक्षितानुमानदर्शनाच्चेति ।

## दीधितिः

ननु तत्रापि पुनरनुमित्सा ततः परामर्शान्तरम्, स्मरणात्मकाद्वा परामर्शादनुमितीष्टसाधनताविषयकादनुमित्सा, ततोऽनुमितिरिति फलबलात् कल्पनीयमित्यत आह—'सिषाधयिषे'ति ।

न च(ढ) अनुमितिजनिकेच्छैव पक्षता। सा च क्वचित् स्वनिष्ठैव, क्वचिदीश्वरनिष्ठैव सुलभेति वाच्यम् ; तस्या नित्यत्वेन सिद्धौ सत्यामपि पक्षताप्रसङ्गात् ।

---

(ठ) प्रत्यक्षेत्यादिमूलस्य प्रत्यक्षपरिकलितत्वविशिष्टविषयको योऽनुमानजन्यो बोधस्तदिच्छावन्त इत्यर्थः। तेनोपजातप्रत्यक्षविषयत्वदशायामेव अनुमितिविषयत्वलाभान्न वचनयोर्विरोधस्यासङ्गतिरिति तात्पर्यमाह जगदीशः। वचनगतविरोधश्च विरुद्धार्थप्रतिपादकत्वम् ।

ननु अनुमितीच्छाविषयत्वानुमितिविषयत्वाभावयोर्मिथो विरोधविरहेण कथं प्रकृते निरुक्तवचनयोर्विरोधसङ्गतिरिति चेन्न ; मूलधातोः कर्मत्वस्यैव सन्नन्तकर्मतात्वात प्रथमवाक्येन प्रत्यक्षविषयीभूतार्थे अनुमितिविषयत्वस्य द्वितीयवाक्येन च तत्रैवानुमितिविषयत्वाभावस्य बोधनेन प्रकृतविरोधसङ्गतेः। मथुरानाथस्तु 'बुभुत्सन्त' इत्यस्य 'जानन्ती'त्यर्थं परिकल्प्य निरायासमेव विरोधमुपपादयति स्म ।

(ड) स्वकारणेत्यादि,—स्वं तृतीयलिङ्गपरामर्शः तस्य कारणं व्याप्तिज्ञानादिकम्, तदधीनः यः तृतीयलिङ्गपरामर्शः तद्बलेन। अनपेक्षितस्य अबुभुत्सितस्य शत्रुसम्पदादेः अनुमानस्य 'शत्रुर्मे सम्पत्तिमान् विपुलमातङ्गतुरङ्गाद्युपकरणवत्त्वा'दित्यादेर्दर्शनादित्यर्थः।

(ढ) 'न चे'त्यादि-दीधितिग्रन्थ इच्छाया विषयनिष्ठप्रत्यासत्त्या अनुमितिहेतुत्वमभिसन्धाय। पुरुषान्तरीयेच्छाया अनुमितिविषयकत्वेऽपि पुरुषान्तरीयानुमितिजनकत्वा-

न च तस्यास्तदानीं न तज्जनकत्वम्, तद्धि न तद्योग्यता, अनपायात्। न च तदुपधानम्, अनुमितेः पूर्वं तदभावात्। न च तत्सामग्रीसमवधानम्, कारणमात्रस्य पक्षताकुक्षिनिक्षेपप्रसङ्गात्, शेषवैयर्थ्यात्, तदानीं सामग्रीविरह-प्रयोजकव्यतिरेकप्रतियोगिनः कारणस्य वक्तव्यत्वापाताच्च।

## दीधितिप्रकाशः

'तत्रापि' स्वानन्तरव्याप्तिस्मरणादिनाश्य-सिषाधयिषास्थलेऽपि। 'परामर्शा-न्तर'मिति,—पूर्वपरामर्शस्यानुमित्सोत्पादकानुमितीष्टसाधनताज्ञानादेव नाशादिति भावः।

परामर्शान्तरास्वीकारेऽप्युपपत्तिमाह—'स्मरणे'ति(ण)। वह्निव्याप्यधूमवान् पर्वतो वह्न्यनुमितिरिष्टसाधनमिति ज्ञानादनुमित्सेत्यर्थः। न चेदानी(त)मनुमित्या-पत्तिः, अनुमित्साघटितपक्षताया अभावात्। सिद्धान्तिमतेऽपि पूर्वं सिद्धिसम्भवा-दिच्छासामग्र्या बलवत्त्वाद्वा तदभावोपपत्तेरिति।

'फलबला'दिति-यत्र नैतादृशक्रमेणानुमित्सानुत्पादस्तत्र फलाभावोऽपि कल्पनीय इति भावः। 'स्वनिष्ठे'ति—'स्व'मनुमाता। 'तस्याः' ईश्वरेच्छायाः। 'तदानीम्' सिद्धिकाले। 'तज्जनकत्वम्' अनुमितिजनकत्वम्। तथा चानुमितिजनकत्व-विशिष्टेच्छा न तदेत्यर्थः। 'तद्धि' अनुमितिजनकत्वं हि। 'अनपाया'दिति,—सिद्धि-कालेऽपि तदिच्छायाः स्वरूपयोग्यतासत्त्वादित्यर्थः। 'तदुपधानम्' अनुमित्युपधानम्। 'अनुमिते'रिति;—तथा च कुत्राप्यनुमितिर्न स्यात्, अनुमित्युपहितत्वविशिष्टेच्छाया

---

भावान्नातिप्रसङ्गः। अत एव अनुमितिविषयकत्वमपहाय इच्छाया नुमितिजनकत्वं विशेषणमुपात्तम्। तथा च तत्पुरुषीयतत्पक्षकतत्साध्यकानुमितौ तत्पुरुषीयतत्पक्षकतत्-साध्यकानुमितिजनिकेच्छैव पक्षता। एतन्मते विषयतैव कार्य्यतावच्छेदकः कारणतावच्छेदकश्च सम्बन्धः। वस्तुतस्तु इच्छानिष्ठविषयितासम्बन्धेन तत्पुरुषीयतत्पक्षकतत्साध्यकानुमितौ तत्पुरुषीयतत्पक्षकतत्साध्यकानुमितिजनिकेच्छा तादात्म्येन सम्बन्धेन कारणम्।

(ण) विशिष्टानुभवं प्रति विशेषणज्ञानस्य हेतुतया स्मरणात्मकपरामर्शकल्पे विशेषण-ज्ञानकल्पनगौरवमपि नास्तीत्यनुसन्धेयम्।

(त) 'इदानी'मिति अनुमित्साया उत्पत्तिकाल इत्यर्थः।

अनुमितिप्राक्कालेऽभावात्। कारणतावच्छेदकावलीढपूर्ववृत्तित्वस्य कार्य्योत्पादकतामते(थ) तु सिद्धौ सत्यामनुमितिप्रसङ्गस्तदवस्थ(द) एवेति भावः।

'तत्सामग्रीसमवधानम्' अनुमितिसामग्रीसमवधानम् अनुमितिजनकत्वं नेत्यर्थः। 'कारणमात्रस्ये'ति,—मात्रपदं कृत्स्नार्थकम्। तथा च पक्षतामात्रस्यैव कारणत्वं स्यादित्येककारणपरिशेषापत्तिरिति भावः।

ननु परामर्शत्वादिनान्वयव्यतिरेकानु(१)विधानात्तेन रूपेण तेषां हेतुत्वमशक्यापह्नवमित्यत आह—'शेषे'ति। अनुमितिसामग्रीसमवहिता(२) इच्छा पक्षतेत्यत्र अनुमितिसामग्र्यतिरिक्तस्येच्छाभागस्य वैयर्थ्यादित्यर्थः(ध)।

ननु अनुमितिसामग्रीविशिष्टेच्छा पक्षता, जनकत्वन्तु अनुमितिसामग्र्यास्तत्तद्रूपेण, इच्छाया अनुमित्सात्वेनेति। सिद्धिकाले तु अनुमितिसामग्र्या अभावादेव नानुमितिरत आह—'तदानी'मिति। 'तदानीं' सिद्धिकाले। परामर्शादिरूपकारणस्य नित्येच्छारूपपक्षतायाश्च सत्त्वे अनुमितिसामग्र्यभावो यदभावात्, स एव तत्र हेतुरस्तु, किमुक्तपक्षतयेत्यर्थः। 'वक्ष्य'इति, तच्च कारणं सिषाधयिषाविरहविशिष्टसिद्ध्यभावरूपमन्वयव्यतिरेकबलादिति भावः।

(१) 'परामर्शाद्यनुविधानात्' इति पाठान्तरम्। (२) 'सहिता' इति पाठान्तरम्।

(थ) अत्र—'तु' शब्देन प्रकृतमतस्यास्वरसः सूच्यते। तथा हि कारणतावच्छेदकावलीढपूर्ववृत्तित्वस्य कारणतावच्छेदकोपलक्षितपूर्ववर्तित्वस्वरूपस्य कार्य्योत्पादकत्वे अप्रामाण्यज्ञानाद्यास्कन्दितपरामर्शादेरपि कदाचिदप्रामाण्यज्ञानाभावाद्युपलक्षिततया ततोऽप्यनुमित्युत्पत्त्यादिप्रसङ्गः।

(द) 'तदवस्थ' इति—सिद्धिदशायामपि अनुमित्युपहितत्वोपलक्षितेच्छाया वर्त्तमानत्वादिति तात्पर्य्यम्।

(ध) प्रकृतानुमितिसामग्रीविशिष्टत्वेन हेतुत्वोक्त्यैव दोषास्पर्शादिति भावः। न च तादृशसामग्रीत्वेनैव कारणत्वमस्तु, किं विशिष्टत्वपर्य्यन्तानुसरणेनेति वाच्यम्, एकैककारणविशिष्टापरापर-कारणानामेव सामग्रीत्वेन तेन रूपेण कारणतायां विनिगमनाविरहप्रयुक्तकारणताबाहुल्यप्रसङ्गात्। स्वमते तु सामग्र्यात्मकतावत्कारणानामेकत्र द्वयं-रीत्या विशेषणतया न तथात्वमिति भावः।

## तत्त्वचिन्तामणिः

उच्यते ;—सिषाधयिषाविरहसहकृतसाधकप्रमाणाभावो यत्रास्ति, स पक्षः। तेन सिषाधयिषाविरहसहकृतं साधकमानं(१) यत्रास्ति, स न पक्षः। यत्र साधकमाने(२) सत्यसति वा सिषाधयिषा, यत्र वा उभयाभावः, तत्र विशिष्टाभावात् पक्षत्वम्। यद्यपि पक्षत्वस्य केवलान्वयित्वान्नास्य भेदकत्वम्, तथापि पक्षपदप्रवृत्तिनिमित्तमुक्तम्।

## दीधितिः

सिषाधयिषेति,—यत्र अनुमित्सानन्तरं साध्यतद्व्याप्यविशिष्टपक्षस्मरणम्, अनुमितीच्छसाधनताविषयकतादृशस्मरणाद्वा अनुमित्सा, अनुमित्सापूर्वकालोत्पन्नविशेषणस्मरणाद्वा अनुमित्साकालोत्पन्नेन्द्रियसन्निकर्षसहितात् साध्यतद्व्याप्यविशिष्टपक्षप्रत्यक्षं, तदनन्तरं च अनुमितिः, तत्र पक्षतासम्पत्तये सहकृतान्तं साधकमानविशेषणम्।

## दीधितिप्रकाशः

परामर्शरूपकारणसत्त्वे सिद्धिरूपविरोधिसत्त्वे यद्यनुमित्सा स्यात्, तदा तस्या उत्तेजकत्वं सम्भाव्येत, न चैतत् सम्भवति योग्यविभुविशेषगुणत्रयस्य युगपद(न)वस्थानस्यासम्भवादित्यतस्तादृशस्थलमुदाहरति 'यत्रे'त्यादिना।

साध्यनिर्णयसामान्येच्छानन्तरं तादृशस्मरणे तादृशेच्छायाः स्वविषयसिद्ध्युपहितत्वेन नोत्तेजकत्वं(प) स्यादत उक्तमनुमित्से'ति।

अनुमित्सानन्तरं पर्वतो(३) वह्निव्याप्यधूमवान् पर्वतो वह्निमानिति स्मरणं यत्रेत्यर्थः। अनुमितिरिच्छसाधनं वह्निव्याप्यधूमवान् पर्वतो वह्निमानिति स्मरणानन्तरं

(१) 'प्रमाणम्' इति पाठान्तरम्। (२) 'प्रमाणे' इति पाठान्तरम्। (३) पुस्तकान्तरे 'पर्वत' इत्ययमंशो नास्ति।

(न) योग्यविभुविशेषगुणानां स्वोत्तरोत्पन्नविशेषगुणनाश्यत्वनियमादिति भावः। एतच्च अपेक्षाबुद्धिस्थलमपहाय बोध्यम्।

(प) 'स्वविषये'त्यादि—अग्रे सिषाधयिषायां स्वविषयसिद्ध्यनुपहितत्वविशेषणस्य दोषनिरासाय वक्तव्यत्वादिति भावः।

यत्रानुमित्सा तत्रापि तत्प्रयोजनमाह 'अनुमिती'ति। स्मरणात् पूर्वमनुमितीष्ट-साधनताधीसत्त्वे इच्छासामग्र्या(१) बलवत्त्वात् स्मरणमेव न स्यादतोऽनुमितीष्ट-साधनताविषयकत्वपर्य्यन्तानुधावनम्।

'तादृशस्मरणात्' तत्साध्यतद्व्याप्यविशिष्टपक्षस्मरणात्। स्मरणात्मक-सिद्धिपरामर्शस्थले सहकृतान्तस्य(२) प्रयोजनमुक्त्वा प्रत्यक्षात्मक-सिद्धिपरामर्शस्थले तदाह—'अनुमित्सापूर्वे'ति। अनुमित्सापूर्वकाले विनश्यदवस्थस्य विशेषणज्ञानस्य नानुमित्सोत्तरपरामर्शे उपयोगित्वमत 'उत्पन्ने'ति। 'विशेषणे'ति,—परामर्शसिद्धि-विशेषणेत्यर्थः। लौकिकत्वसम्पादनायाह—'अनुमित्साकालोत्पन्ने'ति। अनु-मित्सापूर्वकाले इन्द्रियसन्निकर्षोत्पादे प्रत्यक्षसामग्रीप्रतिबन्धादनुमित्सैव न स्यादतो निर्विवादस्थलाभिप्रायेणोक्तम् 'अनुमित्साकालोत्पन्ने'ति। 'तदनन्तरञ्चानुमिति'-रिति साध्यतद्व्याप्यविशिष्टपक्षस्मरणमित्यादिप्रथमान्तत्रिकेणान्वेति(३)।

## दीधितिः

सिषाधयिषा च तत्साध्यविशिष्टतत्पक्षविषयकत्वप्रकारिकानुमितिविष-यिणीच्छा। यत्किञ्चिद्गोचरं ज्ञानं जायतामितीच्छायामपि सिद्धिसत्त्वे अनुमित्यनुत्-पादात् अनुमितित्वाप्रकारिकायामपि प्रत्यक्षाद्यतिरिक्तं पर्वते वह्निज्ञानं जायतामिती-च्छायां प्रत्यक्षाद्यनन्तरमनुमित्युत्पादाच्च।

## दीधितिप्रकाशः

सिद्धिमात्रगोचरेच्छाया एव सिषाधयिषात्वे पर्वते वह्निशाब्दं जायतां, यत्किञ्चिदनुमितिर्वा जायतामित्याकारकेच्छासत्त्वे सिद्धिसत्त्वे पक्षताप्रसङ्ग इत्यत आह—'सिषाधयिषा चे'ति। 'तत्साध्ये'ति(४) तत्साध्यतावच्छेदकावच्छिन्नसाध्य-विशिष्टतत्पक्षतावच्छेदकावच्छिन्नपक्षविषयकत्वप्रकारिकेत्यर्थः। तेन(फ) तेजो-

(१) 'सामग्रीबलवत्त्वात्' इति पाठान्तरम्। (२) पुस्तकविशेषे 'सहकृतान्तस्य' इति पाठो नास्ति। (३) 'त्रिक एवान्वेति' इति पाठान्तरम्। (४) पुस्तकविशेषे 'तत्साध्येति' इति—ग्रन्थप्रतीकधारणं नास्ति।

(फ) 'तेने'ति—साध्यतावच्छेदक—पक्षतावच्छेदकयोर्विशिष्य इच्छागर्भे निवेशेनेत्यर्थः।

विशिष्टपर्वतानुमितिर्जायतां, वह्निविशिष्टपाषाणमय्यनुमितिर्जायतामित्येवमाकारिकाया व्युदासः। 'तत्साध्यविशिष्टतत्पक्ष'त्यत्र वैशिष्ट्यं वैज्ञानिकं(ब), तेन न भ्रमानुमितौ पक्षताक्षतिः।

'तत्पक्षविषयत्वे'त्यन्तस्य प्रयोजनमाह—'यत्किञ्चि'दिति। 'ज्ञान'मिति—एतदुत्तरकालीनज्ञानमित्यर्थः। अन्यथा(१)यत्किञ्चिद्गोचरज्ञानस्य नियमतः सिद्धतया तेन रूपेणेच्छाया असम्भवात्। न च यत्किञ्चिद्गोचरज्ञानस्य सिद्धत्वेऽपि तत्सिद्धत्वाग्रहदशायामुक्तेच्छासम्भव इति वाच्यम्; ज्ञानादिस्थले स्वरूपसत्सिद्धत्वस्यैव प्रतिबन्धकत्वकल्पनादिति।

अनुमितित्वप्रकारकत्वं विहाय अनुमितिविषयत्वपर्य्यन्तानुधावने वीजमाह—'अनुमितित्वाप्रकारिकायामपी'ति। 'प्रत्यक्षाद्यतिरिक्त'मिति,—आदिना शाब्दोपमित्योः परिग्रहः। 'प्रत्यक्षाद्यनन्तर'मिति,—प्रत्यक्षसत्त्वे शाब्दादिसामग्र्यभावकाले प्रत्यक्षभिन्नं पर्वते वह्निज्ञानं जायतामितीच्छासत्त्वे अनुमित्युत्पादात्। एवं शाब्दादि(भ)स्थलेऽपि ऊह्यम्।

न च यत्र शाब्दसामग्र्यां सत्यां प्रत्यक्षभिन्नं पर्वते वह्निज्ञानं जायतामितीच्छा, तत्रानुमित्यापत्तिः। तत्र तादृशेच्छायाः शाब्द(म)विषयत्वेनानुमितिविषयत्वा-

(१) पुस्तकविशेषे 'अन्यथा' इति पाठो नास्ति।

(ब) वैज्ञानिकं वैशिष्ट्यञ्च प्रकृते तत्साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपिततत्पक्षतावच्छेदकावच्छिन्नविशेष्यतावत्त्वम्। 'तेने'ति वैज्ञानिकवैशिष्ट्येन प्रकृतेन। 'भ्रमानुमितौ' ह्रदो वह्निमानित्यादौ। 'न पक्षताक्षति'रिति—पक्षे ह्रदादौ वास्तविकवह्न्यादिरूपसाध्यवैशिष्ट्यविरहेऽपि वह्नित्वादिरूपप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपित-ह्रदत्वादिरूपप्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतावत्त्वस्य तत्र निर्बाधतया तत्र पक्षताया अनुपपत्त्यभावादिति भावः।

(भ) 'एवं शाब्दादिस्थलेऽपि ऊह्य'मिति—तथा हि शाब्दसिद्धिसत्त्वे प्रत्यक्षादिसामग्र्यभावदशायां शाब्दभिन्नं पर्वते वह्निज्ञानं जायतामितीच्छासत्त्वे, तथा उपमित्यात्मकसिद्धिसत्त्वे प्रत्यक्षादिसामग्र्यभावकाले उपमितिभिन्नं पर्वते वह्निज्ञानं जायतामितीच्छासत्त्वे अनुमित्युत्पादादित्यूहनीयमित्यर्थः।

(म) 'शाब्दविषयत्वेन' शाब्दमात्रविषयत्वकल्पनेन।

भावात्। यद्वा तदानीं पक्षतासत्त्वेऽपि अनुमितित्वप्रकारकतादृशेच्छाविरहविशिष्ट-समानविषयकशाब्दसामग्र्याः पृथक् प्रतिबन्धकत्वादेव तदानीं नानुमितिरिति।

## दीधितिः

यादृशयादृशेच्छासत्त्वे सिद्धौ सत्यामनुमितिः, तत्त(१)दिच्छाभावसमुदायस्य विशेषणत्वादिच्छाया अननुगमेऽपि न क्षतिः।

## दीधितिप्रकाशः

ननु यत्र पर्वते वह्निप्रत्यक्षं तद्व्याप्यपरामर्शश्च समूहा(य)लम्बनात्मा, विषयान्तरे(र) चानुमितिसामग्र्यभावः, तत्र यत्किञ्चिद्गोचरानुमितिर्जायता-मितीच्छासत्त्वेऽपि पर्वते वह्न्यनुमितिरनुभवसिद्धा, तत्र च तत्साध्यविशिष्ट-तत्पक्षविषयत्वप्रकारकानुमित्साविरहविशिष्टसिद्धिसत्त्वात् पक्षताभङ्गः।

एवमुक्तसमूहालम्बनकाले यत्र शाब्दादि(ल)सामग्र्यभावस्तत्र प्रत्यक्षभिन्नं ज्ञानं जायतामितीच्छायामप्यनुमितिदर्शनात् तत्र(२) पक्षताभङ्गः। एवमनुमितित्व-प्रकारकत्वानिवेशे यत्र वह्निविशिष्टपर्वतविषयकप्रत्यक्षत्वरूपेण अनुमितावेव इच्छा जाता, तत्र पक्षतापरिचयतोऽनुमितित्वप्रकारकत्वपर्य्यन्तानुधावन(३)स्यावश्यकत्वात् कथं प्रत्यक्षादिभिन्नं पर्वते वह्निज्ञानं जायतामितीच्छासाधारण्यमित्यत आह—

(१) 'तावदिच्छाभावसमुदायस्य' इति पाठान्तरम्। (२) पुस्तकविशेषे 'तत्र' इति नास्ति। (३) 'पर्य्यन्तस्यावश्यकत्वे' इति क्वाचित्कः पाठः।

(य) 'समूहालम्बनात्मे'ति—क्रमिकत्वेन वह्निप्रत्यक्षतद्व्याप्यपरामर्शयोरुपादाने वह्नि-प्रत्यक्षतृतीयक्षणोत्पन्नानुमित्सोत्पत्तिकाले वह्निप्रत्यक्षात्मकसिद्ध्युपरमेण न प्रकृतपक्षताभङ्गप्रसङ्ग इति समूहालम्बनत्वेनोपादानम्।

(र) निरुक्तस्थले वह्निभिन्नघटादेरनुमितिसामग्रीसत्त्वे निरुक्तवह्निसिद्ध्यनिवर्त्त्यघटाद्यनु-मित्यैव प्रकृतेच्छाया विषयसिद्धिसम्भवेन न वह्न्यनुमितिरनुभवसिद्धेति विषयान्तरे अनुमिति-सामग्र्यभावानुसरणम्।

(ल) निरुक्तस्थले शाब्दादिसामग्रीसत्त्वे शाब्दादिज्ञानमेव जायते नानुमितिरिति शाब्दादिसामग्र्यभावानुसरणम्।

'यादृशे'ति। तथा च तत्साध्यविशिष्टतत्पक्षविषयत्वप्रकारकानुमितित्वप्रकारकेच्छाया अन्यादृश्या अपि अनतिप्रसक्ताया अनुगत(१)रूपेणैव निवेशः। अत एव 'धूमेने'त्यादि वक्ष्यति। अन्यथेच्छासामान्यस्यैव तत्तद्व्यक्तित्वेन निवेशे भिन्नलिङ्गकेच्छाव्यक्तेरनिवेशादेव तत्र पक्षताविरहे तत्प्रतिबन्धकत्वकल्पनं विशेषणान्तरदानं वा निष्प्रयोजनं स्यादिति।

यत्किञ्चिद्गोचरानुमितिर्जायतामित्या(२)कारिकायास्तु तत्तद्व्यक्तित्वेनैव निवेशः, विषयान्तरे अनुमितिसामग्रीसत्त्वे तादृशेच्छाया उत्तेजकत्वाभावादिति।

लौकिकप्रत्यक्षसामग्रीविरहकाले सिद्धेरसत्त्वे पर्वते वह्निप्रत्यक्षं जायतामितीच्छासत्त्वेऽपि अनुमितिदर्शनात् सिद्धिसत्त्वे च तदिच्छासत्त्वप्रयुक्तपक्षतावारणायोक्तं 'सिद्धौ सत्या'मिति। सिद्धौ सत्यां तादृशेच्छासत्त्वे अनुमित्यभावात् तदिच्छा न पक्षताप्रयोजिकेति भावः।

'अननुगमेऽपी'ति, — अनुमितित्वप्रकारकप्रत्यक्षादिभिन्नज्ञानत्वप्रकारिकाणामिच्छानामननुगमेऽपीत्यर्थः।

## दीधितिः

धूमेन अनुमिनुयामितीच्छायामालोकपरामर्शादसत्यामपि सिद्धौ यदि नानुमितिः, तदा अन्यमात्रलिङ्ग(३)कानुमितीच्छा कामिनीजिज्ञासादिवत् पृथक् प्रतिबन्धिका।

## दीधितिप्रकाशः

'असत्यामपी'ति,—सिद्धौ सत्यामावश्यकप्रतिबन्धकताकतया तस्या(व) एव विलक्षणरूपेण प्रतिबन्धकता स्यान्न तादृशेच्छाया इति शङ्का स्यादिति भावः। अपिना सिद्धिसत्त्वे तादृशेच्छातः सर्वथैव नानुमितिरिति सूचितम्। 'अन्यमात्र-

(१) 'अनुगतेन' इति पाठान्तरम्। (२) 'मितीच्छायास्तु' इति पाठान्तरम्। (३) 'अन्यमात्रलिङ्गकसिद्धेरिच्छा' इति पाठान्तरम्।

(व) 'तस्या एवे'ति तदानीन्तनसिद्धेरेव। 'विलक्षणरूपेण' तल्लिङ्गकानुमित्साविरहविशिष्टसिद्धित्वरूपेण।

लिङ्गके'ति,—परामृश्य(श)मानान्यमात्रलिङ्गकेत्यर्थः। मात्रपदमुभयलिङ्गके(ष)च्छाया अनुकूलत्वेन तद्वारणाय।

## दीधितिः

यदि च तत्रानुमितिस्तदा सिद्धिसत्त्वे तत्रानुमितेर्वारणाय तल्लिङ्गकानुमितीच्छा तदन्यमात्रलिङ्गकानुमितीच्छातिरिक्तानुमितीच्छा वा वाच्या।

## दीधितिप्रकाशः

'यदि चे'ति,- तथा च तस्याः(स) पृथक्(१) प्रतिबन्धकत्वं नास्तीति भावः। उत्तेजकत्वन्तु सर्वथैव न तस्या इत्यभिप्रायेणाह(२)—'तल्लिङ्गके'ति। तल्लिङ्गकानुमितित्वप्रकारकेच्छेत्यर्थः। अन्यथा तल्लिङ्गकानुमितावेव तदन्यलिङ्गकानुमितित्वप्रकारकेच्छाया अपि उत्तेजकत्वापत्तेरिति। लिङ्गोदा(ह)सीनायाः पर्वते वह्न्यनुमितिर्जायतामितीच्छाया असंग्रहापत्तेराह—'तदन्यमात्रे'ति। तथा च तदन्यमात्रलिङ्गिका या अनुमितिस्सा(३) तदभिन्ना(४) लिङ्गोदासीना इच्छापीति तस्या नासंग्रह इति भावः।

---

(१) पुस्तकविशेषे 'पृथक्' इति पाठो नास्ति। (२) 'प्रायेणाह' इत्यनन्तरं 'तदेति' इत्यतिरिक्तः क्वचित् पाठः। (३) 'अनुमितीच्छा' इति पाठान्तरम्। (४) 'तदन्या लिङ्गोदासीना अनुमितिस्सापीति न तस्या असंग्रह' इति पाठान्तरम्।

(श) यत्र आलोकमात्रलिङ्गकानुमितिस्सा धूमालोकोभयलिङ्गकपरामर्शश्च क्रमेण जातौ, तत्र धूमान्यमात्रलिङ्गकतदनुमितिस्सायाः धूमलिङ्गकतत्रत्यानुमितिप्रतिबन्धकत्वापत्तिवारणाय धूमाद्यन्यमात्रलिङ्गकत्वमपहाय परामृश्यमानान्यमात्रलिङ्गकत्वमिच्छाविशेषणमुपात्तम्। तेन धूमवत् आलोकस्यापि तत्र परामृश्यमानत्वेन तत्रत्यालोकमात्रलिङ्गकानुमितिस्सायाः धूमान्यमात्रलिङ्गकानुमितिस्सात्वेऽपि न परामृश्यमानान्यमात्रलिङ्गकानुमितिस्सात्वमिति ध्येयम्।

(ष) 'उभयलिङ्गकेच्छाया' इति—धूमेन आलोकेन वा वह्न्यनुमितिर्जायतामित्यादिलिङ्गविकल्पविषयिण्या इच्छायाः, न तु धूमेन आलोकेन च वह्न्यनुमितिर्जायतामित्यादिलिङ्गसमुच्चयविषयिण्या इच्छाया इत्यर्थः। धूममात्रपरामर्शदशायां तादृशलिङ्गविकल्पविषयकेच्छासत्त्वे अनुमितेरनुभवसिद्धत्वात् तादृशलिङ्गसमुच्चयविषयकेच्छासत्त्वे चानुभवविरुद्धत्वादिति वदन्ति।

(स) 'तस्या' इति सिद्धयसमानकालीनाया अन्यमात्रलिङ्गकानुमितीच्छाया इत्यर्थः

(ह) 'लिङ्गोदासीनाया' इति किञ्चिल्लिङ्गकत्वानवगाहिन्या इत्यर्थः।

धूमेन वह्निमनुमिनुयामालोकेन वह्निमनुमिनुयामित्याकारक—समूहालम्बनेच्छासंग्रहाय 'मात्रे'ति। तल्लिङ्गतावच्छेदकावच्छिन्नलिङ्गकत्वा(१)प्रकारकत्वे सति या तदन्यलिङ्गतावच्छेदकावच्छिन्नलिङ्गकत्वप्रकारिका, या च तद्विशिष्टलिङ्गकत्वाप्रकारकत्वे सति तद्विरुद्धधर्मविशिष्टलिङ्गकत्वप्रकारिकेच्छा, तदुभयान्यानुमित्सेत्यर्थः। तेन यत्र धूमत्वावच्छेदेनैव व्याप्यत्वपरामर्शो, न तु द्रव्यत्वावच्छेदेन, तत्र द्रव्यत्वावच्छिन्नलिङ्गकवह्न्यनुमित्साया अपि अनुत्तेज(२)कत्वात् तस्या अपि वारणम्(क)। यत्र च द्रव्यत्वस्य लिङ्गतावच्छेदकत्वानुल्लेखिनी द्रव्येण वह्निमनुमिनुयामितीच्छा तस्याः संग्रहः(ख)। न वा यत्र आलोकत्वस्य अवच्छेदकत्वानवगाहिनी आलोकेन वह्निमनुमिनुयामितीच्छा, तस्याश्च संग्रहः।

यदि च धूमेनालोकेन च वह्निमनुमिनुयामितीच्छा(३) न धूम(ग)लिङ्गकानुमितौ उत्तेजिका, तदा तल्लिङ्गतावच्छेदकावच्छिन्नलिङ्गकानुमितित्वावच्छिन्नानुद्देश्यकत्वे सतीति वक्तव्यम्। धूमेन आलोकेन च वह्न्यनुमितिर्जायतामितीच्छायान्तु धूमलिङ्गकत्वे सति आलोकलिङ्गकानुमितित्वमुद्देश्यतावच्छेदकं, न तु धूमलिङ्गकानुमितित्वमिति(घ) तद्व्युदासः।

(१) 'तल्लिङ्गकत्वे'ति पाठान्तरम्। (२) 'विरोधित्वात्' इति पाठान्तरम्। (३) 'मितीच्छापि' इति पाठान्तरम्।

(क) निरुक्तानुमित्साया धूमत्वावच्छिन्नलिङ्गकत्वाप्रकारकत्वे सति धूमत्वभिन्नद्रव्यत्वावच्छिन्नलिङ्गकत्वप्रकारकत्ववत्त्वेन प्रथमोक्तानुमित्सारूपत्वान्निरुक्तोभयान्यत्वाभावात्।

(ख) निरुक्तेच्छाया धूमत्वविरुद्धालोकत्वादिधर्मविशिष्टालोकादिलिङ्गकत्वप्रकारकत्वेऽपि धूमत्वरूपलिङ्गतावच्छेदकविशिष्टो यो धूमस्तल्लिङ्गकत्वप्रकारकत्वेन सत्यन्तदलविरहाद् द्वितीयप्रकारेच्छाभिन्नत्वस्य किञ्चिद्धर्मावच्छिन्नलिङ्गकत्वाप्रकारकत्वाच्च प्रथमप्रकारेच्छाभिन्नत्वस्य सत्त्वादुभयान्यानुमित्सात्वात्। उभयान्यत्वं हि प्रकृते न उभयत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वम्, किन्तु प्रत्येकप्रतियोगिकभेदद्वयवत्त्वम्। अन्यथा प्रकृतस्थले वारणीयाया द्रव्यत्वावच्छिन्नलिङ्गकवह्न्यनुमित्साया, आलोकत्वस्यावच्छेदकत्वानवगाहिन्या आलोकेन वह्निमनुमिनुयामितीच्छायाश्च तत्र तत्र वारयितुमशक्यत्वात्।

(ग) 'धूमलिङ्गकानुमिताविति—धूममात्रलिङ्गकानुमितावित्यर्थः।

(घ) 'उद्देश्यतावच्छेदक'मिति उद्देश्यतावच्छेदकतापर्याप्त्यधिकरणमित्यर्थः। 'धूमलिङ्गकानुमितित्व'मिति केवलधूमलिङ्गकानुमितित्वमित्यर्थः।

यदि च द्रव्येण वह्निमनुमिनुयाम् आलोकेन वा वह्निमनुमिनुयामितीच्छा धूमलिङ्गकानुमितावुत्तेजिका तदा तल्लिङ्गतावच्छेदकाविरुद्धधर्मविशिष्टलिङ्गकानुमितित्वावच्छिन्नानुद्देश्यकत्वे सतीति द्वितीयसत्यन्तेन विशेषणीयम्(१)। सर्वत्र विरुद्धत्वमविरुद्धत्वञ्च वैज्ञानिकं(ङ) बोध्यम्(२)। तेन द्रव्यत्वादेर्धूमत्वविरुद्धत्वभ्रमदशायां द्रव्येण वह्निमनुमिनुयामितीच्छाया अपि उत्तेजकत्वा(३)भावात्तत्संग्रहः।

वह्निव्याप्यधूमवान् पर्वत इति परामर्शसत्त्वे सिद्धिसत्त्वे महानसीयधूमेन वह्न्यनुमितिर्जायतामितीच्छापि यदि नोत्तेजिका तदा तत्पर्वतीयधूमत्वविरुद्धधर्मविशिष्टलिङ्गकानुमितित्वप्रकारिका या तदन्यत्वं(४)विवक्षणीयम्।

एवं पूर्वकालीनपर्वतीयधूमेन वह्न्यनुमितिर्जायतामितीच्छाया यदि नैतत्कालीनधूमपरामर्शादनुमितिः, तदा एतत्कालीनधूमलिङ्गकानुमितिं प्रत्येतत्कालीनधूमलिङ्गकत्वावच्छिन्नानुद्देश्यकत्वे सति एतत्कालीनधूमत्वविरुद्धधर्मविशिष्टलिङ्गकानुमितित्वप्रकारिका या तदन्यत्वं ग्राह्यम्। एवं प्रतिपदव्यावृत्तिरपि बोध्या।

## दीधितिः

लिङ्गविशेषणापि च नियन्त्रितं पक्षत्वम्। तल्लिङ्गकानुमितौ सिद्धिकालीना तल्लिङ्गकानुमितीच्छाविरहविशिष्टान्यलिङ्गकानुमितीच्छैव वा प्रतिबन्धिका।

## दीधितिप्रकाशः

नन्वेवं धूमलिङ्गकानुमितित्वावच्छिन्नानुद्देश्यकत्वे सति या धूमत्वभिन्नधर्मावच्छिन्नलिङ्गकानुमितित्वप्रकारिका, या(५) च तल्लिङ्गतावच्छेदकाविरुद्धधर्मविशिष्ट-

---

(१) 'विवक्षणीय'मिति पाठान्तरम्। (२) ग्रन्थविशेषे 'बोध्यम्' इति नास्ति। (३) 'अनुत्तेजकत्वात्' इति पाठान्तरम्। (४) 'या इच्छा तदन्या इच्छा विवक्षणीया' इति पाठान्तरम्। (५) 'या च धूमत्वविरुद्धधर्मविशिष्टलिङ्गकत्वप्रकारिका तदुभयभिन्ना' इति पाठभेदः।

(ङ) वैज्ञानिकं विरुद्धत्वं विरुद्धत्वप्रकारकज्ञानविषयत्वम्। तेन द्रव्यत्वे वास्तविकधूमत्वविरुद्धत्वविरहेऽपि धूमत्वविरुद्धत्वभ्रमरूपविरुद्धत्वप्रकारकज्ञानस्य विषयत्वमादाय प्रकृतं वैज्ञानिकं विरुद्धत्वमुपपन्नमेवेति भावः।

लिङ्गकानुमितित्वावच्छिन्नानुद्देश्यकत्वे सति धूमत्वविरुद्धधर्मविशिष्टलिङ्गकत्व-प्रकारिका, तदुभयभिन्ना(च) या पर्वते वह्न्यनुमितीच्छा तदभावविशिष्टसिद्ध्यभावः पर्वतो वह्निमानित्यनुमितौ पक्षतेत्यागतम्। तथा च सिद्धिसत्त्वे आलोकेन वह्नि-मनुमिनुयामितीच्छासत्त्वे आलोकपरामर्शादप्यनुमितिर्न स्यात् निरुक्तपक्षताया(१) अभावादत(छ) आह—'लिङ्गविशेषेणापी'ति। तथा च धूमलिङ्गकानुमितौ सा पक्षता, आलोकलिङ्गकानुमितौ तु धूमपदस्थले(२) आलोकपदं निक्षिप्य(३) विशेष्य(४) पक्षताया हेतुत्वं बोध्यमिति(ज)। अपिना पक्षभेदादिपरिग्रहः।

ननु तल्लिङ्गकानुमितौ तदन्यमात्रलिङ्गकानु(५)मितीच्छान्यानुमितीच्छाविरह-विशिष्टसिद्ध्यभावत्वेन हेतुत्वापेक्षया लाघवात्(६) सिद्धिविशिष्टतदन्यमात्रलिङ्गकानु-मितीच्छाविरहत्वेन हेतुत्वं युक्तम्। न च तत्रापि सामान्यतस्तत्पक्षकतत्साध्यका-नुमितित्वावच्छिन्नं प्रति(७) तत्पक्षकतत्साध्यकपक्षतात्वेन कारणत्वान्तर(झ)कल्पने गौरवम्। लिङ्गभेदेनानन्तकार्य्यकारणभावेषु उत्तेजिकास्वनन्तास्विच्छासु तादृशे च्छान्यत्वस्य(८) विशेषणत्वापेक्षया सर्वसाधारणस्यैकस्य कार्य्यकारणभावस्यैव कल्पने लाघवादित्याशयेनाह—'तल्लिङ्गकानुमिता'विति।

(१) 'पक्षत्वाभावादत'इति पाठान्तरम्। (२) 'धूमपदस्थाने' इति पाठान्तरम्। (३) 'प्रक्षिप्य' इति पाठान्तरम्। (४) ग्रन्थविशेषे 'विशेष्य' इति नास्ति। (५) 'तदन्यमात्रलिङ्गकानुमितीच्छाभिन्नेच्छा' इति पाठान्तरम्। (६) 'लाघवेन' इति पाठान्तरम्। (७) ग्रन्थविशेषे 'तत्पक्षकतत्साध्यकानुमितित्वावच्छिन्नं प्रति' इति पाठो नास्ति। (८) उत्तेजकानन्तानुमित्सान्यत्वस्य' इति पाठान्तरम्।

(च) 'तदुभयभिन्ने'ति—अत्रापि पूर्ववत् तत्तद्रूपावच्छिन्नभेदद्वयवतीति तदर्थः, न तु तदुभयत्वावच्छिन्नभेदवतीत्यर्थः; व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदस्य प्रत्येकमपि सत्त्वेनातिप्रसङ्गापातात्।

(छ) उक्तरूपेच्छायाः प्रथमोक्तेच्छास्वरूपत्वेन तद्भेदाभावेनानुत्तेजकत्वादुत्तेजकीभूता-परेच्छाविरहविशिष्टसिद्ध्यभावस्य प्रकृते असत्त्वात्।

(ज) तथा हि आलोकलिङ्गकानुमितिस्थले आलोकलिङ्गकानुमितित्वावच्छिन्नानुद्देश्यकत्वे सति या आलोकत्वभिन्नधर्मावच्छिन्नलिङ्गकानुमितित्वप्रकारिकेत्यादिरीत्येति भावः। एवमन्यत्रापि।

(झ) तादृशकारणत्वान्तरस्याकल्पने सिद्ध्यात्मकपरामर्शमात्रसत्त्वे अनुमितिप्रसङ्गः।

सिद्ध्यभावसत्त्वे तादृशे(ञ)च्छासत्त्वेऽप्यनुमित्युत्पादादाह-'सिद्धिकालीने'ति सिद्धिविशिष्टेत्यर्थः। तेन(ट) यत्राविरलक्रमेण सिद्धि-भिन्नलिङ्गकसिषाधयिषा-धूमलिङ्गकपरामर्शाः, तत्र सिद्धिनाशक्षणे तादृशेच्छासत्त्वेऽपि अनन्तरं धूमलिङ्गकानु-मितौ न दोषः(ठ)। धूमेन वह्निमनुमिनुयाम् आलोकेन वह्निमनुमिनुयामिति समूहा-लम्बनेच्छायाः सिद्धिविशिष्टाया अप्रतिबन्धादाह—'तल्लिङ्गकानुमितीच्छाविरह-विशिष्टे'ति। विशिष्टत्वं च एककालावच्छेदेनैकात्मवृत्तित्वम्।

धूमत्वावच्छिन्नधूमलिङ्गकानुमितित्वावच्छिन्नोद्देश्यिका या इच्छा तद्विरह-विशिष्टा या धूमत्वभिन्नधर्मावच्छिन्नलिङ्गकानुमितित्वप्रकारिकेच्छा, या च धूमत्व-विरुद्धधर्मविशिष्टलिङ्गकानुमितित्वप्रकारकेच्छा सा अन्यलिङ्गकत्वेन विवक्षिता(१)। तदुभयस्य निरुक्तरूपेण अभावद्वयमेव(ड) कारणम्। प्रतिपदप्रयोजनन्तु प्रागेवोक्तम्।

## दीधितिः

'साधकमानं' साध्यवत्त्वनिश्चयः। पाषाणमयत्वादिना पर्वते तेजस्त्वादिना च वह्नेः सिद्धावपि पर्वतत्वेन तत्र वह्नित्वेन च तस्यानुमितेर्धर्मित्वसाध्यत्वयो-रवच्छेदकावनुप्रवेशनीयौ।

## दीधितिप्रकाशः

साधकमानपदस्य प्रमाणपरत्वे सिषाधयिषाविरहकाले कदाप्यनुमितिर्न स्यात्, अनुमानप्रमाणस्य सत्त्वादत आह—'साध्यवत्त्वनिश्चय'इति। 'पाषाणे'ति,—

(१) धूमत्वावच्छिन्नलिङ्गकानुमितित्वावच्छिन्नानुद्देश्यकत्वे सति या धूमत्वभिन्न धर्मावच्छिन्नलिङ्गकानुमितित्व प्रकारिका, या च धूमत्वविरुद्धधर्मविशिष्टलिङ्गकानु-मितित्वप्रकारिकेच्छातदन्यत्वेनविव क्षिता' इति पाठभेदः।

---

(ञ) 'तादृशेच्छे'ति—तल्लिङ्गकानुमितीच्छाविरहविशिष्टान्यलिङ्गकानुमितीच्छेत्यर्थः।

(ट) 'तेने'ति—सिद्धिकालीनेत्यस्य सिद्धिविशिष्टेत्यर्थकरणेन।

(ठ) सिद्धितृतीयक्षणे भिन्नलिङ्गकसिषाधयिषायाः सिद्धिविशिष्टत्वाभावेन तस्यास्तत्र प्रतिबन्धकत्वायोगादिति भावः।

(ड) अत्र एवकारेण उभयत्वावच्छिन्नाभावो व्यवच्छिद्यते। तेन प्रत्येकमात्रसत्त्वेऽपि उभयत्वावच्छिन्नाभावसत्त्वान्नातिप्रसङ्गः।

पाषाणमयो, वह्निमान् पर्वतस्तेजस्वीति सिद्धावपि(१) पर्वतो वह्निमानित्यनुमितेः पक्षतावच्छेदकविशिष्टे साध्यतावच्छेदकविशिष्टसाध्यवत्त्वनिश्चय एव साधकमानपदार्थ इत्यर्थः। इदमुपलक्षणम्; साध्यतावच्छेदकसम्बन्धसाध्यतावच्छेदकताघटकसम्बन्ध-पक्षतावच्छेदक(ढ)सम्बन्धा अपि निवेशनीयाः(ण)।

## दीधितिः

यदि च पर्वतत्वसामानाधिकरण्येनैकत्र साध्यसिद्धावपि विनानुमित्सामन्यत्र तादृशानुमितिरानुभविकी तदा धर्मिविशेषोऽपि निवेश्यो, नान्यथा।

## दीधितिप्रकाशः

'अन्यत्र' पर्वतान्तरे। 'तादृशानुमितिः' सामानाधिकरण्येनानुमितिः 'सामानाधिकरण्येने'ति—एकत्र साध्यसिद्धौ पर्वतान्तरे अवच्छेदकावच्छेदेन साध्यसिद्धौ विवादाभावादिति। 'तदे'ति,—तथा च पर्वतत्वस्य(२)सामानाधिकरण्येन तत्पर्वतविशेष्यक-वह्न्यनुमितिं प्रति पर्वतत्वेन(३)रूपेण तत्पर्वतविशेष्यक-वह्निनिश्चयत्वेन प्रतिबन्धकत्वमित्यर्थः। 'नान्यथे'ति,—अनुमितेरानुभविकत्वाभावे न प्रवेशनीय(त) इत्यर्थः।

(१) 'पर्वतस्तेजस्वीति वा निश्चयेऽपि' इति पाठान्तरम्। (२) 'पर्वतत्वसामानाधिकरण्येन' इति पाठान्तरम्। (३) 'पर्वतत्वरूपेण' इति पाठान्तरम्।

(ढ) पक्षतावच्छेदकसम्बन्धेत्यत्र षष्ठीतत्पुरुषसमासेन पक्षतावच्छेदकसम्बन्धपदेन पक्षतावच्छेदकताघटकसम्बन्धः प्रतिपत्तव्यः।

(ण) तेषामनिवेशे एकसम्बन्धेन पक्षे साध्यस्य सिद्धिसत्त्वे सम्बन्धान्तरेण तत्र साध्यानुमितेः, एकसम्बन्धेन साध्यतावच्छेदकविशिष्टस्य पक्षे सिद्धिसत्त्वे सम्बन्धान्तरेण साध्यतावच्छेदकविशिष्टस्य तत्रानुमितेः, एकसम्बन्धेन पक्षतावच्छेदकविशिष्टे साध्यस्य सिद्धिसत्त्वे सम्बन्धान्तरेण पक्षतावच्छेदकविशिष्टे तदनुमितेश्चानुपपत्तिः प्रसज्येत। तेषां विशिष्य सति निवेशे तु न तथेति भावः।

(त) 'अनुमितेरानुभविकत्वाभाव'—इति तादृशस्थले अन्यत्र तादृशानुमितेरानुभविकत्वाभाव इत्यर्थः।

## दीधितिः

पक्षतावच्छेदकस्य सामानाधिकरण्येनैकत्र साध्यसिद्धावपि तदवच्छेदेनानुमितिदर्शनात् पक्षतावच्छेदकावच्छेदेनानुमितिं प्रति तदवच्छेदेन सिद्धेः, तत्सामानाधिकरण्यमात्रेणानुमितिं प्रति तु सिद्धिमात्रस्य विरोधित्वम्।

## दीधितिप्रकाशः

'तदवच्छेदेन' पक्षतावच्छेदकावच्छेदेन, 'सिद्धेः' साध्यसिद्धेः। विरोधित्वमित्यन्वयः। 'तत्सामानाधिकरण्यमात्रेणे'ति,—पक्षतावच्छेदकावच्छेदेन साध्यानुमितावपि(१) पक्षतावच्छेदकसामानाधिकरण्येन साध्याव(२)गाहित्वसत्त्वादाह—'मात्रे'ति। 'सिद्धिमात्रस्ये'ति मात्रपदं कृत्स्नार्थकम्। तथा च साध्ये पक्षतावच्छेदकावच्छिन्नत्वानवगाहि-तत्सामानाधिकरण्यावगाह्यनुमितिं प्रतिपर्वतविशेष्यकवह्निनिश्चयत्वेन(थ) विरोधित्व(३)मित्यर्थः।

## दीधितिः

इत्थञ्च लिङ्गभेदन्यायोऽनुसरणीयः।

## दीधितिप्रकाशः

'इत्थञ्चे'ति,—सामानाधिकरण्येन सिद्ध्यनन्तरं तदवच्छेदेन सिषाधयिषायामपि सामानाधिकरण्यमात्रेणानुमित्यदर्शनात् सामानाधिकरण्यमात्रेणानुमितौ(४) पक्षतावच्छेदकावच्छिन्नत्वानवगाहि–तत्सामानाधिकरण्यावगाहि-सिषाधयिषाविरहविशिष्टनिरुक्तसिद्ध्यभावत्वेन हेतुत्वम्।

(१) 'साध्यसिद्धावपि' इति पाठान्तरम्। (२) 'पक्षतावच्छेदकसामानाधिकरण्यावगाहित्वादाह' इति पाठान्तरम्। (३) 'प्रतिबन्धकत्वमित्यर्थः' इति पाठान्तरम्। (४) 'सामानाधिकरण्यमात्रावगाह्यनुमितिं प्रति' इति पाठान्तरम्।

(थ) 'पर्वते'त्यादिः—पर्वतत्वावच्छिन्नविशेष्यकसंयोगत्वावच्छिन्नसंसर्गकवह्नित्वावच्छिन्नप्रकारकनिश्चयत्वेनेत्यर्थः। एवं कार्य्यतावच्छेदकगर्भेऽपि तादृशसंसर्गविशेषो निवेश्यः। एवं सर्वत्र प्रतिपत्तव्यम्।

एवमवच्छेदकावच्छेदेन सिद्धिसत्त्वे सामानाधिकरण्यमात्रेण सिषाधयिषाया-मवच्छेदकावच्छेदेनानुमितेरनुदयात् पक्षतावच्छेदकावच्छेदेनानुमितौ पक्षतावच्छेदका-वच्छिन्नत्वानवगाहित्वाप्रकारकत्वे(द) सति पक्षतावच्छेदकसामानाधिकरण्याव-गाहित्वप्रकारकानुमितीच्छाविरहविशिष्ट–पक्षतावच्छेदका(ध) वच्छिन्नसिद्ध्यभावत्वेन हेतुत्वम् ।

तेन(न) अवच्छेदका(१)वच्छिन्नत्वावगाहित्वतदभावानवगाहिन्याः शुद्ध-सामानाधिकरण्येन सिषाधयिषाया अवच्छेदकावच्छेदेन सिषाधयिषायाश्च संग्रहः ।

यद्वा उभयत्र पक्षतावच्छेदकसामानाधिकरण्येनैव इच्छा उत्तेजिका । तथा च अनुमितिसामान्यं प्रति तादृश(प)सिषाधयिषाविरहविशिष्टपक्षतावच्छेदकावच्छिन्न-सिद्ध्यभावत्वेन, सामानाधिकरण्यमात्रेणानुमितिं प्रति तादृशसिषाधयिषाविरह-विशिष्ट-सिद्धिसामान्याभावत्वेन हेतुत्वम् ।

अवच्छेदकावच्छेदेनानुमितिं प्रति तदवच्छेदेन(२) सिद्धिकालीनायाः सामानाधिकरण्यमात्रेणानु(फ)मित्सायाः पृथगेव प्रतिबन्धकत्वम् । एवं सामानाधि-करण्यमात्रेणानुमितिं प्रति सिद्धिसामान्यकालीनाया अवच्छेदकावच्छेदेन सिषा-धयिषायाः पृथगेव प्रतिबन्धकत्वमिति संक्षेपः ।

(१) 'अवच्छेदकत्वावगाहि' इति पाठान्तरम् । (२) 'अवच्छेदकावच्छेदेन' इति पाठान्तरम् ।

(द) सत्यन्तस्य पक्षतावच्छेदकावच्छिन्नत्वावगाहित्वाभावाप्रकारकत्वे सतीत्यर्थः ।

(ध) 'पक्षतावच्छेदकावच्छिन्नसिद्ध्यभावत्वेन' पक्षतावच्छेदकावच्छेद्यत्वावगाहिसाध्य-निश्चयाभावत्वेन । सत्यन्तं प्रकारकान्तञ्च अनुमितीच्छाविशेषणम् ।

(न) 'तेने'ति—पक्षतावच्छेदकावच्छिन्नत्वावगाहित्व-प्रकारकत्वरूप-लघु-विशेषणमपहाय अभावद्वयघटितनिरुक्तरूपगुरुविशेषणोपादानेनेत्यर्थः ।

(प) 'तादृशसिषाधयिषे'ति—पक्षतावच्छेदकसामानाधिकरण्येन सिषाधयिषेत्यर्थः । अनन्तरोक्ततादृशपदस्यापि तथैवार्थः ।

(फ) पक्षतावच्छेदकावच्छेद्यत्वावगाहित्वाप्रकारकसामानाधिकरण्यावगाहित्वप्रकारका-नुमितीच्छाया इति 'सामानाधिकरण्यमात्रेणानुमित्साया' इत्यस्यार्थः ।

## दीधितिः

साध्यविशेष्यकसिद्ध्यनन्तरं पक्षविशेष्यकानुमितेः प्रामाणिकत्वे तां प्रति पक्षविशेष्यिकैव सिद्धिर्विरोधिनी। एवं च पक्षविशेष्यकसिद्ध्यनन्तरमपि साध्यविशेष्यिकानुमितिर्जायते तुल्यन्यायात् समानाकारायाः सिद्धेः प्रतिबन्धकत्वे पर्य्यवसानात्।

## दीधितिप्रकाशः

'ताम्' पक्षविशेष्यकानुमितिम्। 'पक्षविशेष्यिकैवे'ति एवकारेण साध्य-विशेष्यकव्यवच्छेदः।

प्राचां मतमाश्रित्याह—'एवञ्चे'ति। नवीनमते तु पक्षविशेष्यकत्वमेव नियतम्। अत एव वह्न्यनुमितेश्चाक्षुषोपनीतभानत्वं पूर्वपक्षयन्ति। अन्यथा साध्यविशेष्यकत्वे असन्निकृष्टविषयविशेष्यकज्ञानजनने चक्षुषोऽसामर्थ्यात् कथं पूर्वपक्षावतारः स्यादिति। तुल्यन्यायत्वं दर्शयति—'समानाकारे'ति(ब)।

## दीधितिः

तादृशानुमितिं प्रति सिद्धिमात्रं विरोधि साध्यप्रसिद्धिरेव वा। अत एव प्रसिद्धसाध्यकस्थले पक्षविशेष्यिकैवानुमितिरनुभूयत इति।

## दीधितिप्रकाशः

साध्यप्रसिद्धौ सत्यां साध्यविशेष्यिकैवानुमितिः, तदभावे तु साध्यविशेष्यि-कैव। अत एव 'ज्ञाने अप्रामाण्याभाव' इत्यप्रसिद्धाभावविशेष्यिकानुमितिरिति मतेनाह—'तादृशे'ति—साध्यविशेष्यकेत्यर्थः। सिद्धिपदेन पक्षे साध्यनिश्चयस्योक्त-त्वात् तत्र पक्षवैशिष्ट्यावगाहित्वनिवेशनं(१) निरस्यति—'साध्यप्रसिद्धि'रिति।

---

(१) 'पक्षसाध्योभयवैशिष्ट्यावगाहित्वं निरस्यति' इति पाठभेदः।

(ब) प्रकृते सिद्धेः समानाकारत्वञ्च प्रकृतानुमितिविशेष्यताविशिष्टविशेष्यताकत्वम्। विशेष्यतायां विशेष्यतावैशिष्ट्यञ्च स्वनिरूपितमुख्यप्रकारताविशिष्टप्रकारताकत्व-स्वावच्छेदक-धर्मावच्छिन्नत्वोभयसम्बन्धेन। प्रकारतायां प्रकारतावैशिष्ट्यञ्च स्वावच्छेदकधर्मावच्छिन्नत्व-स्वावच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेन।

'अत एव' साध्यप्रसिद्धिमात्रस्य साध्यविशेष्यकानुमितिविरोधित्वादेव। तथा च भावसाध्यकस्थले साध्यविशेष्यकानुमितेरप्रसिद्धतया अभावसाध्यकस्थल एव उक्तक्रमेणानुमितेर्द्वैविध्यात् साध्यविशेष्यकानुमितिं प्रति साध्य(भ)प्रसिद्धिमात्रस्य विरोधित्वम्।

तत्र 'ज्ञाने अप्रामाण्याभाव' इत्यनुमितिं प्रति अप्रामाण्याभावप्रसिद्धित्वेन न विरोधित्वम्(१),अप्रामाण्याभावपक्ष(२)काधेयत्वसम्बन्धेन ज्ञानसाध्यकानुमितेरपि(३) तदाकारतया तां प्रत्यविरोधित्वात्।

नापि ज्ञानमप्रामाण्यव्यापकाभावप्रतियोगिमदित्याकारकपरामर्श—(म) जन्यतादृशानुमितित्वेन(४) प्रतिबध्यत्वम्। ज्ञानमप्रामाण्यव्यापकाभावप्रतियोगिमत् अप्रामाण्याभावो ज्ञानीयत्व(घ)व्याप्यवानिति समूहालम्बनात्मकपरामर्श(य)जन्यानुमितिं प्रत्यविरोधित्वात्, किन्तु ज्ञाननिष्ठोद्देश्यत्वावगाह्यप्रामाण्याभावनिष्ठविधेयत्वावगाहिनीं 'ज्ञाने अप्रामाण्याभाव' इत्याकारकानुमितिं प्रति साध्यप्रसिद्धित्वेन(५) विरोधित्वम्। अप्रामाण्याभावपक्षक—ज्ञानसाध्यकस्थले तु अप्रामाण्याभावस्यैवोद्देश्यत्वं, ज्ञानस्य तु विधेयत्वं भासते। उद्देश्यत्वं विधेयत्वञ्च स्वरूपसम्बन्धविशेषः प्रतीतिसाक्षिकः। अनुमितौ तु पक्षस्य उद्देश्यत्वं साध्यस्य विधेयत्वं भासते।

अप्रामाण्याभावे ज्ञानव्याप्यवत्ताज्ञानाजन्यत्वे सति(६) अप्रामाण्याभावे ज्ञानीयत्वावगाहिज्ञानाजन्यत्वे च सति 'ज्ञाने अप्रामाण्याभाव' इत्याकारकानुमितित्वा-

(१) 'प्रतिबन्धकत्वम्' इति पाठान्तरम्। (२) 'अप्रामाण्याभावे पक्षे' आधेयत्व' इति पाठान्तरम्। (३) 'ज्ञानसाध्यकानुमितेस्तदाकारतया' इति पाठान्तरम्। (४) 'तादृशानुमितिं प्रति सिद्धिज्ञानं विरोधि' इति पाठान्तरम्। (५) 'साध्यप्रसिद्धेः' इति पाठान्तरम्। (६) ग्रन्थविशेषे प्राथमिकं 'सती'ति पदं नास्ति।

(भ) 'साध्यप्रसिद्धिमात्रस्ये'ति साध्यज्ञानमात्रस्येत्यर्थः। तथा च साध्यज्ञानत्वमेव साध्यविशेष्यकानुमितिविरोधितावच्छेदकम्, न तु पक्षप्रकारकसाध्यविशेष्यकज्ञानत्वसाध्यप्रकारकपक्षविशेष्यकज्ञानत्वादिकमिति भावः।

(म) 'परामर्शे'ति—व्यतिरेकपरामर्शेत्यर्थः।

(य) 'परामर्शे'ति—अन्वयव्यतिरेकोभयपरामर्शेत्यर्थः, ज्ञानीयत्वव्याप्यवानित्यनेनान्वयव्याप्तेः समुल्लेखात्।

वच्छिन्नं प्रति तथात्वम्। ज्ञानीयाप्रामाण्याभाववत्वेन यत्र पक्षता, तादृशानुमिति-वारणाय द्वितीयं सत्यन्तमित्यपि वदन्ति(र)।

## दीधितिः

अत्र च व्याप्तिस्मरणादिना पूर्वानुमित्सानाशे परामर्शकाले च सिद्धिसत्वे अनुमित्सान्तरोत्पत्त्यैवानुमितिः, तथैव कारणीभूतस्य विशिष्टाभावस्य(ल) सम्पत्तेरित्युपाध्यायाः।

## दीधितिप्रकाशः

'व्याप्तिस्मरणादिने'ति—उत्पादक्रमनियमार्थमुक्तम्(१)। अनुमित्सान्तरोत्पत्त्यैवे'ति, न त्वनुमित्साया योग्यतयेत्येवकारार्थः। 'तथैव' अनुमित्सान्तरोत्पत्त्यैव(२)।

## दीधितिः

अन्ये तु द्वित्रिक्षणान्तरितायामप्यनुमित्सायामनुमितिदर्शनादनुमित्सायोग्यता वाच्या। सा च न स्वोत्पत्त्यनन्तरं स्वविषयसिद्ध्यनुत्पादः; अनुमित्सानन्तरमन्तरानुमित्यनुत्पादे विषयादिविलम्बेनेन्द्रियादिना निर्णीतेऽपि साध्ये लिङ्गपरामर्शादनुमितिप्रसङ्गात्। किन्तु अनुमित्सानन्तरं लिङ्गदर्शनादिक्रमेण यावता कालेनोत्सर्गतः परामर्शो जायते, तावानेव कालः, फलबलेन तथा कल्पनात्।

अथवा अनुमित्सोत्पत्त्यनन्तरमनुमित्सानाशेऽपि सिद्धौ सत्यां यावत्कालमध्ये अनुमितिर्जायते, तावानेव कालोऽनुमित्सयोपलक्षितः।

(१) 'नियमादुक्तम्' इति पाठान्तरम्। (२) 'अनुमित्सान्तरोत्पादेनैव' इति पाठान्तरम्।

(र) वदन्तीत्यनेन प्रकृतकल्पे अस्वरसः सूच्यते। स च निरुक्तरीत्यैव लाघवत उपपत्तिसम्भवे गुरुतरतादृशकल्पानुसरणस्यानौचित्यमेवेति।

(ल) 'विशिष्टाभावस्ये'ति—सिषाधयिषाविरहविशिष्टसिद्ध्यभावस्येत्यर्थः।

## दीधितिप्रकाशः

'योग्यता वाच्ये'ति उत्तेजकत्वेनेति शेषः(व)। 'सा चे'ति,—'स्वम्' अनुमित्सा। उत्पत्तिपदम्(श) उत्पादकसामग्रीपरम्, तेन(ष) अनुमित्सोत्पत्तिकालेऽपि पक्षता। अनुमित्सापूर्वकालवारणाय पूर्वं प्रतीकम्(स)। अनुमित्युत्तरकालवारणाय विशेष्यम्।

तत्र प्रात्यक्षिकादिसिद्धिसत्त्वे(१) पक्षतासम्पत्तये 'स्वविषये'ति। 'दिवसादी'ति तदानीमनुमित्यनुदयस्यानुभविकत्वार्थम्। अनुमित्साविषयसिद्ध्यनुत्पादकालसम्पादनाय 'इन्द्रियादिने'ति। 'अनुमित्सानन्तर'मिति—अनुमित्सोत्पादक-सामग्र्यनन्तरमित्यर्थः; तेन अनुमित्सोत्पत्तिकालस्यापि संग्रहः।

ननु व्याप्तिघटकीभूतपदार्थानां क्रमिकोपस्थितावनुमित्सानन्तरं कदाचिद् दशक्षणानन्तरमपि परामर्शो भविष्यतीत्यत आह—'उत्सर्गत' इति। इच्छा, लिङ्गदर्शनं, व्याप्तिस्मरणं, व्याप्तिविशिष्टधूमप्रत्यक्षं, ततो वह्निव्याप्यधूमवान् पर्वत इति विशिष्टवैशिष्ट्यबोधात्मकः परामर्श इति क्षणपञ्चकात्मककाल एवौत्सर्गिक इति भावः।

नन्वेतादृशकालस्य कथमुत्तेजकत्वमत आह 'फलबलेने'ति। नन्वनुमित्सानन्तरं क्षणषट्क-क्षणसप्तकमध्ये अनुमितेरानुभविकत्वात् तत्साधारण्या(२) याह—'अथवे'ति(३)।

(१) 'तत्रापि प्रात्यक्षिकसिद्धिसत्त्वे' इति पाठान्तरम्। (२) 'साधारण्याग्रहादाह' इति पाठान्तरम्। (३) 'अथवेती'त्यनन्तरं 'शरणं ममेति हृदय'मिति पाठः क्वाचित्कः।

(व) तेन अनुमित्सायोग्यताविरहविशिष्टसिद्ध्यभावत्वेनानुमितिं प्रति कारणत्वात् अनुमित्सान्तरोत्पत्तिं विनापि नोक्तस्थले अनुमित्यनुपपत्तिरिति भावः।

(श) 'उत्पत्तिपद'मिति—स्वोत्पत्त्यनन्तरमित्यत्रेति शेषः।

(ष) 'तेने'ति—आयुर्घृतमित्यादिवज्जनकलक्षणया उत्पत्तिपदस्य उत्पादकसामग्रीपरत्वेनेत्यर्थः। अन्यथा अनुमित्सोत्पत्तिकालस्य अनुमित्सोत्पत्त्यनन्तरक्षणत्वाभावात् तदानीं पक्षताभावादनन्तरमनुमितिर्न स्यादिति। सामग्र्यनन्तरत्वन्तु तत्रास्त्येवेति भावः।

(स) पूर्वं प्रतीकं 'स्वोत्पत्त्यनन्तर'मिति। विशेष्यं 'स्वविषयसिद्ध्यनुत्पाद' इति।

## दीधितिः

यदि च सिद्ध्यनन्तरं तन्नाशेऽपि द्वित्रिक्षणमध्ये विनानुमित्सामनुमित्यनुत्पादोऽनुभवसिद्धः, तदा सिद्ध्यापि तावानेव समय उपलक्षणीयः(ह)। विशिष्य क्षणनियमस्त्ववहितैः करणीय इति वदन्ति।

## दीधितिप्रकाशः

तुल्यन्यायतया उत्तेजकवत् प्रतिबन्धकेऽपि योग्यतामाह—'यदि चे'ति। ननु सिषाधयिषानन्तरं किं दण्डात्मकः कालः, किं वा क्षणदशकात्मकः काल उत्तेजक इति कथमवधारणीयम्, एवं सिद्ध्यनन्तरं क्षणचतुष्टयात्मकः क्षणषट्कात्मको वा कालः प्रतिबन्धक इत्यपि कथमवधारणीयमित्यत आह—'विशिष्य क्षणनियमस्त्व'ति(१) (क्ष)। 'वदन्ती'ति,—अत्रायमस्वरसः विशिष्य क्षणनियमो ब्रह्मणोऽपि दुरवधारणः। एवञ्चैकस्य सिषाधयिषायामुत्पन्नायामप्य(२)न्यस्य सिद्धिसत्त्वे अनुमितेरनुदयात् तत्पुरुषीयसिषाधयिषानन्तरतादृशक्षणाभावविशिष्टसिद्ध्यभावस्य तत्पुरुषीयानुमितिं प्रति हेतुत्वे(३) वाच्ये अतिगौरवमिति।

## दीधितिः

अत्र च यत्र साध्यनिर्णयेच्छानन्तरं(क) पूर्वोक्तन्यायेन साध्यतद्व्याप्यविशिष्टपक्षस्य प्रत्यक्षम् स्मरणं वा, यत्र च साध्यतद्व्याप्यधर्मतादृशव्याप्यधर्मान्तरविशिष्ट-

---

(१) 'विशिष्य क्षणनियमस्तु अवहितैः करणीय' इति पाठान्तरम्। (२) 'सिषाधयिषायामपि' इति पाठान्तरम्। (३) 'कारणत्वस्य वाच्यत्वे अतीव गौरवम्' इति पाठान्तरम्।

(ह) सिद्धिनाशोत्तरमपि यावत्कालमध्ये अनुमितिर्न जायते तावानेव समय इत्यर्थः। समयपदं क्षणपरम्।

(क्ष) अत्राह जगदीशः—"ननु क्रियात्मकानां तावत्समयानामभावस्य सर्वदैवात्मनि सत्त्वात्तद्योग्यताविवक्षयापि अनुमित्सानाशोत्तरमनुमितेः सम्भव इत्यत आह 'विशिष्ये'ति। तथा च जन्यमात्रस्य कालोपाधितया आत्मसमवेतं तत्तज्ज्ञानादिकमेव तादृशसमयो वाच्य इत्यदोषः"। इति।

(क) 'साध्यनिर्णयेच्छे'ति—साध्यनिर्णयो जायतामित्याद्याकार-साध्यनिर्णयत्वप्रकारकेच्छेत्यर्थः।

पक्षस्य तत्पक्षकसाध्यतद्व्याप्यवत्त्वानुमित्योरिष्टसाधनताया्श्चैकं स्मरणं, ततस्तयोरनुमित्सा, ततः साध्यतद्व्याप्यवत्त्वानुमितिः, तत्र तदनन्तरमनुमितिप्रसङ्गः। योग्यताविवक्षणे तु सुतरामेवेति तदिच्छाविषय(ख)सिद्ध्यनुपहितत्वं तद्विशेषणम्।

## दीधितिप्रकाशः

अनुमित्सायां सत्यां तादृशप्रत्यक्षादिसत्त्वेऽप्यनुमित्युत्पादादाह—'साध्यनिर्णयेच्छानन्तर'मिति। 'पूर्वोक्तन्यायेने'ति, — सिषाधयिषाप्राक्कालोत्पन्न(१) विशेषणज्ञानेन सिषाधयिषाकालीनेन्द्रियसन्निकर्षेण च यत्र वह्निमान् वह्निव्याप्यवांश्च पर्वत(२) इत्याकारकं प्रत्यक्षं स्मरणं वेत्यर्थः।

अनुमित्सायामपि स्वविषयसिद्ध्यनुपहितत्वविशेषणदानार्थमाह-'यत्र चे'ति। वह्निमान् वह्निव्याप्यवान् वह्निव्याप्यव्याप्यवांश्च पर्वतः पर्वतपक्षकवह्नितद्व्याप्यानुमितिरिष्टसाधनमित्येवं स्मरणं यत्रेत्यर्थः। अत्र च इच्छासामग्र्या अनुमितिविरोधित्वस्य सन्दिग्धत्वादनुमित्सोत्पत्तिकाले वह्न्यनुमितेर्वारणाय स्मृतौ(३) वह्निविषयकत्वोपादानम्। वह्नितद्व्याप्यानुमितिसामग्रीसम्पादनाय वह्निव्याप्यतद्व्याप्यवत्त्वविषयकत्वोपादानम्। उभयानुमित्सासम्पादनाय उभयानुमितीष्टसाधनताविषयकत्वोपादानम्(४)। अत्र(५) वह्न्यनुमितेरेव परामर्शात्मकतया पूर्वपरामर्शनाशेऽपि क्षति(ग)विरह(६) इति भावः।

(१) 'कालीन' इति पाठान्तरम्। (२) 'पक्ष' इति पाठान्तरम्। (३) 'स्मृतौ' इति पाठो न सार्वत्रिकः। (४) 'विषयकत्वमुपात्तम्' इति पाठान्तरम्। (५) 'अत एव वह्निव्याप्यानुमितेरेव' इति पाठान्तरम्। (६) 'विरहादिति' पाठान्तरम्।

(ख) 'तदिच्छाविषयसिद्ध्यनुपहितत्व'मित्यस्य तदिच्छानिरूपितोद्देश्यतावच्छेदकताप-र्याप्त्यधिकरणधर्मावच्छिन्नानुमित्यभावविशिष्टत्वमित्यर्थः। तेन अनुमितिद्वयं जायतामितीच्छया क्रमिकानुमितिद्वयोत्पादस्थले न प्रथमानुमित्या इच्छायाः स्वविषयसिद्ध्यनुपहितत्वविघटनेन तदिच्छाबलाद् द्वितीयानुमित्यनुपपत्तिप्रसङ्गः। अभावविशिष्टत्वञ्च एकक्षणावच्छिन्नैकात्मवृत्तित्वसम्बन्धेन।

(ग) 'क्षतिविरह' इति—दर्शितानुमितिप्रसङ्गासङ्गतिरूपक्षतिविरह इत्यर्थः।

'सुतरा'मिति,—सिषाधयिषानन्तरक्षणघटकात्मककालस्यैव सिषाधयिषा-पदार्थत्वादनुमित्यव्यवहितप्राक्काले इच्छाविरहेऽपि न क्षतिः। सुतरामेव अनुमिति-प्रसङ्ग इत्यन्वयः(१)।

अनुमित्सानन्तरं प्रत्यक्षादिसिद्धिसत्त्वेऽपि अनुमितिदर्शनात्(१) 'तदिच्छा-विषये'ति सिद्धिविशेषणम्। तद्विशेषणम्' तदिच्छाविशेषणम्।

## दीधितिः

पक्षसाध्यभेदेन पक्षताया भेदात् पृथक् पृथगेव कार्य्यकारणभावः। तथा च यत्र सिद्ध्यनन्तरं कदाप्यनुमितिर्न जाता, तत्र सिद्ध्यभावमात्रं कारणम्। न तु तत्रेच्छानिवेशोऽपि गौरवात् प्रयोजनाभावाच्च। तेन यत्पक्षकयत्साध्यकानुमितौ कस्यापीच्छा न जाता, तत्र उक्तिसाधारण्यमात्रसम्पादनायेश्वरेच्छानिवेशनायासो नोपादेयः।

## दीधितिप्रकाशः

'पक्षसाध्यभेदेने'ति,—उपलक्षणमेतत्, सम्बन्धभेदोऽपि(घ) द्रष्टव्यः। 'यत्र' यत्पक्षकयत्साध्यकस्थले। 'गौरवा'दिति,—सिषाधयिषाविरहविशिष्टसिद्ध्य-भावस्य सिद्ध्यभावतो(ङ)ऽन्यत्वेऽपि तदपेक्षया गुरुत्वादित्यर्थः।

यत्पक्षक-यत्साध्यकसिद्धिस्थले कस्यापि सिषाधयिषा न जाता, तत्र सिषाधयिषाविरहविशिष्टसिद्ध्यभावस्यापि(च) नाधिक्यमिति(३)।

---

(१) इत्यर्थ' इति क्वचित् पाठः। (२) 'अनुमित्युत्पादादाह तदिच्छाविषयेति, सिद्धिविशेषण' मिति क्वचित् पाठः। (३) 'सिद्ध्यभावस्य नातिरिक्तत्वम्' इति पाठान्तरम्।

---

(घ) 'सम्बन्धभेद' इति—साध्यतावच्छेदकसम्बन्ध—साध्यतावच्छेदकताघटकसम्बन्ध-पक्षतावच्छेदकताघटकसम्बन्धभेदेनापि पक्षताया भेदादित्यपि द्रष्टव्यमिति भावः।

(ङ) 'सिद्ध्यभावत' इति केवलसिद्ध्यभावत इत्यर्थः। 'अन्यत्वेऽपी'ति प्रतियोगिता-वच्छेदकभेदेन असमनैयत्येन च भेदे सत्यपीत्यर्थः। एतेन सामान्यसिद्ध्यभावत्व-विशिष्टसिद्ध्य-भावत्वयोः सामानाधिकरण्यात् स्वसमानाधिकरणमाध्यव्याप्यतरवच्छेदकधर्मान्तरघटितत्व-रूपपारिभाविकवैयर्थ्यप्रयुक्तविशिष्टसिद्ध्यभावत्वावच्छिन्नकारणत्वनिरासस्यासम्भवः सूचितः।

(च) 'नाधिक्यं' नातिरिक्तत्वं केवलसिद्ध्यभावत इति शेषः। तत्र केवलसिद्ध्यभाव-विशिष्टसिद्ध्यभावयोः समनियतत्वात् समनियतयोरभावयोरैक्यस्य न्यायनयसिद्धत्वात्। तेन तत्र स्वसामानाधिकरण्यघटितवैयर्थ्यदोषेणापि निरुक्तविशिष्टरूपावच्छिन्नकारणत्वनिरासः-सम्भवतीति भावः।

यत्र यत्पक्षक-यत्साध्यकसिद्धिकाले नियमत(१) एव परामर्शाभावः, तत्र सिद्ध्यभावोऽपि न कारणम्। न च तत्र परामर्शसिद्ध्योर्योगिनामेव सम्भवात् कथमेतदिति वाच्यम्; एवं(२) सति यत्र विषयविशेषे विषयविशेषस्य भ्रमानुमितिः, तत्र सिद्धिकाले परामर्शाभावस्य सूपपादत्वात्,(३)योगिनां भ्रमाभावात्, अन्यत्र(छ) च सिद्धिकाले परामर्शाभावनैयत्यादिति। 'प्रयोजनाभावा'दिति,—सिद्धिकालीनानुमित्साधीन(४)पक्षताया अनुमितिसंघटनमेव(५) प्रयोजनम्, तच्च तत्र न सम्भवतीति भावः।

'उक्तिसाधारण्यमात्रे'ति,—मात्रपदेनार्थैक्यव्यवच्छेदः। ईश्वरस्य व्यवस्थापनं विना तदिच्छानिवेशोऽपि दुर्घट(६) इत्यत आह—'आयास'(ज) इति।

## दीधितिः

यत्तु सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्ना या सिद्धिः, सिषाधयिषाविरहविशिष्टायास्तस्या अभावः पक्षता(झ)।

## दीधितिप्रकाशः

सिषाधयिषेति,—सिषाधयिषाविरहविशिष्टो यः स्वक्षणः तदव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकं यद् यत् तद्भिन्ना या सिद्धिः, सिषाधयिषाविरहविशिष्टायास्तस्या अभावः पक्षतेत्यर्थः। एतन्मते सिषाधयिषानाशेऽपि सिद्धिसत्त्वे द्वित्रिक्षणमध्येऽपि अनुमितिस्वीकारः। अत एव तत्रैव भिन्नेत्यस्य प्रतियोगिप्रसिद्धिः। अनुमित्यव्यवहितप्राक्काले सिषाधयिषाविरहविशिष्टा या सिद्धिः, तद्भिन्नसिद्धय एव पक्षताप्रतियोगिन्य इति।

(१) 'नियतपरामर्शाभावः' इति पाठान्तरम्। (२) 'एवमपि' इति पाठान्तरम्। (३) 'उपपन्नत्वात्' इति पाठान्तरम्। (४) 'सिद्धिकालेऽनुमित्साधीने'ति पाठान्तरम्। (५) क्वचित् 'तस्य प्रयोजन'मिति पाठः। (६) 'निवेशो न घटत' इति पाठान्तरम्।

---

(छ) 'अन्यत्र'—योगिभिन्ने, निरुक्ताङ्कुरविशेषे इति शेषः।

(ज) जगदीशस्तु—'धात्वर्थसमानकर्तृकेच्छायामेव सनो विधानादनुमितिगीचराया अपि ईश्वरेच्छाया अनुमातृनिष्ठत्वाभावेन सिषाधयिषाशब्देन बोधयितुमशक्यत्वादायास इत्युक्त'मिति ग्रन्थेनान्यथैव आयासपदतात्पर्यं वर्णितवान्।

(झ) सार्वभौमनिरुक्तिरियम्। तदुक्तं जगदीशेन—"सिषाधयिषानाशेऽपि द्वित्रिक्षणाभ्यन्तरे सिद्धिसत्त्वे अनुमितेः सम्पादकं सार्वभौमोक्तप्रकारमुपन्यस्यति यत्त्विति" इति।

## दीधितिः

अथ तृतीयक्षणव्यवधायकद्वितीयक्षण एवाव्यवहितत्वपर्य्यवसानाद् यत्रा विरलक्रमेण सिद्धिसिषाधयिषानुमितयः, तत्र द्वितीयक्षणे पक्षतासम्पत्तये द्वितीय-सिषाधयिषाविरहो विशेषणमस्तु सिद्धेः, प्राथमिकस्तु स्वक्षणस्य किमर्थमिति चेत् ; यत्र क्रमेण सिषाधयिषा-प्रात्यक्षिकसिद्धि-परामर्शानुमितयः, तत्र तृतीयक्षणे पक्षता-सम्पत्त्यर्थमिति ।

## दीधितिप्रकाशः

द्वितीयसिषाधयिषाविरहविशिष्टपदस्य व्यावृत्तिं प्रदर्शयन्नेव प्राथमिकसिषा-धयिषाविरहविशिष्टपदस्य(१) व्यावृत्तिं प्रदर्शयितुं पृच्छति,—'अथे'ति । तृतीय-क्षणस्य व्यवधायको यो द्वितीयक्षणस्तत्रेत्यर्थः । तथा च द्वितीयक्षणेन व्यवहितत्वात् तृतीयादिक्षणे नाव्यवहितत्वमित्यर्थः ।

सिद्ध्यनन्तरं क्षणविलम्बेन सिषाधयिषायां सहजत(ञ) एव सिद्ध्यभावाधीन-पक्षतासत्त्वमित्यत उक्तम्—'अविरलक्रमेणे'ति । 'सिद्धिसिषाधयिषे'ति,—अत्र च सिषाधयिषाविरहविशिष्टः स्वक्षणः सिद्ध्युत्पत्तिक्षणः, तदव्यवहितोत्तरक्षणे(२) नानुमित्युत्पत्तिरिति भवति सा सिद्धिः सिषाधयिषाविरहविशिष्टस्वक्षणाव्यव-हितोत्तरक्षणोत्पत्तिकानुमितिकभिन्ना, तस्या विशिष्टाभावोपपत्तये द्वितीयं विशिष्टान्त-मित्यर्थः ।

'स्वक्षणस्ये'ति,—सिद्धिक्षणस्येत्यर्थः । 'यत्र क्रमेणे'ति,—सिषाधयिषा-नाशक्षणे प्रात्यक्षिकसिद्ध्युत्पत्तौ पक्षतासम्पत्तिरुक्तविशेषणेनापि न सम्भवतीति अत उक्तं 'क्रमेणे'ति अविरलक्रमेणेत्यर्थः । एवं सिद्धिपरामर्शयोः समूहालम्बनत्वे स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकैव सा सिद्धिः स्यात् तदन्यसिद्ध्यभावः सम्मुखत(ट) एवास्तीति तदर्थं विशेषणदानमफलं स्यादतस्तत्रापि क्रमो विवक्षितः ।

(१) 'प्रथमसिषाधयिषाविरहविशिष्टस्य' इति पाठान्तरम् । (२) तदव्यवहित-क्षणे' इति पाठान्तरम् ।

(ञ) 'सहजत' इति—सिषाधयिषाविरहरूपविशेषणव्यतिरेकेणैवेत्यर्थः ।

(ट) 'सम्मुखत एवे'ति—प्राथमिकसिषाधयिषाविरहविशेषणविनाकृतस्वक्षणाव्यवहितो-त्तरक्षणोत्पत्तिकानुमितिकसिद्धिभिन्नसिद्ध्यभावसत्त्वादेवेत्यर्थः ।

तथा च सा सिद्धिः स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिका न भवति, स्वक्षणाव्यवहितोत्तरक्षणे तस्याः परामर्शस्यैवोत्पादात्।

अनुमित्यव्यवहितप्राक्क्षणे च तस्याः(ठ) सिषाधयिषाविरहविशिष्टाया एव सत्त्वादतो विशेषणोपादानम्। स्वक्षणे(१) वृत्ते च तस्मिन्(ड) तदुत्पत्तिक्षणस्य न सिषाधयिषाविरहविशिष्टत्वं सिषाधयिषाविरहविशिष्टस्य स्वस्थितिक्षणस्याव्यवहितोत्तरक्षणे अनुमित्युत्पत्तिरिति सिषाधयिषाविरहविशिष्टस्य स्वक्षणस्याव्यवहितोत्तरक्षणोत्पत्तिकैव सा सिद्धिः, तदन्यसिद्धेरभावः सहजत एवास्तीति भवति पक्षतेत्यर्थः।

तदव्यवहितोत्तरत्वञ्च तद्ध्वंसाधिकरणकालध्वंसानधिकरणत्वे सति तद्ध्वंसाधिकरणत्वम्। तथा च यत्र सिषाधयिषा-प्रात्यक्षिकसिद्धि-परामर्शा-नुमितयः, तत्र सिद्धिस्थितिकाले(२) नष्टः सिद्ध्युत्पत्तिकालपर्य्यन्तस्थायी क्रियाद्यात्मकः कालोपाधिः, तस्य पूर्वकाले सिषाधयिषाविरहविशिष्टत्वात् स एव सिषाधयिषाविरहविशिष्टस्वकालः, तदव्यवहितोत्तरक्षणः सिद्धिस्थितिक्षणः परामर्शोत्पत्तिक्षणः, तत्र अनुमितेरनुदयात्(३) सिषाधयिषाविरहविशिष्टस्वकालाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नैव सा सिद्धिः, तस्याश्च सिषाधयिषाविरहविशिष्टाया एव पूर्वकाले सत्त्वात् पक्षता न स्यादतः प्रथमं क्षणपदम्।

एवं सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरकालस्तादृशाव्यवहितोत्तरक्षणपर्य्यन्तस्थायी स्थूलकालोपाधिः, तथा च स्थूलकालोपाधिमादाय सैव सिद्धिः सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरकालोत्पत्तिकानुमितिकेति, तदन्या सिद्धिरीश्वरस्यैवेति तस्या ईश्वरीयसिषाधयिषाविशिष्टाया एव सत्त्वेन सिषाधयिषाविरहविशिष्टतादृशसिद्ध्यप्रसिद्ध्या असम्भव इत्यतो द्वितीयं क्षणपदम्।

(१) ग्रन्थविशेषे 'स्वक्षण' इति पाठो नास्ति। (२) 'सिद्ध्युत्पत्तिकालपर्य्यन्तस्थायी सिद्धिस्थितिकाले विनष्ट' इति पाठान्तरम्। (३) 'अनुमितेरनुत्पादात्' इति पाठान्तरम्।

(ठ) 'तस्याः'—स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकसिद्धिभिन्नसिद्धेः।

(ड) 'तस्मिन्नि'ति सिषाधयिषाविरहविशिष्टेतिविशेषण इत्यर्थः।

पर्वतो वह्निमानित्यनुमितेरनन्तरं विनश्यदवस्थ-पूर्व(१)परामर्शेनानुमित्यन्तरापत्तिः, अनुमित्यात्मकसिद्धेः सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणवृत्तिस्वात्मकानुमितिकत्वेन तदन्यसिद्धेरभावस्य सत्त्वात्। तादृशक्षणाव्यवहितोत्तरक्षणवृत्ति-स्वभिन्नानुमितिकत्वविलक्षणेऽपि यत्र पर्वतो वह्निमानित्यनुमितिरपेक्षाबुद्ध्यात्मिका, तदुत्तरं पर्वतो वह्निमान् वह्निव्याप्यवांश्चेति प्रात्यक्षिकसिद्धिरपेक्षाबुद्धिरूपा, तत्र तादृशानुमितिनाशानन्तरं प्रात्यक्षिकसिद्धिसत्त्वेऽप्यनुमितिप्रसङ्गः, प्रत्यक्षात्मक-सिद्धेस्तादृशक्षणाव्यवहितोत्तरक्षणवृत्ति-स्वभिन्नानुमितिकत्वेनाप्रतिबन्धकत्वादत आह—'उत्पत्तिके'ति।

अनुमितिपदञ्च प्रकृतानुमितिपरम्। अन्यथा वह्निव्याप्यवान् वह्निमांश्च पर्वतो घटव्याप्यवानिति प्रत्यक्षस्य स्वाव्यवहितोत्तरक्षणोत्पत्तिक-घटानुमितिकत्वेन वह्न्यनुमित्यविरोधित्वेन(ढ) तत्रापि पक्षताप्रसङ्गादिति।

## दीधितिः

तन्न; यत्र अनुमित्सानाशकाले प्रात्यक्षिकी सिद्धिः, अथ च(२) परामर्शानुमिती, तत्र पक्षताविरहप्रसङ्गात्।

## दीधितिप्रकाशः

'यत्र अनुमित्से'त्यादि,—अनुमित्यात्मकसिद्धौ अनुमित्सायाः फलोपहितत्वेनानुत्तेजकत्वं(ण) स्यादतः 'प्रात्यक्षिकी'ति। 'अनुमित्सानाशकाल' इत्यनेन तादृशसिद्ध्युत्पत्तिक्षणस्यानुमितिप्राक्क्षणस्य च सिषाधयिषाविरहविशिष्टत्वं सूचितम्।

'अथ च परामर्शानुमिती' इत्यनेन सिद्धेः परामर्शाव्यवहितत्वेन तादृशस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नत्वं सूचितम्।

(१) ग्रन्थविशेषे 'पूर्वे'ति पाठो नास्ति। (२) ग्रन्थविशेषे 'अथ चे'त्यत्र चकारो नास्ति।

(ढ) 'वह्न्यनुमित्यविरोधित्वेने'ति,—अनुमितौ प्रकृतत्वानिवेशे सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिक-यत्किञ्चिदनुमितिकसिद्धिभिन्नायाः सिषाधयिषाविरहविशिष्टाया एव विरोधित्वात् प्रकृतायाः सिद्धेश्चातथात्वादिति भावः।

(ण) 'अनुत्तेजकत्व'मिति—स्वविषयसिद्ध्यनुपहिताया एव सिषाधयिषाया अत्रापि निवेशादिति भावः।

## दीधितिः

अथ प्रथममपेक्ष्य द्वितीयस्यैव द्वितीयमपेक्ष्य तृतीयस्याप्यव्यवहितोत्तरत्वम्। स्वध्वंसाधिकरणकालध्वंसानधिकरणत्वे सति स्वाधिकरणकालध्वंसाधिकरणत्वं वा तादृशाव्यवहितोत्तरत्वं वाच्यम्।

## दीधितिप्रकाशः

'द्वितीयमपेक्ष्ये'ति,—तथा च स्वाधिकरणक्षणं तत्तद्व्यक्तित्वेनोपादायाव्यवहितोत्तरत्वं निर्वाच्यम्(१)। अन्यथा स्वाधिकरणक्षणध्वंसानधिकरणत्वस्य तृतीयक्षणे असम्भवेनासङ्गत्यापातात्। तत्तद्व्यक्तित्वेनोपादाने च स्वाधिकरणीभूततत्तत्क्षणध्वंसाधिकरणक्षणध्वंसानधिकरणत्वे सति तादृशक्षणध्वंसाधिकरणत्वं तृतीयक्षणेऽप्यविकलमिति भावः।

तत्तद्व्यक्तित्वेन निवेशे गौरवादाह—'स्वध्वंसे'ति। 'स्वं' सिद्धिः। विषयितया स्वध्वंसाधिकरणज्ञानध्वंसाधिकरणत्वादसम्भव इत्यत आह—'काले'ति कालिकसम्बन्धेनाधिकरणत्वप्रापकम्। तत्र गुरुत्वात् क्षणत्वं नोपात्तम्। स्वध्वंसाधिकरणीभूतः(२) कालः स्वतृतीयक्षणः, तद्ध्वंसानधिकरणत्वे सतीत्यर्थः। तेन चतुर्थादिक्षणव्युदासः। स्वपूर्वकालवारणाय विशेष्यम्(त)। तत्रापि स्वाधिकरणज्ञानध्वंससत्त्वात् 'काले'ति(थ)।

स्वाधिकरणत्वेनैव(द) स्वपूर्वकालवारणेऽपि अनुमित्युत्पत्तिक्षणवारणाय गुरुतरारम्भः। अन्यथा तत्रानुमितेरपि(३) तादृशाव्यवहितोत्तरस्योत्पत्तिक्षणोत्पत्तिकानुमितिकत्वेन तद्भिन्नसिद्धेरभाव(४)सत्त्वादनुमित्यनन्तरं पुनरनुमित्यापत्तिः स्यादिति।

---

(१) 'अव्यवहितोत्तरत्वं वाच्य'मिति पाठान्तरम्। (२) 'स्वध्वंसाधिकरणकाल' इति पाठान्तरम्। (३) 'तदनुमितेरपि' इति पाठान्तरम्। (४) 'सिद्धेरभावस्य' इति पाठान्तरम्।

(त) 'विशेष्य'मिति—स्वाधिकरणकालध्वंसाधिकरणत्वमित्यर्थः।

(थ) 'काले'ति—पूर्ववत् कालिकसम्बन्धेनाधिकरणत्वप्रापकमिति शेषः।

(द) 'स्वाधिकरणत्वेनैवे'ति—स्वाधिकरणकालध्वंसाधिकरणत्वरूपगुरुतरनिवेशमपहाय लघुतर-स्वाधिकरणत्वमात्रनिवेशेनैवेत्यर्थः

## दीधितिः

तथा च यत्र क्रमेण सिद्धि-सिषाधयिषानुमितयः, तत्र प्रथमक्षणे पक्षतावारणाय उत्तरक्षणस्य विशेषणं प्रथमं विशिष्टान्तम्। द्वितीयन्तु सिद्धेस्तत्रैव द्वितीयक्षणे पक्षतासम्पत्तये।

## दीधितिप्रकाशः

नन्वेवं स्वक्षणे सिषाधयिषाविरहविशेषणं व्यर्थम्; यत्र क्रमेण सिषाधयिषाप्रात्यक्षिकसिद्धिपरामर्शानुमितयः, तत्र तादृशसिद्धेर्निरुक्तस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकत्वेन तदन्यसिद्धेरभावस्य सत्त्वादतः प्रकारान्तरेण तत्प्रयोजनमाह—'तथा चे'ति। सिद्ध्यनन्तरं तृतीयक्षणे सिषाधयिषायां सिषाधयिषातृतीयक्षणे अनुमित्युत्पत्तौ वा सिद्धेः स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकत्वं न घटत इत्यतः 'क्रमेणे'ति—अविरलक्रमेणेत्यर्थः।

'प्रथमक्षण' इति,—तादृशसिद्धेः स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकत्वेन तदन्यसिद्धेरभावस्य प्रथमक्षणेऽपि सत्त्वादित्यर्थः। 'उत्तरक्षणस्ये'ति,—स्वक्षणस्य(१) विशेषणे तादृशसिद्धेरुत्पत्तिक्षणस्य सिषाधयिषाविरहविशिष्टत्वेन प्रथमक्षणे(२) तत्र पक्षतावारणासम्भवादिति। 'उत्तरक्षणस्य' तादृशसिद्धेरव्यवहितोत्तरक्षणस्य(३)। तथा च तादृशसिद्धेरव्यवहितोत्तरक्षणस्य सिषाधयिषाविशिष्टत्वेन सिषाधयिषाविरहविशिष्टो यः स्वक्षणाव्यवहितोत्तरक्षणः, तदुत्पत्तिकानुमितिकं यत् (४) तद्भिन्नायास्तादृशसिद्धेः प्रथमक्षणेऽपि सत्त्वान्न पक्षतेति भावः।

'द्वितीयन्तु' सिद्धेर्विशेषणमित्यनुषज्यते। 'तत्रैवे'ति,—अन्यथा तादृशसिद्धेः प्रथमक्षण इव द्वितीयक्षणेऽपि सत्त्वान्न पक्षता स्यादिति भावः।

## दीधितिः

यदि पुनरिच्छाजनिका सामग्री प्रतिबध्नात्यनुमितिं, तदानुमित्यव्यवहितपूर्ववर्त्तिसिद्धिभिन्नसिद्ध्यभावमात्रं पक्षतेति चेत्; तादृशसिद्धीनां तत्तद्व्यक्तित्वेनाभावः कारणम्, निरुक्तरूपविशिष्टत्वेन वा ?

(१) 'प्रथमक्षणस्य' इति पाठान्तरम्। (२) ग्रन्थविशेषे 'प्रथमक्षण' इति पाठो नास्ति। (३) ग्रन्थविशेषे 'उत्तरक्षणस्य तादृशसिद्धेरव्यवहितोत्तरक्षणस्य' इत्यंशो नास्ति। (४) 'यद्यत् स्वम्' इति क्वचित् पाठः।

नाद्यः ; अनन्तकार्य्यकारणभावप्रसङ्गात् , तादृशसकलसिद्धौ अनुमित्सा-विरहविशेषणदानस्य व्यर्थत्वात् , तत्तत्समयसम्बन्धव्यक्तीनां तत्तत्समया-वच्छिन्न-तत्तन्मनोयोगादीनां वा प्रतिबन्धकत्वप्रसङ्गाच्च ।

नान्त्यः ; सत्यपि परामर्शादौ कस्याश्चित् सिद्धेरनन्तरमनुमितिः, कस्याश्चि-न्नेत्यत्र नियामकाभावात् ।

## दीधितिप्रकाशः

'इच्छाजनिके'ति ,—तथा च प्रथमक्षणे पक्षतासत्त्वेऽपि न क्षतिः । तदानी-मनुमित्युत्पादस्येच्छाजनकसामग्र्या प्रतिबन्धेनैवाभावादिति भावः । इच्छा-घटितसामग्र्या एव प्रतिबन्धकत्वं दृष्टम् , नेच्छाजनकसामग्र्या इत्यतस्तत्प्रतिबन्ध-कत्वस्य सन्दिग्धतां दर्शयति 'यदि पुन'रिति । 'तदानुमिती'ति,—यद्यपि यत्रा-पेक्षाबुद्ध्यात्मकसिद्धिः, तत इष्टसाधनताधीः, ततः सिषाधयिषा, ततोऽनुमिति-स्तत्र तादृशसिद्धेरपि निरुक्तस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकत्वेन तदन्य-सिद्धेरभावस्य प्रथमक्षणेऽपि सत्त्वादिच्छासामग्र्यभावाच्च इष्टसाधनताधीकाले अनुमित्यापत्तिरत इच्छासामग्र्याः प्रतिबन्धकत्वेऽपि सिषाधयिषाविरहविशिष्टत्वं विशेषणं तत्रावश्यकम्, तथापि अपेक्षाबुद्धेः द्वे(१) द्रव्ये इति प्रत्यक्षान्यथानु-पपत्त्या(ध) क्षणत्रयावस्थायित्वम् , अत्र(२) च तादृशप्रत्यक्षाभावान्न क्षणत्रया-वस्थायित्वमित्यभिप्रेत्यैतदुक्तम्(३) । स्वाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिक-सिद्धिभिन्नसिद्ध्यभावस्य बहुव्रीहिद्वयानुप्रवेशेन(४) गुरुत्वात्तदुपेक्षितम् ।

अनुमित्यव्यवहितपूर्वत्वञ्च तदनुमित्युत्पत्तिकालोत्पत्तिकध्वंसप्रतियोगि-त्वम् । तादृशक्षणवृत्ति-सिद्धिभिन्नसिद्धीनामभाव इत्यर्थः । मात्रपदेन सिषाधयिषा-

---

(१) ग्रन्थविशेषे 'द्वे' इति पाठो नास्ति । (२) 'तत्र च' इति पाठान्तरम् । (३) 'प्रेत्य तदुक्तम्' इति पाठान्तरम् । (४) 'बहुव्रीह्यर्थप्रवेशेन' इति पाठान्तरम् ।

(ध) आदौ अपेक्षाबुद्धिस्ततो द्वित्वोत्पत्तिस्ततो द्वित्वद्वित्वत्वे इति निर्विकल्पकं ततो द्वित्वप्रत्यक्षमिति क्रमेण अपेक्षाबुद्धिचतुर्थक्षणे द्वित्वप्रत्यक्षं जायते, तत्र यदि अपेक्षाबुद्धेः स्वोत्पत्तितृतीयक्षणे नाशः स्यात् , तदा अपेक्षाबुद्धिनाशाच्चतुर्थक्षणे द्वित्वनाशः स्यात् । ततो विषयस्य प्रत्यक्षं प्रति हेतुत्वात् तदभावेन चतुर्थक्षणे द्वित्वप्रत्यक्षं नोपपद्येतेति भावः ।

विरहविशेषणव्युदासः। सिद्ध्यभावस्य पक्षतात्वसम्पत्तये चरमसिद्धिपदं सार्थकयितुं(१) प्रथमं सिद्धिपदम्। अखण्डाभावघटकतया वा अस्य(२) न वैयर्थ्यम्। तथा च अनुमित्यव्यवहितपूर्वक्षण(३)वृत्तिसिद्धिभिन्नस्य परामर्शादेः प्रतिबन्धकत्वापाताच्चरमसिद्धिपदम्।

क्वचित्तु अनुमित्यव्यवहितपूर्वक्षणवृत्ति(४)भिन्नसिद्ध्यभावमात्रमिति पाठः। तत्र सिद्धिपदस्याखण्डाभावसम्पादकतया न वैयर्थ्यम्। 'तादृशसिद्धीनाम्'। सिषाधयिषाविरहविशिष्ट— स्वक्षणाव्यवहितक्षणोत्पत्तिकानुमितिकभिन्नसिद्धीनाम्। 'निरुक्ते'ति(५),—'निरुक्तरूपम्' सिषाधयिषाविरहविशिष्टेत्यादिरूपम्। ननु अनायत्यैवानन्तकार्यकारणभावोऽस्त्वित्यत आह—'तादृशे'ति। ननु अनुमित्यव्यवहितपूर्ववर्त्तिसिद्धिभिन्नसिद्धीनां(६)तत्तद्व्यक्तित्वेनैवाभावः कारणम्, अनुमित्यव्यवहितपूर्ववृत्ति-तादृशसिद्धीनान्तु सिषाधयिषाविरहविशिष्टत्वेन, शब्दैक्यमनुपादेयमेव इत्यत आह—'तत्तदि'ति। आत्मनिष्ठस्य प्रतिबन्धकत्वलाभाय 'सम्बन्धे'ति। यत्र सिद्धिसिषाधयिषानुमितयः, तत्र सिद्धेः प्रथमक्षण एव प्रतिबन्धकत्वम्, तत्र लाघवात् तत्क्षणसम्बन्धस्यैव तथात्वमस्त्वित्यर्थः।

ननु तत्क्षणसम्बन्धस्यात्मान्तरेऽपि सत्त्वात् तदानीमनुमितिर्न स्यात्। न च तदात्मीयतत्क्षणसम्बन्ध एव प्रतिबन्धक इति वाच्यम्; तदात्मा तत्क्षणश्चेत्यनयोऽधिकस्य तदात्मीयतत्सम्बन्धस्याभावादत आह—'तत्तत्समयावच्छिन्ने'ति। 'तत्तन्मनोयोगे'ति,—यत्र आत्मनि यदा अनुमितिर्नोत्पद्यते, तदात्मीयमनोयोग एव तद्व्यक्तित्वेनोपादेय(७) इत्यर्थः। आदिना तदात्मीयपरिमाणादिसंग्रहः।

यद्यप्येवं तत्तत्क्षणावच्छिन्नसिद्धिव्यक्तेरपि प्रतिबन्धकत्वमागतमेव विनिगमनाविरहात्, तथाप्येतादृशानन्तप्रतिबध्यप्रतिबन्धकभावे मानाभाव इत्यत्र

(१) 'सार्थकीकर्त्तुम्' इति पाठान्तरम्। (२) 'अखण्डाभावतया च न वैयर्थ्यम्' इति पाठान्तरम्। (३) 'पूर्ववृत्ति' इति पाठान्तरम्। (४) 'पूर्वक्षणवर्त्ति' इति पाठान्तरम्। (५) ग्रन्थविशेषे 'निरुक्तेति' इति प्रतीकधारणं नास्ति। (६) 'पूर्ववर्त्तिभिन्नसिद्धीनाम्' इति पाठान्तरम्। (७) 'मनोयोगस्तद्व्यक्तित्वेनोपादेय' इति पाठान्तरम्।

तात्पर्य्यम्। अत्र च सामान्यतः प्रकृतानुमितित्वमेव कार्य्यतावच्छेदकम्, न तु तत्तदनुमितित्वम्। सामानाधिकरण्यप्रत्यासत्त्या प्रतिबन्धकत्वकल्पनान्नातिप्रसङ्ग-गन्धोऽपीति। 'परामर्शादि' वित्यादिपदेनात्ममनोयोगादिपरिग्रहः।

## दीधितिः

न वा कारणतावच्छेदकावच्छिन्नसमाजाधीनकार्य्योत्पादादिकं कारणता-वच्छेदककोटौ निविशते; तथा सति उत्पत्तिकालावच्छिन्नत्वविशेषितेन स्वक्षणा-व्यवहितोत्तरक्षणोत्पत्तिकस्वसमानाधिकरणानुमितिकसविषयकत्वेन, स्वसमानाधि-करणानुमित्यव्यवहितपूर्वक्षणोत्पन्नसविषयकत्वेन, स्वक्षणाव्यवहितोत्तरक्षणानुत्-पत्तिकस्वसमानाधिकरणानुमितिकभिन्नसविषयकत्वेन वा; किं वा स्वसमानाधि-करणानुमित्यव्यवहितपूर्वक्षणवृत्तित्वविशिष्टज्ञानत्वादिना कारणत्वं स्यात्। अव्य-वहितोत्तरश्च द्वितीयक्षण एवेति नातिप्रसङ्गः।

## दीधितिप्रकाशः

ननु उक्तरूप(१)विशिष्टाभाव एव नियामकः। न च नियामकान्तरकल्पनं विना तदेव दुर्ज्ञेयमिति वाच्यम्; तस्य स्वरूप(२)सत एव(न) हेतुत्वेन तदज्ञानेऽपि क्षतिविरहादत आह—'न वे'ति। कार्य्योत्पादस्य कारणतावच्छेदककोटिप्रवेशे तद-वच्छिन्नस्य पूर्वकाले असत्त्वात् कार्य्योत्पादो न स्यादित्येतत्सूचनाय कारणता-वच्छेदकावच्छिन्नसमाजाधीनेत्युक्तम्। कार्य्योत्पादादिकमित्यादिपदेन प्रतिबन्धका-धीनकार्य्यानुत्पादपरिग्रहः(३)।

'तथा सति' कारणतायाः फलगर्भत्वे(४)सति। परामर्शेन संस्कारेण वा स्वाव्यवहितोत्तरक्षणे अनुमित्युत्पादानन्तरं क्षणान्तरे(५) अनुमितिजननस्य वारणाय 'उत्पत्तिकालावच्छिन्नत्वे'ति वक्ष्यमाणत्रितयान्वितम्। कालोऽत्र क्षणः; तेन तादृशस्थूलकालोपाधि(६)मादाय नातिप्रसङ्गः।

---

(१) 'उक्तविशिष्टे'ति क्वचित् पाठः। (२) 'स्वरूपत एव' इति क्वचित् पाठः। (३) 'प्रतिबन्धकसत्त्वाधीनकार्य्यानुत्पत्तिपरिग्रह' इति पाठान्तरम्। (४) 'तथा सति' इत्यादिः 'गर्भत्वे सति' इत्यन्तोऽंशः पुस्तकविशेषे न दृश्यते। (५) 'अनुमित्युत्पत्त्यनन्तरक्षणे' इति पाठान्तरम्। (६) 'कालमादाय' इति पाठान्तरम्।

(न) 'स्वरूपसत एव'—अज्ञायमानस्यैव।

'स्वक्षणे'ति,—क्षणः समयः। घटज्ञानादेरप्युत्तरक्षणे(प) समानाधिकरणानुमित्युत्पादात् तद्वारणाय 'अव्यवहिते'ति। स्वकालाव्यवहितोत्तरकालः स्वकालध्वंसाधिकरणकालध्वंसानधिकरणत्वे सति स्वकालध्वंसाधिकरणकालः, स च द्वितीयक्षणपर्य्यन्तस्थायी स्वपूर्वकालस्थायी स्थूलकालोपाधिः(फ)। तथा च घटज्ञानादेरपि तादृशस्वाव्यवहितोत्तरस्थूलकालोत्पत्तिक-स्वपूर्वकालीनानुमितिकतया तथैवातिप्रसङ्ग इत्यतः 'क्षणे'ति।

यत्र परामर्शानुमिति-संस्कारा-(१) वेकदैव जनितौ, तत्र स्वद्वितीयक्षण-वृत्ति-तादृशानुमितिकेन तेन संस्कारेण(ब) स्वद्वितीयक्षणे अनुमितिजननप्रसङ्ग इत्यत आह—'उत्पत्तिके'ति।

यत्र चैत्रस्य घटज्ञानाव्यवहितोत्तरक्षणे मैत्रस्यानुमितिस्तत्र तादृशघटज्ञानस्यापि निरुक्तरूपशालित्वाच्चैत्रस्याप्यनुमितिजननप्रसङ्ग(२) इत्यतः 'स्वसमानाधिकरणे'ति। घटव्याप्यवान् पर्व्वत इति परामर्शस्य स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकघटानुमिति-

(१) 'अनुमिति संस्कारश्चैकदैव' इति पाठान्तरम्। (२) 'यत्र चैत्रीय-परामर्शानुमितिस्तत्र तादृशमैत्रीयघटज्ञानस्यापि निरुक्तरूपशालित्वान्मैत्रस्याप्यनुमिति-जननप्रसङ्ग' इति क्वचित् पाठः।

---

(प) 'उत्तरक्षणे'—अव्यवहितोत्तरक्षणे। 'तद्वारणाय'—उत्तरत्वमात्रघटित-तादृशसविषयकत्वेन घटज्ञानमुपादाय तदव्यवहितोत्तरक्षणे अनुमित्यापत्तिवारणायेत्यर्थः। घटज्ञानादेरपि स्वक्षणाव्यवहितपूर्वक्षणोत्पत्तिक-स्वसमानाधिकरणानुमितिकसविषयत्वेनातिप्रसङ्ग इत्युत्तरपदम्।

(फ) 'स्थूलकालोपाधि'रिति—स्थूलकालोपाधिरपीत्यर्थः।

(ब) अनुमितौ स्वेतरत्वनिवेशेनैव प्रकृतस्थले अनुमित्या अनुमितिजननस्यापादयितुमशक्यत्वेन संस्कारानुधावनम्। न च तथापि स्वासमानकालीनत्वमेवानुमितौ निवेश्यतां, तेनैव संस्कारवारणसम्भवादिति चेन्न असम्भवापत्तेः, उत्पत्तिकालावच्छिन्नतादृशसविषयकत्वावच्छिन्नजन्यानुमितिमात्रस्यैव स्वसमानकालीनत्वादिति भावः। वस्तुतस्तु अनुमितौ स्वेतरत्वनिवेशे यत्र साध्यानुमितिद्वयं जायतामितीच्छया साध्यतद्व्याप्ययोरपेक्षाबुद्ध्यात्मकानुमित्यनन्तरं साध्यमात्रानुमितिः, तत्र साध्यस्यानुमित्यन्तरप्रसङ्गस्य वारणायैवानुमितौ स्वेतरत्वनिवेशानुगृहीतवृत्तित्वनिवेशेनोत्पत्तिनिवेशगौरवं न शक्यमपोहितुमिति।

कस्याव्यवहितोत्तरक्षणे वह्न्यनुमित्युत्पादप्रसङ्ग इत्यतः 'अनुमिती'ति—प्रकृतानुमितीत्यर्थः(भ)।

यत्र चैत्रमैत्रवृत्तिद्वित्वाव्यवहितोत्तरक्षणे मैत्रस्यानुमितिर्जाता, तत्र तादृशद्वित्वस्यापि निरुक्तरूपशालित्वात् तेन चैत्रस्यानुमितिजननप्रसङ्ग इत्यतः "सविषयकत्वेने'ति। सिषाधयिषा-संस्कारसाधारण्याय ज्ञानत्वमुपेक्षितम्(म)।

एतस्य स्वत्वद्वयघटितत्वाद् बहुव्रीहिद्वयप्रवेशेन च(१) गुरुत्वादाह—'स्वसमानाधिकरणे'ति। स्वम् अनुमितिजनकत्वेनाभिमतम् परामर्शादि। तदव्यवहितपूर्वत्वं(य) तदुत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगित्वम्। अनुमित्युत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगिस्थूलकालोत्पन्नज्ञानादि(र)वारणाय 'क्षणे'ति।

यस्य(२) परामर्शस्य संस्कारस्य वा अन्तिमक्षण(ल) एवानुमितिः, तस्यापि तादृशानुमित्यव्यवहितपूर्वक्षणवृत्तित्वेन तदुत्पत्तिद्वितीयक्षणे अनुमिति(व)प्रसङ्ग इत्यत'स्तदुत्पन्ने'ति। अत्र उत्पत्तिरुपलक्षणम्, तेन 'उत्पत्तिकालावच्छिन्नत्वे'त्यस्यापि सार्थकत्वम्। उत्पत्तेर्विशेषणत्वे उत्पत्तिघटकीभूताद्यत्वस्य वैयर्थ्यात्, तादृशानुमित्यव्यवहितपूर्वक्षणवृत्तित्वविशिष्टत्वेनैवातिप्रसङ्गभङ्गात्। तच्च 'किं चे'त्यनेन वक्ष्यते। पदान्तरप्रयोजनन्तु पूर्ववदुन्नेयम्।

(१) 'प्रवेशाच्च' इति पाठान्तरम्। (२) 'यत्रे'ति क्वचित् पाठः।

---

(भ) 'प्रकृतानुमिती'ति—प्रकृतसाध्यपक्षकानुमितीत्यर्थः। तेन वह्निव्याप्यधूमवन्महानसमित्यादिपरामर्शस्य स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिक-महानसपक्षकवह्निसाध्यकानुमितिकस्याव्यवहितोत्तरक्षणे पर्वतपक्षकवह्निसाध्यकाद्यनुमित्युत्पादप्रसङ्गोऽपि निरस्त इति ध्येयम्।

(म) इत्थञ्च यत्र क्रमेण सिद्ध्यात्मकपरामर्श-सिषाधयिषानुमितयः तत्र सिषाधयिषायाः, यत्र च परामर्शजन्यसंस्कारानुमितयस्तत्र तत्रत्यसंस्कारस्य तेन रूपेण कारणत्वोपपत्तिः।

(य) 'तदव्यवहितपूर्वत्व'मिति—स्वसमानाधिकरणानुमित्यव्यवहितपूर्वत्वमित्यर्थः।

(र) 'ज्ञानादिवारणाये'ति—कालमात्रघटिततादृशरूपावच्छिन्नकारणतया तादृशज्ञानादेः परिग्रहनिरासायेत्यर्थः।

(ल) 'अन्तिमक्षण' इति-अन्तक्षणे नाशक्षण इति यावत्। जगदीशेन तदुव्यावृत्तिप्रदर्शनावसरे 'यत्र परामर्शेन स्वनाशक्षणे अनुमितिर्जन्यते' इत्येव स्पष्टमुक्तम्।

(व) 'अनुमितिप्रसङ्ग'—इति,—अत्र कल्पे उत्पत्तिवद् वृत्तित्वस्योपलक्षणत्वाभिप्रायेणैवेदम्।

नन्वत्र अनुयोगिनि स्वत्वप्रवेशात् स्वत्वस्यानुगतस्याभावात् कथमनुगतकार्यकारणभाव इत्यत आह —'स्वक्षणे'ति। अत्र स्वशब्देन यस्य ज्ञानादेरव्यवहितोत्तरक्षणे नानुमित्युत्पादः, तस्यैवाभिधानम्। तावद्भेदकूटवत्सविषयकत्वस्य चानुगतत्वान्नाननुगमः(श)।

अत्रापि 'स्वक्षणे'त्यत्र क्षणः समयः। अव्यवहितपद-द्वितीयक्षणपदादिप्रयोजनन्तु पूर्ववत्। अत्राप्युत्पत्तिकालावच्छिन्नत्वेत्यनुषज्यते(१); तेन यस्य परामर्शस्य संस्कारस्य वा(२) अव्यवहितोत्तरक्षणे अनुमितिः, तस्यापि कारणतावच्छेदकाक्रान्तत्वान्न पुनरनुमित्युत्पादप्रसङ्गः।

न चैवमुत्पत्तेः(ष) स्वत्वघटितत्वेन कथमेवंक्रमेणाप्यनुगम इति वाच्यम्; स्वाधिकरणसमयध्वंसविशिष्ट(स)स्वाभावकूटस्य विशेषणत्वात्(३)।

ननु ज्ञानेच्छासंस्कारादिसाधारणं सविषयत्वं नैकम्, अतिरिक्तविषयताया अनभ्युपगमात्, एवम् अनुमित्यव्यवहितपूर्वक्षणे नियमतः सविषयकपदार्थोत्पत्तौ मानाभावाच्चेत्यत आह—'किं वे'ति। अनुमित्यव्यवहितपूर्वक्षणे परामर्शस्यावश्यकत्वान्न ज्ञानत्वंघटितोक्तरूपावच्छिन्नस्यानुमितिजनकत्वे व्यभिचारः।

(१) 'च्छिन्नत्वेत्यस्यापि अनुषङ्गः' इति पाठान्तरम्। (२) ग्रन्थविशेषे 'संस्कारस्य वा' इति पाठो नास्ति। (३) ग्रन्थविशेषे 'प्रसङ्ग' इत्यनन्तरं 'ननु ज्ञानेच्छे'त्यादितः पूर्वं 'नचैवमुत्पत्तेः स्वत्वघटितत्वेन कथमेवंक्रमेणाप्यनुगम इति वाच्यम्; स्वाधिकरणसमयध्वंसविशिष्टस्वाभावकूटस्य विशेषणत्वा'दिति ग्रन्थो न दृश्यते।

(श) अत्र कल्पे प्रतियोगिनि स्वत्वान्तर्भावात् तावद्भेदकूटवत्त्वेनानुगमः।

(ष) 'उत्पत्ते'रिति—उत्पत्तिकालावच्छिन्नत्वघटकीभूताया इति शेषः।

(स) प्रकृते ध्वंसवैशिष्ट्यं स्वपदार्थांशे विशेषणम्। तच्च कालिकसम्बन्धेन बोध्यम्। स्वपदेन तत्तद्व्यक्तीनामुपग्रहेऽपि तावदभावगतकूटत्वस्यैक्यादननुगमदोषशङ्कानिरासः। परामर्शसंस्कारादावुत्पत्तिकालावच्छेदेनैव तादृशध्वंसविशिष्टस्वाभावकूटस्य सत्त्वं, न द्वितीयादिक्षणेऽपीति प्रागुक्तोत्पत्तिकालावच्छिन्नत्वविशेषणमनेन गतार्थमिति ध्येयम्।

एकेन परामर्शेनानुमितिजननानन्तरं पुनरनुमितिजननस्य वारणाय तादृशाऽव्यवहितपूर्वक्षणवृत्तित्वविशिष्टत्वमुक्तम्(ङ)। द्वित्वादिवारणाय ज्ञानत्वमुक्तम्(च)। शेषं पूर्ववत्। आदिपदेन तादृशसंस्कारत्व-तादृशसंयोगत्व-धर्मत्वादीनां(१) संग्रहः।

ननु पूर्वोक्त-स्वाव्यवहितोत्तरत्वस्य तृतीयक्षणसाधारणतया येन परामर्शेन विनश्यदवस्थेनानुमितिर्जनिता(क), तेन(२) स्वद्वितीयक्षणेऽप्यनुमितिजननापत्तिरत आह—'अव्यवहितोत्तरश्चे'ति। तथा च वक्षु सर्वेषु स्वाधिकरणकालध्वंसाधिकरणकालध्वंसानधिकरणत्वे सति स्वाधिकरणकालध्वंसाधिकरणत्वमेवाव्यवहितोत्तरत्वं निर्वाच्यम्(छ)। तत्रापि विशेष्यदले स्वाधिकरणत्वेनैव स्वपूर्वगोष्ठीवारणेऽपि स्वोत्पत्तिक्षणवारणाय 'कालध्वंसे'ति। तद्वारणफलन्तु अनुमित्युत्पत्तिकालोत्पत्तिकसंस्कारेणानुमित्युत्तरक्षणे(ग) अनुमित्यन्तरापत्तिवारणमिति(३)।

## दीधितिः

न च आदिमेषु त्रिषु परामर्शस्थितिक्षणे यत्र विरोधिसिद्ध्यादिनाशः(घ), तत्रोत्तरक्षणे अनुमितिर्न स्यात्, परामर्शस्यातथात्वादिति वाच्यम्; अनुमिति-

(१) 'तादृशसंयोगत्वादीना'मिति क्वचित् पाठः। (२) 'तेन परामर्शेन' इति क्वचित् पाठः। (३) 'अनुमित्यन्तरोत्पत्तिवारणमिति' इति पाठान्तरम्।

(ङ) पूर्वक्षणवृत्तित्ववैशिष्ट्यन्तु पूर्वक्षण एव, न तु क्षणान्तर इति नातिप्रसङ्गः।

(च) अन्यथा अनुमित्यव्यवहितप्राक्क्षणे सिद्ध्यनात्मकपरामर्शवति तद्भिन्ने चात्मनि सिद्ध्यात्मकपरामर्शवति यद् द्वित्वमुत्पन्नं तस्याप्यनुमित्यव्यवहितप्राक्क्षणवृत्तित्वविशिष्टत्वादिरूपकारणतावच्छेदकधर्माक्रान्तत्वात् तद्बलेन सिद्ध्यात्मकपरामर्शवति निरुक्तात्मन्यपि प्रकृतानुमितिप्रसङ्गादिति ध्येयम्।

(क) 'अनुमितिर्जनिते'ति—स्वतृतीयक्षणे अनुमितिरुत्पादिता, पूर्वोत्पन्नविरोधिसिद्ध्यादिवशाच्च न स्वद्वितीयक्षण इति शेषः।

(छ) अत्र सत्यन्तदलं स्वोत्पत्तिक्षणोत्तरतृतीयक्षणादिरूपक्षणगोष्ठीवारकं विशेष्यदलञ्च स्वपूर्वक्षणगोष्ठीवारकम् स्वोत्पत्तिक्षणवारकञ्चेति।

(ग) संस्कारेणेति अनुमित्यव्यवहितपूर्वोत्पन्नपरामर्शादिप्रभवेण संस्कारेणेत्यर्थः। उत्पत्तिक्षणस्यावारणे संस्कारोत्पत्तिक्षण एव संस्काराव्यवहितक्षणः, प्रकृते तत्क्षणोत्पत्तिकानुमितिकक्षणासाविति भवत्येवातिप्रसङ्ग इति ध्येयम्।

(घ) परामर्शस्थितिक्षणे सिद्ध्यादिनाशोक्त्या परामर्शोत्पत्तिक्षणे सिद्ध्यादिसत्त्वसूचनात् परामर्शस्थितिकाले प्रकृतानुमितिप्रसङ्गशङ्का वारिता।

सामग्र्या विरोधिन्या विरहेण तदानीमुत्पन्नादनुव्यवसायादेरन्ततः संस्कारादा तत्-सम्भवात्। संस्कारजन्यत्वेन स्मृतित्वस्य प्रागेव(१) निरासात्।

## दीधितिप्रकाशः

'न च(घ) आदिमेष्वि'ति,—चतुर्थे तु परामर्शस्यैवानुमित्यव्यवहितपूर्वक्षण-वृत्तित्वविशिष्टस्य(२) सत्त्वान्नाप्रसङ्गः। सिद्ध्यादीत्यादिना बाधादिपरिग्रहः। 'अतथात्वात्' स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकतादृशानुमितिकत्वाभावात्।

'तदानीं' परामर्शस्थितिक्षणे। ननु यत्र कामिनीलौकिकप्रत्यक्षात्मकः परामर्शो जायतामितीच्छानन्तरं विनश्यदवस्थसन्निकर्षेण कामिनीलौकिकप्रत्यक्षात्मकः परामर्शो जनितः(ङ), तत्र द्वितीयक्षणे ज्ञानमात्रस्यैवानुत्पत्तिः, कामिनीजिज्ञासाया एव प्रति-बन्धकत्वात्, न वा पुनः कामिनीलौकिकप्रत्यक्षं सन्निकर्षाभावात्, तत्र तृतीयक्षणे अनुमितिर्न स्यात् तादृशसविषयाभावात्। एवं यत्र 'एतत्परामर्शाव्यवहितो-त्तरक्षणे अन्यज्ञानं मा भवतु'(३) इतीच्छया मन्त्रादिकमौषधादिकं वा प्रयुक्तं तत्रापीत्यतस्तत्रापि तादृशं संस्कार(च)मुपपादयति 'अन्तत'(४) इति। 'तत्सम्भवात्' अनुमितिसम्भवात्। तस्या(५) अनुमितेः संस्कारजन्यत्वेन(६) स्मृतित्वापत्तिरत आह—'संस्कारे'ति। 'प्रागेव' सुतराम्। संस्कारत्वेन संस्कारजन्यज्ञानत्वस्य

(१) 'द्रागेव' इति पाठान्तरम्। (२) 'पूर्ववर्त्तित्वविशिष्टस्य' इति पाठान्तरम्। (३) 'न भवतु' इति पाठान्तरम्। (४) 'अन्ततः संस्कारादिति' इति पाठान्तरम्। (५) 'ननु अनुमितेः' इति पाठान्तरम्। (६) क्वचित् 'जन्यत्वे' इति सप्तम्यन्तपाठः।

(ङ) 'परामर्शो जनित' इति,—न च कामिनीजिज्ञासाया ज्ञानसामान्यं प्रति प्रतिबन्धकत्वात् कथं तत्र परामर्शोत्पत्तिरिति वाच्यम्; कामिनीज्ञानान्यज्ञानसामान्यं प्रत्येव कामिनीजिज्ञासायाः प्रतिबन्धकत्वेन निरुक्तपरामर्शस्य कामिनीज्ञानात्मकतया तदन्यत्वाभावेन न निरुक्तस्थले परामर्शानुपपत्तिः।

(च) 'तादृशं संस्कारमुपपादयती'त्यस्य संस्कारमेव तादृशं स्वक्षणाव्यवहितोत्तरक्षणोत्-पत्तिकानुमितिकादिरूपम् व्यवस्थापयतीत्यर्थः।

स्मृतिसामग्रीजन्यत्वस्य वा स्मृतित्वे प्रयोजकत्वात्, अन्यथा संस्कारजन्यप्रत्यभिज्ञादेरपि स्मृतित्वापातादिति भावः।

## दीधितिः

स्याद्वा स्वसमानाधिकरणानुमित्यव्यवहितपूर्वक्षणवृत्तिभिन्नत्वेन, स्वसमानाधिकरणानुमित्यव्यवहितपूर्वत्वानधिकरणक्षणवृत्तित्वविशिष्टत्वेन वा, स्वसमानाधिकरणानुमित्युत्पत्त्यनधिकरणसमयाव्यवहितपूर्वक्षणवृत्तित्वविशिष्टत्वेन वा प्रतिबन्धकत्वम्। तदव्यवहितपूर्वत्वञ्च तदुत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगित्वम्।

## दीधितिप्रकाशः

ननु उक्तस्थले परामर्शस्यापेक्षात्वे कथं संस्कारसम्भावना ? किं वेत्यादिपक्षेऽपि अनुयोगिनि स्वत्वप्रवेशादननुगमस्तदवस्थ एवेत्यतोऽनुगतरूपेण प्रतिबन्धकत्वमाह—'स्याद्वे'ति। मैत्रीयानुमित्यव्यवहितप्राक्क्षणोत्पन्नसिद्ध्यादिमत(१)श्चैत्रस्य सिषाधयिषाशून्यस्यानुमित्यापत्तेराह—'स्वसमानाधिकरणे'ति। स्वसमानाधिकरणानुमित्यव्यवहितपूर्वक्षणवृत्ति यद्यत् तद्भिन्नत्वेनेत्यर्थः। स्वसामानाधिकरण्यञ्च समवायेन, तेन स्वासमानाधिकरणानुमितेर्विषयतया(२) स्वसमानाधिकरणत्वेऽपि न क्षतिः।

न चैवं ध्वंसादेरपि तादृशपूर्ववृत्तिभिन्नत्वेन(छ) प्रतिबन्धकत्वादनुमितिमात्रस्यैवानुत्पादापत्तिः, अनुमित्यव्यवहितप्राक्क्षणे ध्वंसादिसत्त्वेऽपि समवायेन तदभावस्य सत्त्वादिति (ज) भावः।

(१) 'सिद्ध्यादित' इति पाठान्तरम्। (२) 'स्वव्यधिकरणानुमितेरपि विषयतया' इति पाठान्तरम्।

(छ) 'तादृशे'त्यादि ; प्रकृते सामानाधिकरण्यस्य स्वाधिकरणत्वांशेऽपि समवायघटितस्य निविष्टतया समवायघटितध्वंसादिसामानाधिकरण्यस्याप्रसिद्ध्या तादृशपूर्ववृत्तिभेदकूटवत्त्वमिति भावः।

(ज) एतेन प्रकृते प्रतिबन्धकतावच्छेदकसम्बन्धोऽपि समवाय एव विवक्षित इति सूचितम्।

इदानीन्तनानां(क) सिद्ध्यादीनां सर्वेषामेव(१) प्रायश(ञ)स्तादृशानुमिति-पूर्वक्षणवृत्तित्वात्(२) तादृशानुमित्युत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगि(३)स्थूलकाला-पाख्यात्मक-तादृशानुमित्यव्यवहितपूर्वकालवृत्तित्वाच्चाप्रतिबन्धकतया सिद्ध्य(४)त्तर-मनुमित्यापत्तिरत(५) आह—'अव्यवहिते'ति 'क्षणे'ति वा।

वक्ष्यमाणसिद्ध्यात्मक-परामर्शानन्तरं सिषाधयिषोत्(६)पादकाले तत्पुरुषीय-संयोगादेरवश्यं नाशोत्पत्तौ मानाभावात् सिषाधयिषाप्राक्क्षणवृत्तीनामनुमित्यव्यव-हितप्राक्क्षणवृत्तित्वेनाप्रतिबन्धकत्वात् सिषाधयिषोत्पत्तिकाले अनुमित्यापत्ति-रित्यस्वरसादाह–'स्वसमानाधिकरणे'ति। तादृशानुमित्यव्यवहितपूर्वक्षणवृत्तेरपि(७) परामर्शस्य तादृशानुमित्युत्पत्तिकालोत्पत्तिकध्वंसप्रतियोगित्वरूपाव्यवहितपूर्वत्वा-नधिकरणस्थूलकाल-(८) वृत्तितया प्रतिबन्धकत्वादनुमितिकाले अनुमित्यनापत्तेराह–'क्षणे'ति। क्षणत्वञ्चात्र स्ववृत्तियावद्ध्वंसविशिष्टसमयत्वं विशिष्योपादेयम्; अन्यथा स्वस्वपूर्ववृत्त्युत्पत्त्यादिक्रमेणाद्यक्षणावच्छिन्नस्थिरस्यापि क्षणत्वेन तस्य चानुमित्यव्यव-हितप्राक्क्षणस्यापि निरुक्तानुमित्यव्यवहितपूर्वत्वानधिकरणतया तद्वृत्तित्वविशिष्ट-परामर्शस्य प्रतिबन्धकत्वादनुमितिकाले अनुमित्यनापत्तेः।

तादृशानुमित्यव्यवहितपूर्वक्षणवृत्तेरपि(९) तादृशानुमित्यव्यवहितपूर्वत्वानधि-करणक्षणवृत्तित्वेन(१०) प्रतिबन्धकत्वादनुमितिकाले अनुमितिर्न स्यादतो 'विशिष्ट-त्वेने'ति। अनुमित्यव्यवहितप्राक्क्षणे च अनुमित्यव्यवहितपूर्वत्वानधिकरणक्षण-वृत्तित्वविशिष्टाभावस्य सत्त्वान्नानुमितिप्रतिबन्ध इति भावः।

(१) 'सर्वेषामेव',इति पाठो न सार्वत्रिकः। (२) 'वर्त्तित्वात्' इति पाठान्तरम्। (३) 'स्वपूर्ववर्त्तिस्वानन्तरतृतीयक्षणोत्पन्नध्वंसप्रतियोगि' इति पाठान्तरम्। (४) 'सिद्धेरुत्तर' इति पाठान्तरम्। (५) 'पत्तेराह' इति पाठान्तरम्। (६) 'सिषा-धयिषाया उत्पादकाले' इति पाठान्तरम्। (७) 'वृत्तित्वेऽपि' इति पाठान्तरम्। (८) 'स्थूलकालमहाकालवृत्तितया' इति पाठान्तरम्। (९) 'वर्त्तिनोऽपि' इति पाठान्तरम्। (१०) 'पूर्वत्वानधिकरणतया तद्वृत्तित्वेन' इति पाठान्तरम्।

(क) चरमसिद्ध्यादिव्यक्त्युत्तरमनुमित्यभावेन तादृशसिद्ध्यादिव्यक्तीनां निरुक्तानुमिति-पूर्वक्षणवृत्तित्वविरहादाह 'इदानीन्तनाना'मिति।

(ञ) इदानीन्तनानामपि यत्सिद्ध्यादीनामनन्तरं न तादृशानुमितिः, तेषामपि तादृशानु-मितिपूर्वक्षणवृत्तित्वविरहादाह 'प्रायश' इति।

ननु अनुमित्यव्यवहितपूर्वत्वम् अनुमित्युत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगित्वम्; तथा च तदनधिकरणक्षणवृत्तित्वविशिष्टत्वे क्षणद्वयप्रवेशात् तादृशानुमित्युत्पत्त्यनधिकरणसमयोत्पत्तिकध्वंसप्रतियोगिक्षणवृत्तित्वविशिष्टत्वे एकमात्रक्षणप्रवेशाल्लाघवमित्याशयेनाह — 'स्वसमानाधिकरणानुमित्युत्पत्त्यनधिकरणे'ति। अत्रापि(१) स्ववृत्तियावद्ध्वंसविशिष्टसमयत्वं क्षणत्वम्; तेनानुमितिप्राक्क्षणोत्पन्नस्यानुमितिद्वितीयक्षणोत्पत्तिक-नाशप्रतियोगिनोऽप्यनुमित्यव्यवहित-प्राक्क्षणस्य स्व-स्व-पूर्ववृत्तीत्यादिरूपक्षणत्ववत्त्वान्न तद्वृत्तित्वविशिष्टत्वेन प्रतिबन्धकत्वमिति।

अत्र च क्षणत्वस्य प्रवेशे गौरवात् तादृशस्थूलकालाव्यवहितपूर्वक्षणवृत्तित्वविशिष्टत्वेन प्रतिबन्धकत्वे क्षतिविरहाच्च 'समये'त्युक्तम्। कालिकसम्बन्धेन तादृशोत्पत्त्यधिकरणताया अभावस्य तदुत्पत्तिकेत्यत्र कालिकसम्बन्धेन तदुत्पत्तिकत्वस्य च लाभाय तदुपादानम्; अन्यथा उत्पत्त्यनधिकरणसमयस्याप्येकज्ञानविषयत्वादिसम्बन्धेनोत्पत्त्यधिकरणतया अप्रसिद्धिः स्यात्।

तादृशोत्पत्त्यनधिकरण(२)ज्ञाने अनुमित्यव्यवहितप्राक्क्षणध्वंसोत्पत्तेरपि विषयतया वर्त्तमानत्वात् तत्क्षणवृत्तित्वविशिष्टस्य प्रतिबन्धकत्वे अनुमितिक्षणे अनुमितिर्न स्यादिति। अनुमितिस्थितिक्षणस्याप्यनुमित्यधिकरणतया तदव्यवहितप्राक्क्षणवृत्तित्वविशिष्टस्याप्रतिबन्धकतया अनुमित्युत्तरमनुमित्यापत्तिरत 'उत्पत्ती'ति।

अनुमितिस्थितिक्षणस्यापि(३) अनुमित्युत्पत्त्यनधिकरणतया तदव्यवहितप्राक्कालस्य(४) स्थूलकालोपाधेरनुमित्यव्यवहितप्राक्क्षणेऽपि सत्त्वात् तद्वृत्तित्वविशिष्टत्वेन प्रतिबन्धकत्वे अनुमितिकालेऽप्यनुमितिर्न स्यादतः 'क्षणे'ति। अत्र तादृशसमयाव्यवहितपूर्वत्वं तादृशसमयोत्पत्तिकध्वंसप्रतियोगित्वम्, न तु तादृश-

(१) 'अत्रापि' इत्यारभ्य 'क्षणत्ववत्त्वान्न' इत्यन्तपाठस्थले 'अत्र क्षणत्वं स्ववृत्तियावद्ध्वंसविशिष्टसमयत्वम् अतो नासम्भव इति। अत्र अनुमित्यव्यवहित-प्राक्क्षणस्य स्व-स्व पूर्ववर्त्तीत्यादिरूपस्य अनुमित्युत्पत्त्यनधिकरणसमयाव्यवहितपूर्वत्वाभावान्न' इति क्वचित् पाठः। (२) 'तादृशानुमित्युत्पत्त्यनधिकरण' इति पाठान्तरम्। (३) 'क्षणेऽपि' इति पाठान्तरम्। (४) 'प्राक्क्षणस्य' इति पाठान्तरम्।

समयोत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगित्वं गौरवान्निष्प्रयोजनकत्वाच्च ; तादृशानुमित्युत्पत्त्यनधिकरणस्थूलकालस्य उत्पत्तिस्थितिक्षणसाधारणक्षणसामान्योत्पत्तिकध्वंसप्रतियोगिक्षणवृत्तित्वविशिष्टत्वेन प्रतिबन्धकत्वे क्षतिविरहादिति ।

इदन्त्वत्रावधेयम् (१) ;—यत्र पर्वतो वह्निमान् वह्निव्याप्यवांश्च, पर्वते वह्न्यनुमित्यन्तरमिष्टसाधनमित्याकारक-समूहालम्बनानुमितिः(२), ततो वह्न्यनुमित्यन्तरं जायतामितीच्छा, ततः पुनर्वह्न्यनुमितिः, तत्र इच्छोत्पत्तिक्षणे अनुमितिप्रसङ्गः । क्षणिकपदार्थानभ्युपगमेन स्थिरस्यैवान्त्यक्षणावच्छिन्नस्याद्यक्षणावच्छिन्नस्य वा क्षणतया अन्त्यक्षणावच्छिन्नस्येच्छोत्पत्तिक्षणस्य पूर्वानुमित्युत्पत्त्यधिकरणतया आद्यक्षणावच्छिन्नस्य चोत्तरानुमित्युत्पत्त्यधिकरणतया तादृशानुमित्युत्पत्त्यनधिकरणत्वाभावात् । तस्मात् तादृशसिषाधयिषोत्पत्तिक्षणो नानुमित्युत्पत्त्यधिकरणमिति सर्वसाक्षिकप्रतीतिबलात् तादृशक्षणत्वविशिष्टस्यैव तादृशानुमित्युत्पत्त्यनधिकरणत्वम् । तादृशक्षणत्वविशिष्टत्वावच्छेदेनोत्पत्त्यधिकरणत्वाभावो वानन्यगत्याभ्युपेयः । तादृशोत्पत्त्यधिकरणत्वाभावावच्छेदेन तादृशसमयोत्पत्तिकध्वंसप्रतियोगित्वञ्च तदव्यवहितपूर्वत्वम् ; तेन स्थिरस्यापि किञ्चित्क्षणत्वविशिष्टस्यानुमित्युत्पत्त्यनधिकरणतया अनुमित्यव्यवहितपूर्वक्षणस्य तदुत्पत्तिकध्वंसप्रतियोगित्वेऽपि न क्षतिः(३) । पदान्तरव्यावृत्तिस्तु पूर्ववदुन्नेया(४) ।

ननु अनुमित्यव्यवहितपूर्वत्वानधिकरणत्वघटितलक्षणे तदव्यवहितपूर्वत्वं तदुत्पत्तिक्षणवृत्तिध्वंसप्रतियोगित्वम्, तच्चातिपूर्वक्षणस्यापीति तद्वृत्तित्वविशिष्टाभावमप्रतिबन्धकत्वापत्तिरत आह—'तदव्यवहिते'ति । तथा च तद्ध्वंसस्यानुमित्युत्पत्तिक्षणवृत्तित्वेऽपि तदुत्पत्तिकत्वाभावान्न तस्याव्यवहितपूर्वत्वमिति । अनुमितिक्षणोत्पत्तिकध्वंसप्रतियोगित्वमनुमित्युत्पत्तिक्षणस्यापीति तद्वृत्तित्वविशिष्टस्याप्रतिबन्धकत्वादनुमित्युत्तरमनुमित्यापत्तिरतः 'तदुत्पत्ती'ति ।

(१) 'इदन्त्ववधेयम्' इति पाठान्तरम् । (२) 'लम्बनात्मकानुमितिः' इति पाठान्तरम् । (३) 'क्षतिरिति भाव' इति पाठान्तरम् । (४) 'पदान्तरप्रयोजनन्तु पूर्ववदुन्नेयम्' इति पाठान्तरम् ।

सर्वस्यैवान्त्यक्षणावच्छिन्नस्यानुमित्युत्पत्त्यधिकरणस्थूलकाल—महाकालोत्पत्तिकध्वंसप्रतियोगित्वादप्रसिद्धिवारणाय 'क्षणे'ति। सर्वस्यैव क्षणस्य तदुत्पत्तिक्षणोत्पत्तिकध्वंसात्मक-(ट)स्वभेदप्रतियोगित्वादप्रसिद्धिरतो ध्वंसत्वनिरूपितप्रतियोगित्वलाभाय 'ध्वंसे'ति।

केचित्तु—ननु तदव्यवहितपूर्वत्वं तत्प्रागभावाधिकरणक्षण(१)प्रागभावानधिकरणत्वे सति तत्प्रागभावाधिकरणत्वम्; तच्च प्रागभावानङ्गीकारे न सम्भवतीत्यत आह—'तदव्यवहिते'तीत्याहुः।

## दीधितिः

न चात्र प्रथमे यत्र सिद्ध्यात्मकपरामर्शानन्तरं सिषाधयिषाया उत्पत्तिकाले तत्पुरुषीयस्य कस्यापि धर्मस्य न विनाशः, अनन्तरं पुनरनुमितिः, तत्र तदुत्पत्तिसमयेऽपि सा स्यात्, तत्पूर्वकालीनानां सर्वेषां तादृशपूर्ववर्त्तित्वेनाविरोधित्वा(ठ)दिति वाच्यम्; अनवरतपरिस्पन्दमानापरिमितपवनादिपरमाणु—चेतनसंयोगसन्तानान्तःपातिव्यक्तीनामविरतमेवोपरमात्, फलानुत्पादबलेनापि तादृशकल्पनासम्भवात्, कारणान्तरकल्पने गौरवाच्च, अन्वयव्यभिचारसन्देहस्य च कारणत्वग्रहाविरोधित्वात्। उपादीयन्तां वा तत्तदात्मसमयविशेषसम्बन्धा एव तादृशपूर्ववृत्तिभिन्नाः।

## दीधितिप्रकाशः

'न चात्रे'ति,—'प्रथम' इति,—चरमयोस्तादृशपूर्वत्वानधिकरणसिषाधयिषाप्राक्क्षणवृत्तित्वविशिष्टपरामर्शेनैव प्रतिबन्धान्न सिषाधयिषोत्पत्तिकाले अनुमिति-

(१) 'काले'ति क्वचित् पाठः।

(ट) 'ध्वंसात्मक-स्वभेदे'ति,—अभावाधिकरणकाभावस्य निरुक्ताधिकरणीभूताभावस्वरूपत्वनियमादिति भावः।

(ठ) अत्र यद्यप्यनुमित्साया अपि उपायेच्छात्वात् तत्कारणीभूतफलेच्छाया एवानुमितिप्राग्वृत्तिभिन्नायाः सत्त्वादनुमित्सोत्पत्तिकाले अनुमितेरसम्भवः, तथापि सुखात्मिकानुमितिर्जायतामित्याकारिकैवात्र सिषाधयिषा वाच्या। सा च फलेच्छात्वादेव न फलेच्छान्तरमपेक्षत इत्यदोषः। परामर्शोऽप्यत्र स्मरणात्मको ग्राह्यः, अन्यथा विशिष्टानुभवत्वे तदर्थमपेक्षणीयस्य विशेषणज्ञानादेस्तादृशपूर्ववर्त्तिभिन्नत्वेन विरोधित्वसम्भवात्। न च स्मरणात्मकपरामर्शहेतोः संस्कारस्यैव फलनाश्यस्य तादृशपूर्ववर्त्तिभिन्नत्वसम्भवः, समूहालम्बनसंस्कारजन्यपरामर्शस्य चरमफलत्वाभावेन संस्कारानाशकत्वादिति रहस्यमत्रानुसन्धेयम्।

रिति भावः। सिद्ध्यनन्तरं परामर्शस्थले सिद्धेरेव तादृशाव्यवहितपूर्ववृत्तिभिन्नत्वेन प्रतिबन्धकत्वात् सिषाधयिषोत्पत्तिक्षणे(१) अनुमित्युत्पादो न (२) स्यादत उक्तं 'सिद्ध्यात्मके'ति।

'तत्पुरुषीयस्ये'ति(ड) ;—पुरुषान्तरीयतादृशधर्मस्य प्रसिद्धावपि तत्पुरुषे समवायेन तदभावस्य सत्त्वान्न तत्पुरुषीयानुमितिप्रतिबन्ध इति भावः। 'कस्यापी'ति ;—यद्येवम्भूतं यत्किञ्चित् स्यात्, तेनैव प्रतिबन्धात्तु तदानीमनुमितिः स्यादिति ; प्रतिक्षणं कस्यचिन्नाशोपगमेऽपि तदात्मवृत्तिधर्मस्य प्रतिक्षणं नाशोपगमाभावादिति भावः।

'अनन्तरं पुनरनुमिति'रिति,—अन्यथा परामर्शस्यैव तादृशपूर्ववृत्तिभिन्नत्वं स्यादिति। 'तदुत्पत्तिसमये' सिषाधयिषोत्पत्तिसमये। 'सा' अनुमितिः।

'अनवरते'ति,—अनवरतं परिस्पन्दमाना ये अपरिमिताः पवनादिपरमाणवः, तैः सार्द्धं यश्चेतनसंयोगसन्तानः, तदन्तःपातिव्यक्तीनामित्यर्थः। प्रतिक्षणं तादृशसंयोगनाशक-कर्मोपपादनाय(३) 'अनवरते'त्युक्तम। एकपरमाणुसंयोगकालेऽपि परमाण्वन्तरस्य संयोगनाशो भविष्यती(४)त्येतत्प्रतिपादनाय 'अपरिमिते'ति। जल-तेजसोर्विलम्बगमनशीलत्वमित्यभिप्रायेण 'पवनादी'त्युक्तम्। ननु तेषां प्रतिक्षणमुपरमे मानाभाव इत्यत आह—'फलानुत्पादे'ति।

ननु तदानीमनुमित्युत्पाद वारणाय-(५) कारणान्तरमेव कल्प्यतां, यदभावात् तदानीं नानुमितिरत आह—'कारणान्तरे'ति। ननु कारणताग्रहसमय एव

(१) 'सिषाधयिषोत्पादक्षणे' इति पाठान्तरम्। (२) 'अनुमित्यनुत्पादः स्या'दिति पाठान्तरम्। (३) 'कर्मोत्पादनाय' इति पाठान्तरम्। (४) 'भवति' इति पाठान्तरम्। (५) 'अनुमित्यनुत्पादनाय' इति पाठान्तरम्।

(ड) 'तत्पुरुषीयस्येती'ति—न च प्रागभावस्य प्रतियोगिसामग्रीनाश्यत्वमते सिषाधयिषोत्पत्तिकाले सिषाधयिषायाः प्रागभावः, प्रतियोगिनाश्यत्वमते च परामर्शप्रागभाव एवास्ति तादृशो यस्य तदा नाशो भवति। एवञ्च समवायस्य प्रतिबन्धकतावच्छेदकसंसर्गत्वकल्पनेन निरुक्तप्रागभावस्य प्रकृते प्रतिबन्धकत्वाप्रसक्तावपि प्रकृतदीधितिग्रन्थासङ्गतिदुष्परिहरेति वाच्यम् ; प्रकृते तत्पुरुषीयत्वं तत्पुरुषसमवेतत्वमित्यस्य विवक्षितत्वात्, प्रागभावस्य समवेतत्वाभावेनासङ्गतिपरिहारादिति ध्येयम्।

अन्वयव्यभिचारसन्देहः प्रतिबन्धकोऽस्तु, अत आह—'अन्वये'ति,—ग्राह्याभावानवगाहित्वादिति भावः (१)।

ननु स्व-स्वव्याप्येतरयावद्घटहेतुसमवधाने दण्डसत्त्वे घटसत्त्वमिति ज्ञानं कारणत्वग्राहकम्, तद्विरोधितया अन्वयव्यभिचारनिर्णयवत् तत्संशयोऽपि प्रतिबन्धक एव। किञ्च यत्र 'वह्निमान् वह्निव्याप्यवान् पर्वतः, पर्वते वह्न्यनुमित्यन्तरमिष्टसाधन'मिति—समूहालम्बनात्मकानुमित्यनन्तरमनुमित्यन्तरेच्छा, ततो वह्न्यनुमित्यन्तरम्, तत्र क्षणिकपदार्थाभावात् तादृशसिषाधयिषाप्राक्क्षणवृत्तीनां सर्वेषां तादृशानुमित्यव्यवहितप्राक्क्षणवृत्तित्वेन तद्भिन्नत्वाभावादन्वयव्यभिचारनिर्णय एवेत्यस्वरसादाह—'उपादीयन्ता'मिति। तथा च तत्र प्रथमानुमित्युत्पत्तिक्षणसम्बन्धस्यैव तादृशानुमित्यव्यवहितपूर्ववृत्तिभिन्नत्वेन प्रतिबन्धकत्वान्न सिषाधयिषोत्पत्तिकाले अनुमितिः।

स्वसमानाधिकरणेत्यत्र स्वाधिकरणत्वञ्च क्षणसम्बन्धस्य विलक्षणस्वरूपसम्बन्धेन(ढ) वाच्यम्। तादृशसमयस्य(ण) पुरुषान्तरीयानुमित्यव्यवहितपूर्वक्षणवृत्तित्वात् तत्सम्बन्धपर्य्यन्तानुधावनम्। तदात्मीयतत्सम्बन्धस्य तदात्मन्येव सत्त्वात् पुरुषान्तरीयानुमितिर्न तत्समानाधिकरणेति नोक्तदोषः।

## दीधितिः

भवेद्वा तत्पुरुषीयानुमितिं प्रति तत्तदीयानुमित्यव्यवहितपूर्वक्षणत्वादिना, तादृशक्षणवृत्तित्वविशिष्टत्वादिना वा कारणत्वम्। तथा च उपमानादेः प्रमाणान्तरत्वं भज्येत।

(१) 'ग्राह्याभावावगाहित्वाभावादि'ति पाठान्तरम्

(ढ) 'विलक्षणे'त्यादि—कालिकविशेषणत्वाख्यस्वरूपसम्बन्धेनेत्यर्थः। प्रकृते प्रतिबन्धकताच्छेदकोऽपि स एव सम्बन्ध इति ध्येयम्।

(ण) 'तादृशसमयस्ये'ति—यस्मिन् काले तत्पुरुषे नानुमित्युत्पादः, तत्क्षणाव्यवहितपूर्वक्षणरूपकालस्येत्यर्थः।

# दीधितिप्रकाशः

ननु तादृशक्षणसम्बन्धानां स्वरूपसम्बन्धात्मकतया तदात्मरूपत्वं तत्क्षणरूपत्वं वा स्यात्। तत्रात्मनः प्रतिबन्धकत्वमसम्भावितमेव(त)। क्षणस्य च स्वसमानाधिकरणपुरुषान्तरीयानुमित्यव्यवहितपूर्वक्षणवृत्तितया तद्भिन्नत्वाभाव इत्यत आह—'भवेद्वे'ति। तथा च तत्तत्पुरुषीयानुमितित्वस्य कार्य्यतावच्छेदकत्वान्न पुरुषान्तरे तादृशानुमित्युत्पादः। पुरुषान्तरीयानुमित्यव्यवहितपूर्वक्षणस्य तत्पुरुषीयानुमित्यजनकत्वात्(थ) कारणे 'तत्पुरुषीये'ति। परामर्शादीनां कारणत्वरक्षार्थमाह 'तादृशे'ति।

न च तत्पुरुषीयानुमित्यव्यवहितपूर्वक्षणवृत्तित्वविशिष्टपरामर्शादेः पुरुषान्तरेऽपि सत्वात् तत्रापि तत्पुरुषीयानुमितिप्रसङ्ग(१) इति वाच्यम्; तदात्मसमवेतजन्यं प्रति तदात्मत्वेन समवायिकारणत्वकल्पनात् पुरुषान्तरे तदीयानु(२)मित्युत्पादनासम्भवादिति। वस्तुतस्तु तत्पुरुषीयानुमित्यव्यवहितपूर्वत्वस्यैकस्याभावा(द)दुक्तप्रकारद्वयमेव सम्यगिति ध्येयम्।

ननु इत्थं कारणत्वे न कोऽपि दोष(३) इत्यत आह—'तथा चे'ति। निरुक्तानुमितिकारणस्य सर्वत्रैव सम्भवादनुमितिसामग्र्यभावेन(४) उपमानादेः प्रमाणान्तरत्वकल्पनं यत् तन्न स्यादित्यर्थः।

---

(१) 'प्रसङ्गः स्यादिति' इति पाठान्तरम्। (२) 'तदात्मीये'ति पाठान्तरम्। (३) 'कारणत्वे को दोष' इति पाठान्तरम्। (४) 'सामग्र्यभावात्' इति पाठान्तरम्।

(त) 'असम्भावितमेवे'ति-कारणत्वप्रतिबन्धकत्वयोर्मिथो विरुद्धतया अनुमितिकारणीभूते आत्मनि अनुमितिप्रतिबन्धकत्वस्याभ्युपगन्तुमशक्यत्वादिति प्रकृतासम्भावितत्वे केचिद् बीजं वर्णयन्ति, तन्नास्माकं समीचीनं प्रतिभाति, एकेनैव रूपेण एकेनैव च सम्बन्धेन कारणत्वप्रतिबन्धकत्वयोर्मिथो विरोधादत्र तु कारणत्वप्रतिबन्धकत्वे न तथेति। कालिकसम्बन्धेनापि विभुपदार्थस्यात्मनो वृत्तित्वमनभ्युपगच्छतां प्रकृतप्रतिबन्धकतावच्छेदककालिकसम्बन्धेनात्माभावस्य केवलान्वयित्वेनातिप्रसङ्गप्रसङ्ग एव बीजमिति तु युक्तमुत्पश्यामः।

(थ) व्यभिचारवारणाय कार्य्यदिशि, अतिप्रसङ्गवारणाय च कारणदिशि तत्पुरुषीयत्वं देयमिति भावः।

(द) 'एकस्याभावा'दिति—प्रागुक्ताव्यवहितपूर्वत्वस्योत्पत्तिघटकत्वघटितत्वेन तत्तद्व्यक्तिविश्रान्ततयानेकत्वमिति भावः।

## दीधितिः

विलीयेत च परामर्शत्वादिना कारणत्वम्, बाधत्वादिना च प्रतिबन्धकत्वम्। अनयैव रीत्या कार्य्यान्तरेष्वपि क्लृप्तानां कारणानां प्रतिबन्धकानाञ्चातथात्वमक्लृप्तानाञ्च तथात्वं प्रसज्येत। अत एव न द्वितीयोऽपि प्रकारः, वैयर्थ्याच्च सिद्धेः।

## दीधितिप्रकाशः

ननु उपमित्यव्यवहितपूर्वक्षणस्यानुमित्यव्यवहितपूर्वत्वाभावात् कथं सर्वत्रानुमितिसामग्री? अथोपमितिक्षणे अनुमितिकल्पनयैव स्वसमानाधिकरणानुमित्यव्यवहितपूर्वक्षणोत्पन्नत्वादिना क्लृप्तकार्य्यकारणभावेन निर्वाहान्नोपमितिसामग्री कल्प्यत इति चेत्, तर्हि अनुमितिस्थले उपमितिकल्पनयैव स्वसमानाधिकरणोपमितीत्यादिरूपेण क्लृप्तकार्य्यकारणभावेन निर्वाहान्नानुमितिः कल्प्या स्यात्।

यदि च अनुमिनोमि नोपमिनोमीत्यनुव्यवसायबलादनुमितिक्षणे उपमित्यभावस्यानुभविकत्वान्नोपमानेनानुमानस्यान्यथासिद्धिः, तदा उपमिनोमि नानुमिनोमीत्यनुव्यवसायबलादुपमानादेरपि नान्यथासिद्धिरित्यस्वरसादाह—'विलीयेत चे'ति।

परामर्शस्यापि तादृशाव्यवहितपूर्वक्षणवृत्तित्वविशिष्टत्वादिना कारणत्वस्योक्तत्वात् 'परामर्श(१)त्वादिने'ति(घ)। एवं बाधस्यापि तादृशा(२)व्यवहितपूर्वक्षणवृत्तिभिन्नत्वेन प्रतिबन्धकत्वात् 'बाधत्वादिने'ति(न)। आदिना तदभावव्याप्यनिश्चयत्वादि-(३) परिग्रहः।

(१) 'परामर्शत्वेनेति' इति पाठान्तरम्। (२) 'तादृशानुमित्यव्यवहिते'ति क्वचित् पाठः। (३) 'तदभावव्याप्यवत्तानिश्चयत्वादिव्यवच्छेद' इति पाठान्तरम्।

---

(घ) 'परामर्शत्वादिने'त्यादिपदेन व्याप्तिज्ञानत्वादिपरिग्रहः।

(न) 'बाधत्वादिने'ति—समानधर्मिकविपरीतनिश्चयस्यैव बाधनिश्चयविधया प्रतिबन्धकत्वमिति मते यद्यपि बाधत्वमेकविधम्, तथापि घटवद्भूतलमित्यादिज्ञानं प्रति 'घटाभाववद्भूतल'मिति निश्चयवद् 'घटो भूतलनिष्ठाभावप्रतियोगी' 'घटो भूतलावृत्ति'रित्यादिनिश्चयानामपि प्रतिबन्धकत्वमते बाधत्वमनेकविधं वाच्यम्: विभिन्नरूपेणैव च तत्र तत्र प्रतिबन्धकत्वमुपेयमिति ध्येयम्।

'कार्य्यान्तरेषु' प्रत्यक्षादिघटादिदाहाद्यात्मकेषु(१) 'क्लृप्तानां' सन्निकर्षादीनां दण्डादीनाम् वह्न्यादीनाञ्च 'कारणानाम्', एवं 'क्लृप्तानां प्रतिबन्धकानां' मण्यादीनाम् 'अतथात्वम्' अकारणत्वम् अप्रतिबन्धकत्वञ्च। 'अक्लृप्तानां' तादृशप्रत्यक्षाद्यव्यवहित-पूर्वक्षणवृत्तित्वविशिष्टानां तदात्मपरिमाणादीनाम्, तादृशघटाधिकरणकपालमात्र-वृत्तिद्वित्वादीनाञ्च कारणत्वं(प) स्यात्। एवं दाहं प्रति दाहाव्यवहितपूर्ववृत्ति-भिन्नत्वेन प्रतिबन्धकत्वे रासभादीनामपि प्रतिबन्धकत्वं स्यादित्यर्थः(फ)।

'अत एव' कारणतावच्छेदकावच्छिन्नसमाजाधीनकार्य्योत्पादस्य(ब)कारणता-वच्छेदककोटौ निवेशादेव। 'द्वितीयोऽपी'ति,— अनुमित्यव्यवहितपूर्ववृत्तिसिद्धि-भिन्नसिद्ध्यभाव एव पक्षतेति-कल्प इत्यर्थः। दूषणान्तरमाह 'वैयर्थ्यञ्चे'ति। अनुमित्यव्यवहितपूर्ववर्त्तिभिन्नत्वेन वस्त्वन्तरस्यापि प्रतिबन्धकत्वे क्षतिविरहात् सिद्धिवैयर्थ्यमित्यर्थः(२)।

## दीधितिः

सिषाधयिषाविरहविशिष्टस्य सिद्ध्यनुमानातिरिक्तसाधकमानयोरन्यतरस्या-भावः कारणमिति तु केचित्; तन्न; साधकं हि मानं सिद्धिस्वरूपयोग्यं, तदुपहितं, तत्सामग्री वा?

(१) 'प्रत्यक्षादिदाहाद्यात्मकेषु' इति पाठान्तरम्। (२) 'सिद्धेर्वैयर्थ्यमित्यर्थः' इति पाठान्तरम्।

(प) 'कारणत्व'मिति—प्रत्यक्षादिरूपकार्य्ये तादृशकार्य्याधिकरणतत्तदात्मपरिमाणादीनां घटादिरूपकार्य्ये च घटाधिकरण-कपालमात्रवृत्तिद्वित्वादीनां कारणत्वं स्यादित्यर्थः। तेषां तेषां कारणत्वेनैवाप्रसङ्गातिप्रसङ्गादिदोषासम्भवादिति भावः।

(फ) अत्र जगदीशस्तु—'कार्य्यान्तरेषु शाब्दबोधदाहादिषु'......तथा च शाब्दबोधत्वा-वच्छिन्नं प्रति स्वसमानाधिकरणशाब्दाव्यवहितप्राक्क्षणोत्पन्नसविषयकत्वेन हेतुत्वे विनश्य-दवस्थस्य पदार्थोपस्थित्यादेः शाब्दधीहेतुत्वं न स्यात्, प्रत्युत शाब्दधीप्राक्क्षणोत्पन्नस्येच्छादे-रपि तत्र हेतुता स्यात्। एवं स्वसमानाधिकरणदाहाव्यवहितप्राक्क्षणवृत्तिभिन्नत्वेनैव मण्यौषधादेर्दाहप्रतिबन्धकत्वे कदाचिदुपहितदाहानां मण्यादीनां दाहप्रतिबन्धकत्वं न स्यात्, प्रत्युत तादृश्येणोदासीनस्यापि घटादेर्दाहविरोधित्वं स्यादित्यर्थः'। इत्येवमाह।

(ब) कार्य्योत्पादस्येत्यत्र कार्य्योत्पादादिकस्येति पाठः समीचीनः प्रतिभाति, स्वेनैवोक्ते द्वितीयप्रकारे कार्य्योत्पादस्याघटकत्वात्। जगदीशस्तु 'अत एवे'त्यस्य कार्य्याव्यवहित-पूर्वत्वादेः कारणतानवच्छेदकत्वादेवेत्यर्थमेव स्पष्टमाह।

नाद्यः, चक्षुरादिसत्त्वे विनानुमित्सामनुमित्यभावप्रसङ्गात्। न द्वितीयः; सिद्धेः पूर्वं तदुपहितत्वाभावेन प्रत्यक्षसामग्रीसत्त्वेऽप्यनुमित्यापत्तेः, अनुमानातिरिक्तेत्यस्य वैयर्थ्याच्च। न तृतीयः; अनुमितिसामग्र्यभावत्वेन प्रत्यक्षकारणत्वम्, अनुमित्साविरह-विशिष्टप्रत्यक्ष-सामग्र्यभावत्वेन चानुमितिकारणत्वमित्यन्योन्याश्रयात्। स्थाणुत्वाभावव्याप्यदर्शनक्षणे प्रतियोग्यारोपविरहेणाभावप्रत्यक्षसामग्रीविरहात् पक्षतासत्त्वे स्थाणुत्वारोपक्षणे तदभावानुमित्यापत्तेरित्यपि कश्चित्।

## दीधितिप्रकाशः

उपाध्याय-(भ)मतं (१)निरस्यति,—'सिषाधयिषे'ति। अनुमानात्मकसाधकमानस्य तादृशस्य सत्त्वात् सिषाधयिषाविरहकाले कदाप्यनुमितिर्न स्यादतो'ऽनुमानातिरिक्ते'ति। 'तदुपहितम्' सिद्ध्युपहितम्, स्वजन्यसिद्धिविशिष्टम्(म)। 'तत्सामग्री',—सिद्धिसामग्री। 'तदुपहितत्वाभावेने'ति, —स्वजन्यसिद्धिकाल एव तदुपहितत्वस्य सत्त्वादित्यर्थः। 'अनुमानातिरिक्ते'ति,—अनुमितेः पूर्वमनुमानस्यापि तदुपहित(य)त्वाभावादित्यर्थः।

यद्यपि सिद्धिकाले(र) एतदुपहितत्वेन(२) तादृशसिद्ध्यभावहेतुत्वेनैव तादृशसिद्ध्युपहितसाधकमानाभावोऽपि(३) लब्ध इति साधकमानप्रवेशोऽपि व्यर्थ एव,

(१) 'मतमुपन्यस्यति' इति पाठान्तरम्। (२) सप्तम्यन्तं 'सिद्ध्युपहितत्वे' इति क्वचित् पाठान्तरम्। (३) 'साधक' शब्दो न सार्वत्रिकः।

(भ) 'उपाध्याये'ति यज्ञपत्युपाध्यायेत्यर्थः।

(म) वैशिष्ट्यमत्र कालिकविशेषणताघटितसामानाधिकरण्यसम्बन्धेन बोध्यम्।

(य) अत्र जगदीशस्तु-'अनुमितिभिन्नसिद्धिप्राक्क्षणावच्छिन्नत्वमेव तादृशसिद्ध्युपहितत्वमित्युक्तौ नातिप्रसङ्गो न वा वैयर्थ्यमिति ध्येय'मित्याह।

(र) 'सिद्धिकाल' इति-सिद्धिकाल एवेत्यर्थः। एवं तदुपधानकाल एव सिद्धिसम्भवेनेत्यपि बोध्यम्, तेन उभयोः समनैयत्येन तदभावयोरपि समनैयत्यमेवेति एकाभावनिवेशेनैवापराभावस्यापि लाभः। एवमपि लाघवेन तादृशसिद्ध्यभावत्वेनैव कारणतायाः कल्पनीयतया न साधकमानेन सिद्धेर्वैयर्थ्याशङ्केति ध्येयम्। वैयर्थ्यमत्र निष्प्रयोजनकत्वम्। अन्यथा अखण्डाभावघटकतया सार्थक्यसम्भवात्।

तथापि स्वजन्यसिद्ध्यसाधारणकारण(१)कालोत्तरकालीनत्वं(ल)यदि सिद्ध्युपहितत्वं निवेक्ष्यते, तदा जनितैकसिद्धिकापरसिद्धिसामग्रीकालावच्छिन्नचक्षुरादिकाले तादृश-सिद्धेरभावात् तत्रानुमितेर्वारणाय साधकमानदलस्य सार्थक्येऽपि(२) सिद्ध्युपहित-स्यैकस्यानुमानस्य तादृशसिद्ध्यभावदशायामनुमित्यन्तराजनकत्वादनुमानातिरिक्ते-त्यस्य वैयर्थ्यमेवेति भावः(३)।

'अनुमितिसामग्र्ये'ति,—अनुमितिसामग्री तादृशप्रत्यक्षसामग्र्यभावघटिता, तादृशप्रत्यक्षसामग्री च अनुमितिसामग्र्यभावघटितेति तादृशसामग्रीज्ञानाधीनमपर-सामग्रीज्ञानमिति कार्य्यकारणभावग्रहे अन्योन्याश्रयात् (व) तादृशकार्य्यकारणभाव-ग्रहाभाव इत्यर्थः।

केषाञ्चिद् दूषणमाह —'स्थाणुत्वे'ति। 'प्रतियोग्यारोपे'ति। स्थाणुत्वा-रोपेत्यर्थः। 'अभावप्रत्यक्षे'ति—'अभावलौकिकप्रत्यक्षेत्यर्थः। उपनीतभानन्तु(श) सर्वतो दुर्बलमिति भावः(४)। 'तदभावे'ति स्थाणुत्वाभावेत्यर्थः। केचिदित्य-स्वरसस्तद्बीजन्तु प्रतियोग्यारोपस्य(५) हेतुत्वमेव खण्डितमिति।

## दीधितिः

वस्तुतस्तु स्वतन्त्रान्वयव्यतिरेकशालित्वान्नियमेन प्रथममुपस्थितत्वाल्लाघवाच्च प्रत्येकमेव तथात्वम्। अन्यथा बाधादेरप्यत्रैवान्तर्भावप्रसङ्गात् (ष)।

(१) 'स्वजन्यसिद्ध्यधिकरणकालोत्तरकालीनत्वम्' इति क्वचित् पाठो दृश्यते। (२) 'दलसार्थकत्वेऽपि' इति पाठान्तरम्। (३) 'वैयर्थ्यमित्यर्थ' इति पाठान्तरम्। (४) 'उपनीतभानन्तु सर्वथा दुर्लभमिति भाव' इति क्वचित् पाठः। (५) कोचिदित्यस्वरसस्तु प्रतियोग्यारोपस्ये'त्यादिः क्वचित् पाठः।

(ल) अत्र स्वजन्यसिद्ध्यसाधारणकालः कालो यस्येति बहुव्रीहिसमासाश्रयणात् स्वजन्यसिद्ध्यसाधारणकारणकालेत्यस्य स्वजन्यसिद्धिसामग्रीकालीनेत्यर्थः। उत्तरकालीनत्व-मित्यस्य च स्वजन्यसिद्ध्युत्तरकालीनत्वमित्यर्थः। तथा च स्वजन्यसिद्धिसामग्रीकालीनत्व-मित्यर्थः। तथा च स्वजन्यसिद्धिसामग्रीकालीनत्वोपलक्षितत्वे सति स्वजन्यसिद्ध्युत्तरकालीन-त्वोपलक्षितत्वमित्यर्थः।

(व) स्वग्रहसापेक्षग्रहसापेक्षग्रहकत्वस्यान्योन्याश्रयरूपत्वादिति भावः।

(श) अनेन लौकिकपदव्यावृत्तिर्व्याख्याता।

(ष) अत्राह जगदीशः—'बाधादेरित्यादिना सत्प्रतिपक्षसंग्रहः। तथा च अनुमित्सा-विरहविशिष्टसिद्धेस्तथाविधप्रत्यक्षसामग्र्या बाधसत्प्रतिपक्षादेश्चान्यतमत्वावच्छिन्नाभावत्वेनै-वानुमितिहेतुता स्याद् बाधाद्यभावस्य पृथक्कारणत्वे गौरवादित्यर्थः'। इति।

# दीधितिप्रकाशः

ननु सिद्धिसामग्रीपदेन सिद्ध्यसाधारण-कतिपयकारणमेव धर्त्तव्यम्; न तु सिद्ध्यपधायकयावत्-(१)कारणचक्रम्, येनान्योन्याश्रयः स्यात्, अनुमित्साविरह-विशिष्टप्रत्यक्षसामग्र्यभावत्वेनानुमितिहेतुत्वमित्यत्र प्रत्यक्षसामग्री चक्षुर्मनोयोग-सहितालोकसंयोगा(२)वच्छेदकावच्छेदेन वह्निचक्षुःसंयोगादिरूपैव(३)धर्त्तव्येति कथ-मन्योन्याश्रय इत्यस्वरसादाह—'वस्तुतस्त्वि'ति।

'स्वतन्त्रे'ति,—तादृशसिद्ध्यभावं विहाय तादृशसामग्र्यभावस्य तादृश-सामग्र्यभावं विहाय तादृशसिद्ध्यभावस्यान्वयव्यतिरेकादित्यर्थः(४)। तादृशान्य-तराभावोपस्थितिकाले तादृशसिद्ध्यभावादेर्नियमेनोपस्थितत्वादित्यर्थः।

यद्यपि तादृशान्यतरन्नास्तीति शाब्दबोधकाले तादृशसिद्ध्यभावादेरुपस्थित्य-भावान्न(स) नियमसम्भवः, तथापि तदानीमपि मनसा(५) तादृशबोधसम्भव इत्यभिप्रायः।

'लाघवात्' शरीरलाघवात्। 'प्रत्येकमेव' तादृशसिद्ध्यभावत्वादिनैव। 'अन्यथा' स्वातन्त्र्येण प्रतिबन्धकयोरपि अन्यतरत्वेनाभावस्य हेतुत्वे। 'अत्रैव' पक्षताप्रतियोगिकोटावेव।

---

(१) 'यावत्'पदं ग्रन्थविशेषे नास्ति। (२) 'संयोगावच्छेदेने'ति क्वचित् पाठः। (३) 'वह्निसंयोगादिरूपैव'इति क्वचित् पाठः। (४) 'तादृशसामग्र्यभावं विहाय तादृशसिद्ध्यभावस्य' इत्ययमंशः पुस्तकविशेषे नास्ति। (५) 'मानसे'ति क्वचित् पाठः।

---

न च विशिष्टबुद्धित्वसामान्यस्यैव बाधसत्प्रतिपक्षप्रतिबध्यतावच्छेदकत्वादनुमितित्वस्य तदनवच्छेदकत्वेन बाधादेरित्याद्यसङ्गतार्थमिति वाच्यम्; इच्छाविशेषाणामुत्तेजकत्वानुरोधेन प्रत्यक्षस्थले चाक्षुषत्वादिकमेव प्रतिबध्यतावच्छेदकं कल्प्यते, शाब्दस्थले योग्यताज्ञानस्य कारणतयैव निर्वाहान्न तत्र बाधप्रतिबन्धकता कल्प्या, उपमितेः शक्तिपरिच्छेदात्मकतया न वह्न्यादिबाधप्रतिबध्यत्वम्, स्मृतिस्थले च बाधस्य विपरीतज्ञानजन्यसंस्कारनाशकतया फलबलकल्प्योद्बोधकाभावेन वा स्मृत्यनुत्पादसम्भवात् पारिशेष्यादनुमितित्वस्यैव बाधप्रति-बध्यतावच्छेदकत्वान्नासङ्गतिरिति ध्येयम्।

(स) शाब्दबोधस्य शब्दोपस्थाप्यार्थमात्रविषयकत्वादिति।

## दीधितिः

न च अनुमित्साविरहस्य प्रत्येकविशेषणत्वे गौरवम्; शाब्दसिद्धौ सत्याम् अशाब्दं ज्ञानं जायतामितीच्छायामनुमितेरुत्पादात् सिद्धावनुमितिविषयेच्छाविरहस्य, प्रत्यक्षसामग्रीसत्त्वे च तादृशेच्छाया(१)मनुमितेरनुत्पादेन (ह) साधकमाने अनुमितित्वादिप्रकारकेच्छाविरहस्य पृथगेव विशेषणतायास्त्वयापि वाच्यत्वात्।

## दीधितिप्रकाशः

ननु अनुमित्साविरहो यत्र विशेषणं तयोरेवान्यतरत्वेनानुगमः, न तु बाधादेरपि, अन्यथा तस्य प्रत्येकविशेषणत्वे गौरवादित्याशङ्क्य निषेधति 'न चे'ति। अनुमित्साविरहस्य प्रत्येक(२)विशेषणत्वस्यावश्यकत्वं दर्शयति—शाब्दसिद्धा'विति।

प्रात्यक्षिकादिसिद्धौ सत्यां अशाब्दं ज्ञानं जायतामितीच्छानुदयात्(क्ष) 'शाब्दे'ति। 'तादृशेच्छायाम्'—अशाब्दं ज्ञानं जायतामितीच्छायाम्। 'अनुमितित्वादी'त्यादिना प्रत्यक्षान्यज्ञानत्वादिपरिग्रहः।

## दीधितिः

स्वनिवर्त्तकप्रत्यक्षादिसामग्रीसमवहितान्यत्वादिना च तादृशेच्छयोरनुगमे अतीव गौरवम्, अन्यतरत्वघटकयोरन्योन्याभावयो(क)र्मिथो विशेषणविशेष्यभावे विनिगमकाभावश्च।

(१) 'अशाब्दं ज्ञानं जायतामितीच्छा'मिति पाठान्तरम्। (२) 'प्रत्येकमेव' इति पाठान्तरम्।

(ह) प्रत्यक्षसामग्रीबलादुपजायमानेन प्रत्यक्षेणैव तत्रत्येच्छाविषयसिद्धिसम्भवात् प्रकारान्तरेणासम्भवत्स्वविषयसिद्धिकाया एव सिषाधयिषाया अनुमितिप्रयोजकत्वादिति भावः।

(क्ष) शाब्दान्य-तत्रत्यप्रात्यक्षिकादिसिद्धेरशाब्दज्ञानत्वप्रकारक-तादृशेच्छां प्रति प्रतिबन्धकत्वादिति भावः।

(क) भेदद्वयावच्छिन्नप्रतियोगिताकभेदस्यैवान्यतरत्वरूपतया प्रकृते तद्घटकीभूतसिद्धिभेद-निष्ठरूपसाधकमानभेदात्मकान्योन्याभावयोरित्यर्थः।

## दीधितिप्रकाशः

ननु सिद्धावनुमितिविषयेच्छाविरहस्य विशेषणत्वे पर्वते वह्नेः शाब्दसिद्धिसत्त्वे घटानुमितिजनक(१)परामर्शसत्त्वे अशाब्दं ज्ञानं जायतामितीच्छाया अपि उत्तेजकत्वापत्तिः।

न चानुमितिविषयकेच्छाभावत्वेन विशेषणत्वमिति नार्थः, किन्तु अनुमितिविषयिणी या इच्छा, तस्यास्तद्व्यक्तित्वेनाभावः सिद्धौ विशेषणम्। प्रत्यक्षसामग्र्याम् घटानुमितिसामग्रीकाले च अशाब्दं ज्ञानं जायतामितीच्छा(२) न तत्तद्व्यक्तित्वेनोपादेयेति नोक्तातिप्रसङ्ग इति वाच्यम्; तथा सति प्रत्यक्षसामग्र्यामपि तत्तद्व्यक्त्यभावस्य विशेषणत्वे क्षतिविरहात्। नहि यदिच्छाव्यक्तिसत्त्वे अनुमितिः, तदिच्छाव्यक्तिसत्त्वे प्रत्यक्षं जातमिति(३) चेत् अशाब्दं ज्ञानं जायतामित्यस्य पर्वते वह्नेरशाब्दं ज्ञानं जायतामित्यर्थः(४)। सिद्धावनुमितिविषयकेच्छेत्यादेः सिद्धावनुमितिविषयिणी या तादृशेच्छा(५) तदभावस्य विशेषणत्वमित्यर्थः। तथा च पर्वते वह्नेरशाब्दं ज्ञानं जायतामित्याकारकेच्छाभावघटित-तत्तदिच्छाभाव(६)स्तोमविशिष्टसिद्धित्वेन प्रतिबन्धकत्वं वक्तुं शक्यते, न तु तादृशेच्छाभावघटितस्तोमविशिष्ट(७)-प्रत्यक्षसामग्रीत्वेनेत्याशयात्। अत एव पर्वते वह्न्यनुमितिविषयकेच्छात्वेनैवोभयत्रोत्तेजकत्वम्।

प्रत्यक्षादिसामग्रीसमवहित-तादृशेच्छावारणन्तु स्वनिवर्त्तकेत्यादिना कार्य्यमित्याशयेनाह—'स्वनिवर्त्तके'ति। स्वं तादृशेच्छा, तन्निवर्त्तकं यत् प्रत्यक्षादि प्रत्यक्षं शाब्दं उपमितिश्च, तत्सामग्रीसमवहितं यत् स्वं, तदन्यत्वादिनेत्यर्थः। आदिना तत्तद्व्यक्त्यन्यतादृशेच्छात्वादिपरिग्रहः। प्रत्यक्षादेरिच्छानिवर्त्तकत्वन्तु स्वविषयसिद्धत्वबुद्ध्या, ज्ञानेच्छास्थले स्वरूपसत्सिद्धत्वस्यापीच्छाविरोधित्वादिति। स्वनिवर्त्तकानुमितिसामग्रीसमवहितेच्छासंग्रहाय 'प्रत्यक्षादी'ति। प्रत्यक्षादिसामग्रीकालीना पर्वते वह्नेरशाब्दादिज्ञानं जायतामितीच्छा तु स्वनिवर्त्तकप्रत्यक्षसामग्रीकालीनैवेति नातिप्रसङ्गः।

---

(१) 'पक्षतापरामर्शसत्त्वे' इति क्वचित् पाठः। (२) 'न प्रत्यक्षसामग्र्याम् घटानुमितिसामग्रीकालीनाशाब्दं ज्ञानं जायतामितीच्छा' इति पाठान्तरम्। (३) 'जातमस्ति' इति क्वचित् पाठः। (४) 'जायतामितीच्छायामित्यर्थे' इति क्वचित् पाठः। (५) 'या इच्छा' इति पाठान्तरम्। (६) 'तादृशेच्छाभाव' इति पाठान्तरम्। (७) स्तोमघटितविशिष्टे'ति क्वचित् पाठः।

ननु सिद्धिमात्रे या इच्छा उत्तेजिका:, तत्तदिच्छाभावविशिष्टसिद्धि-प्रत्यक्षादि-सामग्र्योरन्यतरस्यानुमितित्वादिप्रकारकेच्छाभावसमुदायो विशेषणमस्तु, तादृश-साधारणेच्छाभावसमुदायस्य प्रत्येकविशेषणत्वे गौरवात्। किञ्च यत्र विषय-विशेषे अनुमितित्वादिप्रकारिकैवेच्छा जाता, न त्वशाब्दं ज्ञानं जायतामित्या(१)-कारिका, तत्र तादृशेच्छाभावस्य प्रत्येकविशेषणत्वे गौरवादन्यतराभावः कारणमस्तु इत्यत(२) आह—'अन्यतरत्वे'ति। सिद्धिभिन्नत्वे सति यत् तादृशसामग्रीभिन्नं तद्भिन्नत्वमन्यतरत्वम्, किं वा तादृश(३)सामग्रीभिन्नत्वे सति यत् सिद्धिभिन्नं तद्भिन्नत्वमन्यतरत्वमित्यत्र विनिगमनाविरह इत्यर्थः।

## दीधितिः

आत्मनिष्ठश्च समवायेन सिद्धेरभावः कारणम्, भिन्नभिन्नेन च सम्बन्धेन तत्तदसाधारणकारणरूपायास्तत्सामग्र्याः, मणिविशिष्टस्य वह्नेरिव इतरविशिष्टस्य मनोयोगादेः प्रतिबन्धकत्वायोगात्; तथा च कथमनुगतरूपेण तयोरभावः कारणम्।

## दीधितिप्रकाशः

ननु स्वरूपसम्बन्धरूपा कारणता, सा च अवच्छेदकभेदाद् भिद्यते। अवच्छेदकभेदोऽप्यवच्छेदकानामसमनियतत्वम्। प्रकृते च विशेषणविशेष्यभाव-भेदेऽपि अवच्छेदकयोः समनियतत्वमेवेति(४) कथं कारणतावच्छेदकभेदः(५) स्यादत आह—'आत्मनिष्ठश्चे'ति। तत्पुरुषीय-मनःसंयोगविशिष्टालोकसंयोगावच्छेदका-वच्छिन्न-(६)चक्षुःसंयोगस्य समवायेनाभावो वह्निनिष्ठ एव तदनुमितिजनकः स्यादित्याशङ्कामपनेतुमुक्तम् 'आत्मनिष्ठश्चे'ति। 'भिन्नभिन्नेन चे'ति,—तादृशचक्षुः-संयोगप्रतियोगिचक्षुर्नियामकादृष्टादिसम्बन्धेनेत्यर्थः।

'तत्तदसाधारणे'ति,—कालादिघटित(ख)सामग्र्याः प्रतिबन्धकत्वे माना-भावात्; आत्मसंयोगावच्छिन्न-मनःसंयुक्तचक्षुःसंयोगादिरूपाया इत्यर्थः। तत्-सामग्र्या भिन्नभिन्नसम्बन्धेनाभावः कारणमिति पूर्वेणान्वयः।

(१) 'जायतामित्येवमाकारिका' इति पाठान्तरम्। (२) इत्यस्वरसादाह'इति पाठान्तरम्। (३) तदिच्छासामग्री' इति पाठान्तरम्। (४) 'समनैयत्यमेव कथ'मिति पाठभेदः। (५) 'कारणताभेद'इति पाठान्तरम्। (६) 'संयोगावच्छिन्न'इति पाठान्तरम्।

(ख) 'कालादी'ति—जन्यमात्रसाधारणकारणकालादीत्यर्थः।

ननु तादृशचक्षुःसंयोगविशिष्ट-मनोयोगः(१) प्रतिबन्धकोऽस्तु ; तथा च आत्मनिष्ठ एव समवायेनोभयोरन्यतरत्वेनाभावः कारणमस्तु, अत आह— 'मणिविशिष्टस्ये'ति। 'अयोगादि'ति गौरवादिति भावः। जनकत्वप्रतिबन्धकत्वयोर्विरोधात्(ग)।

## दीधितिः

एवं सिद्धेः सिषाधयिषाविरहेण वैशिष्ट्यम् एककालावच्छेदेन एकात्मवृत्तित्वम्', प्रत्यक्षादिकारणचक्षुःसंयोगादेस्तु अन्यादृशमिति। सामग्रीविशेषाभावस्य हेतुत्वेऽपि लाघवात् सिद्ध्यभाव एव पक्षव्यवहारनिमित्तम्। एतदेवाभिसन्धाय प्रवृत्तिनिमित्तमुक्तमिति वक्ष्यति।

फलानुपहितसिद्धीच्छाविरहविशिष्टसिद्ध्यभावापेक्षया बाधाभावस्य लघुत्वेऽपि सिद्धसाधनस्थले पक्षव्यवहारविरहेण तादृशसिद्ध्यभावस्यावश्यकत्वे बाधाभावो न निविशते गौरवात्।

## दीधितिप्रकाशः

प्रतियोगितावच्छेदकसम्बन्धभेदादभावैक्यासम्भवमुक्त्वा सिद्धि-तत्सामग्र्योः सिषाधयिषाविरहस्य प्रतियोगितावच्छेदकस्य सम्बन्धभेदादभावैक्यासम्भवमाह— 'एव'मिति। सिषाधयिषाकालीनसिद्धेरपि तदात्मवृत्तिना कालान्तरीयेण तत्कालीनेन वा आत्मान्तरवृत्तिना सिषाधयिषाभावेन विशिष्टत्वादाह—'एककालावच्छेदेनैकात्मवृत्तित्व'मिति। 'अन्यादृश'मिति— यत्कालावच्छेदेन यदात्मनि सिषाधयिषाभावः, तत्कालावच्छेदेन तदात्मीयमनःसंयुक्ततादृशचक्षुःसंयोगः प्रतिबन्धकः, तत्र सिषाधयिषाविरहविशिष्टतदात्मीयमनःसंयुक्तचक्षुःप्रतियोगिकत्वं तद्वैशिष्ट्यमित्यर्थः।

(१) 'मनःसंयोग एव' इति पाठान्तरम्।

(ग) एतदधिकारेण जगदीशस्तु—'यद्यप्यात्ममनोयोगत्वेनानुमितिजनकस्यापि विलक्षणान्यतरत्वेन तत्प्रतिबन्धकत्वेऽपि न क्षतिः, एकरूपेणैव तयोर्विरोधात, मणित्वापेक्षया गुरुत्वेनैव मणिविशिष्टवह्नित्वेन दाहप्रतिबन्धकत्वाकल्पनात, तथापि विशिष्टाभावस्य विशेषणाद्यभावानतिरिक्तत्वादखण्डतत्तद्व्यक्तित्वेन हेतुत्वासम्भवादुक्तान्यतरत्वावच्छिन्नाभावत्वेन च हेतुत्वे अन्यतरत्वांशे विशेष्यविशेषणभावव्यत्यासेन गुरुतरकार्य्यकारणभावद्वयापत्तेः सिद्धिप्रत्यक्षसामग्र्याः प्रत्येकाभावत्वेनैव हेतुत्वमित्येव मूलं युक्तमिति ध्येयम्' इत्याह।

यद्यपि तादृशचक्षुःसंयोगस्य स्वप्रतियोगिचक्षुर्नियामकादृष्टसम्बन्धेनात्मवृत्तित्वाद् यत्कालावच्छेदेन तादृशादृष्टसम्बन्धेन तादृशचक्षुःसंयोग(१)स्यात्मवृत्तित्वं तत्कालावच्छेदेनात्मनि सिषाधयिषाविरह इत्यत्राप्येककालावच्छेदेनैकात्मवृत्तित्वं वैशिष्ट्यं वक्तुं शक्यत एव, तथापि तत्रैकात्मवृत्तित्वमभावस्य विशेषणता, सिद्धेः समवायः, अत्र च तादृशसंयोगस्य तादृशादृष्टसम्बन्ध इति सर्वथा सम्बन्धैक्यं न सम्भवतीति भावः।

नन्वेवं सामग्रीविशेषाभावस्य स्वातन्त्र्येण हेतुत्वे स एव किमिति न पक्षतेत्यत आह—'सामग्री'ति। 'लाघवात्' तादृशसिद्धिसामग्र्यभावापेक्षया तादृशसिद्ध्यभावस्य लघुत्वात्। 'एतदेव' लाघवमेव। इदमुपलक्षणम्; सिद्धसाधनस्थले(२) तादृशसामग्रीविशेषाभावस्य सत्त्वेऽपि पक्षता(३)व्यवहाराभावात् तादृशसिद्ध्यभावस्तथेत्यपि बोध्यम्।

नन्वेवमपि लाघवाद् बाधाभाव एतत्प्रवृत्तिनिमित्तमस्तु, अत आह—'फले'ति। 'आवश्यकत्वे' पक्षपदप्रवृत्तिनिमित्तस्यावश्यकत्वे। 'गौरवादि'ति, बाधस्थले पक्षव्यवहाराभावो नोभयसम्मत इति भावः।

## दीधितिः

विशिष्टसिद्ध्यभावस्य चात्मनिष्ठस्यैवानुमितिहेतुत्वेऽपि तस्य परम्परासम्बन्धादेव पर्वतादौ पक्षव्यवहार इति ध्येयम्। एकस्य पुंसोऽनुमित्सासत्त्वेऽप्यन्यस्य तद्विरहिणः प्रत्यक्षादिसामग्रीसत्त्वे अनुमित्यनुत्पादात् तत्पुरुषीयानुमितिं प्रति तत्पुरुषीयानुमित्साविरहकालीनतत्पुरुषीयसिद्धिसामग्रीविशेषविरहोऽनन्यगतिकत्वेन हेतुरुपेतव्य इति वदन्ति।

## दीधितिप्रकाशः

नन्वेवमात्मनिष्ठस्यैव सिद्ध्यभावस्य हेतुत्वात् पर्वतादौ कथं पक्षव्यवहार इत्यत आह—'विशिष्टसिद्ध्यभावस्ये'ति। 'परम्परासम्बन्धा'दिति—साक्षात्सम्बन्धेन सिद्ध्यभावस्य तथात्वे सिद्धिदशायामपि पर्वते समवायेन सिद्ध्यभावस्य सत्त्वात्

(१) 'तादृशसंयोगस्यात्मवृत्तित्व'मिति पाठान्तरम्। (२) 'सिद्धसाधनसत्त्वे' इति पाठान्तरम्। (३) 'पक्षव्यवहाराभावात्' इति पाठान्तरम्।

पक्षव्यवहारः स्यात्, न स्याच्च अयमात्मा सुखी एतदात्मत्वादित्यत्र अनुमातुः सिद्ध्यभावदशायां पक्षीभूततदात्मनश्च अहं सुखीति सिद्धिदशायां तदात्मनि पक्षव्यवहार इति।

परम्परासम्बन्धश्च यत्कालावच्छेदेन यदात्मनि यत्पक्षक-यत्साध्यकसिद्ध्यभावः तत्कालावच्छिन्नतदात्मीयतत्पक्षत्वं तदात्मीयतत्पक्षत्वव्यवहारनिमित्तम्। तदात्मीयत्वञ्च तत्पक्षस्य तदात्मवृत्ति तादृशसिद्ध्यभावप्रतियोगिसिद्धिनिरूपित-तत्साध्यनिष्ठप्रकारतानिरूपित-तत्पक्षतावच्छेदक(१) रूपावच्छिन्न-विशेष्यत्वम्(घ) ; तेन अतीतानागतयोरपि(ङ) आत्मनि सिद्ध्यभावकाले न पक्षत्वव्यवहारक्षतिरिति(२) ध्येयम्।

ननु तदात्मीयतादृशचक्षुःसंयोगस्य वह्न्यादौ सत्त्वेऽपि दोषवशाद् वह्न्यादेरग्रहदशायां वह्नेरनुमितिदर्शनात् तदभावोऽपि तादृशसामग्रीमध्ये(च) निवेश्यः। दोषाश्च पुरुषभेदनियन्त्रिता विषयेन्द्रिययोर्वर्त्तमानाः। तत्र पुरुषान्तरीयचक्षुषि विषये वा तत्पुरुषीयचक्षुर्दोषस्य विषयदोषस्य वा सत्त्वदशायामपि पुरुषान्तरस्य प्रत्यक्षोदयात् कथं सामान्यतः सामग्रीविशेषाभावस्य हेतुत्वं ग्राह्यम्। अतस्तत्तत्पुरुषभेदनियन्त्रितमेव(३) कार्य्यकारणभावमाह 'एकस्ये'ति। 'तद्विरहिणः' अनुमित्साविरहिणः। 'तत्पुरुषीये'ति,—अत्र अनुमित्सायां न तत्पुरुषीयत्वमन्वितम्(४), तस्यानुमित्सासत्त्वेऽपि घटादौ तद्विरहस्य सत्त्वेन तत्कालीनायाः(५) सामग्र्याः प्रतिबन्धकत्वापातात्, किन्तु तद्विरहे ; तथा च तत्पुरुषीयो योऽनुमित्साविरहः तत्क्षणवृत्तित्वविशिष्टा या तत्पुरुषीया सिद्धिसामग्री तदभाव इत्यर्थः(६)।

---

(१) 'पक्षतावच्छेदकावच्छिन्न' इति पाठान्तरम्। (२) 'पक्षत्वक्षतिरिति' इति पाठान्तरम्। (३) 'अतस्तस्य पुरुषभेदे'ति पाठान्तरम्। (४) 'तत्पुरुषीयत्वं नान्वित' मिति पाठान्तरम्। (५) पुस्तकविशेषे 'तत्कालीनाया' इति पाठो नास्ति। (६) 'तत्कालीना तत्पक्षवृत्तित्वविशिष्टा या सिद्धिसामग्री तद्विरह इत्यर्थः' इति पाठान्तरम्।

(घ) एतेन यदा आत्मनि यद्विशेष्यकप्रकृतसाध्यप्रकारकसिद्ध्यभावस्तदा तत्र पक्षताव्यवहार इति स्थितम्।

(ङ) वर्त्तमानकालावच्छेदेन तद्विशेष्यकप्रकृतसाध्यप्रकारकसिद्ध्यभावस्यात्मनि वर्त्तमानत्वादिति भावः।

(च) 'तदभावोऽपि'—दोषाभावोऽपि। 'तादृशसामग्रीमध्ये'-पक्षताकुक्षिनिक्षिप्तसिद्धिसामग्रीमध्ये।

तत्पुरुषीयसिद्धिसामग्री च तत्पुरुषीयचक्षुर्मनोयोगस्तादृशचक्षुःसंयोगः(१) तत्पुरुषीयचक्षुषि विषये च तत्पुरुषीयतादृशदोषाभावश्चेत्येवंरूपा ग्राह्येति न दोषः(२)।

तत्पुरुषीयानुमित्साविरहकाले पुरुषान्तरीयप्रत्यक्षसामग्रीसत्त्वेऽपि एतत्पुरुषीयानुमितिसम्भवात् सामग्र्यां तत्पुरुषीयत्वमिति। 'अनन्यगतिकत्वेने'ति—पूर्वोक्तरीत्या सर्वपुरुषसाधारण(३)कार्य्यकारणभावस्यासम्भवादिति भावः।

## दीधितिः

अथ सिद्ध्युत्तरानुमितौ सिषाधयिषा हेतुरस्तु। न चैवं मण्यादिस्थलीयदाहं प्रति उत्तेजकस्य हेतुत्वापत्तिः; उत्तेजकानामननुगतत्वात्, तावदभावविशिष्टमण्याद्यभावस्य चानुगतत्वादिति चेत्, इहापि दर्शितोऽननुगमः सिषाधयिषायाः।

## दीधितिप्रकाशः

सिषाधयिषाविरहकालीनानुमितौ व्यभिचारादाह—'सिद्ध्युत्तरे'ति। 'एवम् विशिष्टाभावस्याहेतुत्वे। उत्तेजकाभावकालीनदाहे व्यभिचारादाह—'मण्यादिस्थलीये'ति। 'अननुगतत्वा'दिति—मणिमन्त्रौषधादि(४)साधारणस्योत्तेजकत्वस्यैकस्याभावादित्यर्थः।

ननु तेषामननुगतत्वे तद्घटितविशिष्टाभावोऽप्यननुगत एवेत्यत(५) आह—'तावदि'ति। यत्किञ्चिदुत्तेजकविशिष्टमणिसत्त्वेऽपि तावदुत्तेजकाभावस्तोमविशिष्टमणेरभावसत्त्वादित्यर्थः(६)। 'इहापि' अनुमितावपि। 'दर्शित' इति यादृशयादृशेत्यादिनेति शेषः।,

## दीधितिः

सिद्ध्युत्तरानुमितित्वञ्च अनुगतानतिप्रसक्तं दुर्वचम्। सिद्धिस्थितिकालीनां स्वेतरसिद्धिकालीनां वा अनुमितिं प्रति हेतुत्वकल्पने च विनापि सिषाधयिषां सिद्धिनाशकाले अनुमित्युत्पादो दुर्वारः।

(१) क्वचित् 'चक्षुःसंयोग' इत्यनन्तरम् 'तत्पुरुषीयतादृशसिषाधयिषाभावश्चेत्येव'मिति पाठो दृश्यते। (२) 'नोक्तदोष' इति पाठान्तरम्। (३) 'सर्वसाधारणस्य' इति पाठान्तरम्। (४) 'मन्त्रौषधी' इति पाठान्तरम्। (५) 'विशिष्टाभावोऽपि कथमनुगत इत्यत' इति पाठान्तरम्। (६) 'मणेरभावादित्यर्थ' इति पाठान्तरम्।

## दीधितिप्रकाशः

ननु यत्पक्षकयत्साध्यकस्थले एकविधैव सिषाधयिषा, तत्र तेन रूपेण हेतुत्वमस्तु, अतः कार्य्यतावच्छेदकं खण्डयति 'सिद्धयुत्तरे'ति। सिद्धयुत्तरत्वम् अनुमितिसामान्यवृत्तितयातिप्रसक्तम्। सिद्धयव्यवहितोत्तरत्वञ्च तत्तद्व्यक्तिविश्रान्ततया अननुगतमित्यर्थः। अनुमितिमात्रस्यैव स्वात्मकसिद्धिकालीनत्वात् 'स्थिती'ति। स्थितिकालीनत्वञ्च तत्(१)कालोत्पत्तिकत्वम्(छ); तेन नोक्तदोषः।

ननु सिद्धिस्थितिकालत्वं सिद्धयधिकरणकालध्वंसाधिकरणत्वे सति सिद्धयधिकरणकालत्वम् सिद्धयधिकरणकालमात्रस्यैवातस्तत्सिद्धयधिकरणकालध्वंसाधिकरणत्वे सति तत्सिद्धयधिकरणक्षणत्वं तत्सिद्धिस्थितिकालत्वं वाच्यम्, तथा च तत्तद्व्यक्तिविश्रान्ततया कथमनुगम इत्यत आह—'स्वेतरे'ति। अनुमितिमात्रस्यैव स्वात्मकसिद्धिकालीनत्वादाह—'स्वेतरे'ति।

यद्यप्यत्रापि स्वत्व(२)प्रवेशादननुगम एव, तथापि स्वभेदा(ज)वच्छिन्नस्वाधिकरणक्षणोत्पत्तिकत्वसम्बन्धेन सिद्धिविशिष्टानुमितित्वम्। उत्पत्ति(३)प्रवेशात्(झ) स्वानन्तरोत्पत्तिकसिद्धिविशिष्टानुमितौ(ञ) न व्यभिचारः। 'सिद्धिनाशकाल'इति—तत्कालीनानुमितेर्निरुक्तकार्य्यतावच्छेदकानाक्रान्तत्वादिति(४) भावः।

(१) 'तदुत्पत्तिकालोत्पत्तिकत्वम्' इति पाठान्तरम्। (२) 'स्वत्वस्ये'ति पाठान्तरम्। (३) 'उत्पत्तिकत्वप्रवेशात्' इति पाठान्तरम्। (४) 'नाक्रान्ततया-इति' इति पाठान्तरम्।

(छ) अत्र तत्पदेन स्थितिरेव गृह्यते। ज्ञानस्य स्थितिश्च न प्रथमक्षणे परिभाष्यते, अत एव ज्ञानादेः प्रथमक्षणे उत्पत्तिः, द्वितीयक्षणे स्थितिः, तृतीयक्षणे लय इत्येवं व्यवह्रियते। तेनैवानुमितिमात्रस्य स्वात्मकसिद्धिकालीनत्वप्रयुक्तो दोषोऽत्र कल्पे निराकर्त्तुं शक्यो नान्यथा।

(ज) 'स्वभेदे'त्यादौ प्रथमस्वपदमनुमितिरूपानुयोगिपरम्। द्वितीयस्वपदं सिद्धिरूपप्रतियोगिपरम्।

(झ) लघु वृत्तित्वमनिवेश्येति शेषः।

(ञ) 'स्वानन्तरोत्पत्तिके'त्यत्र स्वपदेनानुयोगिभूतानुमितिः, तस्याः सिद्धयुत्पत्तिक्षणरूपस्वद्वितीयक्षणवृत्तित्वात्, तत्पूर्वञ्च सिषाधयिषारूपकारणाभावादिति।

## दीधितिः

एकस्य च पुंसः सिद्धिसत्त्वे अन्यस्य सिषाधयिषाशून्यस्यानुमित्यनुत्पाद-प्रसङ्गः। तत्तत्पुरुषीयतादृशानुमितिं प्रति तत्तत्पुरुषीयसिषाधयिषाया हेतुत्वे अनन्तकार्य्यकारणभावप्रसङ्गः। अपि च सिद्धौ सत्यां विनापि सिषाधयिषां सामान्यसामग्रीतोऽनुमितिसामान्योत्पत्तिप्रसङ्गः।

## दीधितिप्रकाशः

ननु स्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वसम्बन्धेन सिद्धिविशिष्टानुमितित्वं तथा। अव्यवहितोत्तरत्वञ्च द्वितीयतृतीयक्षणसाधारणं(ट) वाच्यम(१), अत आह—'एकस्ये'ति। 'अनुमित्यनुत्पादे'ति— तदीयानुमितेरप्यन्यदीयसिद्ध्यव्यवहितोत्तर-कालोत्पत्तिकत्वेन कार्य्यतावच्छेदकाक्रान्तत्वादिति भावः। 'तत्सिषाधयिषात्वेन' तत्पुरुषीयसिषाधयिषात्वेन। इत्थञ्चातिप्रसङ्गाभावात् कार्य्यकारणभावेऽपि न सामानाधिकरण्यं प्रत्यासत्तितया निविशत इति भावः।

ननु स्वसामानाधिकरण्यावच्छिन्न-स्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वसम्बन्धेन सिद्धिविशिष्टानुमितित्वं तथेति न कार्य्यकारण(२)भावानन्त्यमत आह—'अपि चे'ति। 'सामान्यसामग्रीत' इति,—सिद्ध्यनुत्तरानुमितिस्थले यावदुपधायकपरामर्शात्ममनो-योगादिकस्य सिद्धिकालेऽपि सत्त्वात्तथैव सामग्र्या अनुमित्युत्पादप्रसङ्गः।

न च सिद्ध्यनुत्तरानुमित्युपधायक-परामर्शव्यक्तेस्तत्त्वेन हेतुत्वस्यावश्यकत्वात् तदभावादेव सिद्धिकाले सामान्यसामग्रीतोऽनुमित्यनुत्पाद इति वाच्यम्; परामर्शे-नैकानुमित्यनन्तरं विनश्यदवस्थेन विनापि सिषाधयिषामनुमित्यन्तरजननापातात् तत्तत्परामर्शव्यक्ति-तदात्मसंयोगादिव्यक्तीनां सत्त्वात्(३)।

न च तत्क्षणसम्बन्ध एव कारणम्, अनन्तानां तत्क्षणसम्बन्धानां तत्तद्-व्यक्तित्वेनानन्तकार्य्यकारणभावमपेक्ष्यैतादृशसिद्ध्यभावस्यैकस्यैव हेतुत्वकल्पनाया

(१) 'निर्वाच्यम्' इति पाठान्तरम्। (२) 'भावस्यानन्त्यमत आह' इति पाठान्तरम्। (३) 'तदात्ममनोयोगादिव्यक्तेस्तदानीं सत्त्वा'दिति पाठान्तरम्।

(ट) तदिदं निरुक्तमेवाधस्तात् सार्वभौमनिरुक्तिप्रकरणे।

युक्तत्वात्। 'अन्यथा(१) तत्तत्क्षणसम्बन्धानां विशिष्य हेतुत्वेनैवातिप्रसङ्गभङ्गे विशेषकारणमात्रस्यैव कल्पना न स्यादिति।

## दीधितिः

नहि तादृशविशेषसामग्रीं विना सामान्यसामग्र्या अनुमितिजनकत्वं नास्ति, न वा अन्यत्रापि तद्विशेषसामग्र्यन्तरमस्ति, तत्कल्पने चातिगौरवम्। इह जायमाना सा सिद्ध्युत्तरैव स्यात्, सा च न जायते, तत्कारणाभावादिति चेत्, सा मा जनिष्ट, अनुमितिसामान्यन्तु स्यादेव। कार्य्यानुत्पादस्य विना कारणाभावमसम्भवात्।

करणव्यापारत्वेनावश्यककारणभावस्य परामर्शस्य कारणतावच्छेदिका पक्षता न कारणमिति तु भ्रमः, प्रतिबन्धकान्तराभाववदन्वयव्यतिरेकशालित्वेन हेतुत्वात्; अन्यथा यथासम्भवं निमित्तकारणस्य समवायिकारणत्वाद्यवच्छेदकत्वप्रसङ्गात्।

## दीधितिप्रकाशः

ननु सामान्यसामग्री विशेषसामग्रीसहितैव(२) कार्य्योपधायिका; प्रकृते च सिषाधयिषारूपविशेषसामग्रीविरहान्न कार्य्यमित्याशङ्क्य निषेधति—'नही'ति। 'तादृशे'ति—सिषाधयिषारूपेत्यर्थः। 'तद्विशेषे'ति—तत्तत्परामर्शव्यक्तितत्तन्मनोयोगव्यक्तीनामपि पूर्वोक्तरीत्या सत्त्वादिति भावः।

ननु सिद्ध्यनुत्तरानुमितौ सिद्ध्यभाव एव विशेषसामग्री; प्रकृते च तदभावान्न कार्य्यमत आह—'तत्कल्पने चे'ति। 'अतिगौरव'मिति,—सिषाधयिषाविरहविशिष्टसिद्ध्यभावस्यैवोभयत्र हेतुत्वकल्पनेनातिप्रसङ्गभङ्गे(३) कार्य्यकारणभावद्वयकल्पने(४) गौरवमित्यर्थः।

शङ्कते 'इह जायमाने'ति। 'इह' सिद्धिस्थले। 'सा' अनुमितिः। 'सा च' सिद्ध्युत्तरानुमितिश्च। 'तत्कारणम्' सिषाधयिषा। 'सा सिद्ध्युत्तरानुमितिः। एतादृशसामग्र्या विनापि सिषाधयिषां सिद्ध्यनुत्तरानुमितिजनकत्वादेव(५)तादृशसामग्रीवशादनुमितिसामान्यं(६) स्यादित्यर्थः।

---

(१) 'अन्यथा सर्वत्रैव तत्क्षण' इति पाठान्तरम्। (२) 'समवहितैव' इति पाठान्तरम्। (३) 'कल्पनेनानतिप्रसङ्गे' इति पाठान्तरम्। (४) 'कल्पनागौरवमित्यर्थ' इति पाठान्तरम्। (५) 'जनकत्वादेतादृश' इति पाठान्तरम्। (६) 'बलादेवानुमितिसामान्यम्' इति पाठान्तरम्।

'कारणाभाव'मिति,—कारणाभावस्तु पूर्वोक्तरीत्या न सम्भवतीति भावः(१)। ननु पक्षताहेतुत्वे परामर्शोऽवच्छेदकोऽस्तु, अत आह—'करणव्यापारत्वेने'ति। तथा च करणस्य(ठ)(२) व्यापारवत्त्वनियमेन(३) परामर्शस्य कारणत्वमावश्यकम्। पक्षतायास्तु व्यापारत्वासम्भवात् पक्षत्वविशिष्टे पक्षे पक्षधर्मताज्ञानं हेतुरिति-क्रमेणावच्छेदकत्वमेवेत्यर्थः(४)।

'प्रतिबन्धकान्तरे'ति,—बाधादीत्यर्थः(५)। 'अन्यथा' स्वातन्त्र्येणान्वयव्यतिरेकशालिनोऽप्यहेतुत्वे(६)। 'यथासम्भव'(ड)मिति—यत्र निमित्तकारणस्य समवायिकारणप्रत्यासन्नतया(७) कारणत्वं तत्रेत्यर्थः; यथा इच्छां प्रति ज्ञानादेः, तत्र तस्य(ढ) ज्ञानविशिष्टत्वेनैव हेतुतया(८) अतिप्रसङ्गवारणसम्भवात्। समवायिकारणस्य कार्य्येण साक्षात्सम्बन्धात्(ण) तस्य कारणत्वमावश्यकमिति भावः।

(१) 'रीत्या असम्भवीति भाव' इति पाठान्तरम्। (२) 'करणत्वस्य' इति पाठान्तरम्। (३) 'नियमात्' इति पाठान्तरम्। (४) 'पक्षत्वविशिष्टे पर्वते धर्मताज्ञानम् इति क्रमेण' इति पाठान्तरम्। (५) 'प्रतिबन्धकान्तराभावेति बाधाभावादीत्यर्थ' इति पाठान्तरम्। (६) 'अहेतुत्वे' इत्यनन्तरं 'यथासम्भवमित्यतः पूर्वं 'हेतुतावच्छेदककोटिप्रवेश इति वा' इत्यतिरिक्तः पाठः क्वचिद् दृश्यते। (७) 'प्रत्यासत्त्या' इति पाठान्तरम्। (८) 'तत्र विशिष्टत्वेनैव हेतुतया' इति पाठान्तरम्।

---

(ठ) व्यापारवत्कारणत्वस्यैव करणलक्षणत्वादिति हृदयम्। तथाहि तज्जन्यत्वे सति तज्जन्यजनकत्वस्यैव व्यापारलक्षणत्वादनुमितौ व्याप्तिज्ञानरूपकरणस्य व्यापारभूते परामर्शे तज्जन्यानुमितिजनकत्वं विना परामर्शस्य व्यापारत्वं न निर्वहति, तत एव च नोपपद्यते तत्र व्याप्तिज्ञानस्य करणत्वमपीति तत्तद्दोषनिवर्त्तनार्थं परामर्शस्यानुमितिकारणत्वमावश्यकमिति भावः।

(ड) 'यथासम्भव'मित्यनेन घटध्वंसादिरूपकार्य्यस्य समवायिकारणत्वाप्रसिद्ध्या तदीयनिमित्तकारणस्य दण्डादेस्तथात्वासम्भवेऽपि न क्षतिरित्यपि सूचितम्।

(ढ) 'तस्ये'ति—समवायिकारणस्येत्यर्थः।

(ण) 'साक्षात्सम्बन्धा'दिति-समवायरूपसाक्षात्सम्बन्धादित्यर्थः। ज्ञानस्य तु समवायघटितसामानाधिकरण्यात्मकपरम्परासम्बन्धादिति। ननु कार्य्येण सह साक्षात्सम्बन्धस्य परम्परासम्बन्धस्य वा न किञ्चिदायव्ययसाधकत्वं कारणतावच्छेदकसम्बन्धस्योभयत्रैव साक्षात्संसर्गत्वादिति चेन्न जन्यसत्त्वावच्छिन्नं प्रति द्रव्यत्वेन द्रव्यस्य सामान्यकारणतायाः कल्पनस्यातिप्रसङ्गभङ्गार्थमावश्यकत्वेन विशेषस्थलेऽपि तस्यैव कारणताकल्पनायाः सुतरां न्याय्यत्वादिति। इदमेव समवायिकारणताकल्पने विनिगमकं बोध्यम्।

## दीधितिः

अथानुमितिसाधारणसिद्धेः प्रतिबन्धकत्वे तदभावस्य मण्याद्यभाववत् प्रतिबन्धकाभावत्वेन कार्य्यकालवृत्तेरेव हेतुत्वादनुमितिकाले च तदसम्भवात् सा नोत्पद्येतेति चेन्न, यस्य मण्याद्यभावादेः कार्य्यसमकालतया अन्वयव्यतिरेकित्वं, तस्यैव तथात्वेन हेतुत्वम्, न तु सर्वस्य गौरवात्। अन्यथा समवायिकारणस्य कार्य्यसहभूतस्यैव हेतुत्वात् कारणमात्रस्य तथात्वप्रसक्तौ प्राभाकरा एव विजयेरन्निति।

## दीधितिप्रकाशः

'तदभावस्य' अनुमितिसाधारणसिद्ध्यभावस्य। 'तदसम्भवात्' तादृश-सिद्ध्यभावासम्भवात्। 'सा' अनुमितिः। 'यस्ये'त्यादि, 'कार्य्यसमकालतया'(१) कार्य्योत्पत्तिक्षणावच्छेदेन कार्य्याधिकरणदेशवृत्तितया। 'तथात्वेन' कार्य्यकाल-वृत्तित्वेन। 'न तु सर्वस्य' प्रतिबन्धकाभावस्य। 'अन्यथा' एकत्र क्लृप्तत्वेनैव अत्रापि कल्पने।

'समवायिकारणस्ये'ति,—अन्यथा विनश्यदवस्थस्य समवायिकारणत्वे निराश्रयत्वं(त) क्षणिकत्वञ्च तत्कार्य्यस्य स्यादिति।

यद्यपि प्रतिबन्धकाभावस्य कार्य्यसहभूतत्वेन हेतुत्वात् कारणमात्रस्य तथात्वापत्ति(थ)रित्युपेक्ष्य समवायिकारणस्येति विशेषानुधावनमफलम्, तथापि कार्य्यसामान्ये समवायिकारणस्य तथा(२) हेतुत्वं क्लृप्तम्, न तु प्रतिबन्धकाभावस्य, यत्र गुणविशेषे द्रव्यविशेषे वा प्रतिबन्धकत्वमेव न क्लृप्तम्, तत्र तदभावस्या-हेतुत्वादिति।

(१) 'कार्य्यकालवृत्तितया' इति पाठान्तरम्, एतेन 'कार्य्यसमकालतया' इति दीधितिग्रन्थस्थलेऽपि 'कार्य्यकालवृत्तितये'ति पाठान्तरमवगम्यते। (२) ग्रन्थविशेषे 'तथा' इति नास्ति।

(त) 'निराश्रयत्व'मिति—कार्य्योत्पत्तिकाले समवायिकारणरूपस्याश्रयस्याभावा-दित्यर्थः। 'क्षणिकत्वञ्चेति'—समवायिकारणनाशस्य कार्य्यनाशकत्वेन स्वद्वितीयक्षण एव कार्य्यस्य नाशादेकक्षणमात्रवृत्तित्वमित्यर्थः।

(थ) 'तथात्वापत्ति'रिति कार्य्यसहभूतत्वेन हेतुत्वापत्तिरित्यर्थः।

'तथात्वप्रसक्तौ' कार्य्यसहभूतत्वेन हेतुत्व-(१)प्रसक्तौ। 'प्राभाकरा एवे'ति,—तेषां कार्य्यसहवर्त्तित्वेनैव(२) हेतुत्वाद् विनश्यदवस्थतादशायां(२) कारणत्वमात्रस्यैवाभावादिति भावः।

अत्रेदं तत्त्वम्;—यत्र यत्क्षणे दाहोत्पत्तिः, तत्र तत्क्षणे तदव्यवहितपूर्वक्षणे च मण्याद्यभाव इत्याकारकान्वयव्यतिरेकाभ्यां हेतुत्वग्रहः। मण्याद्युत्पत्तिकालेऽप्यधिकरणान्तरे मण्याद्यभावस्य सत्त्वाद् दाहापत्तिरतो यत्रेत्यस्यान्वयव्यतिरेकशरीरमध्ये निवेशः। तथा च स्वाधिकरणक्षणाव्यवहितपूर्वक्षणवृत्तित्वप्रत्यासत्त्या मण्यभावादेः(३) कारणत्वम्। मण्युत्पत्तिक्षणाव्यवहितपूर्वक्षणश्च न तदधिकरणे मण्याद्यभावाधिकरणक्षणाव्यवहितपूर्वक्षण इति।

एवं समवायिकारणस्यापि स्वाधिकरणक्षणाव्यवहितपूर्वक्षणवृत्तित्वप्रत्यासत्त्या कारणत्वम्। तेन विनश्यदवस्थस्य समवायिनो(४) न कार्य्योपधायकत्वम्। कारणताग्रहश्चैवम्;—यदा घटोत्पत्तिः, स्वाधिकरणतत्कालाव्यवहितपूर्वक्षणे कपालमिति। स्वाधिकरणक्षणाव्यवहितपूर्वक्षणे यदा कपालमितरकारण(व)-समवहितम्, तदा तत्र कपाले तदुत्तरक्षणे(५) घट इत्याकारकान्वयव्यतिरेकग्रह इति भावः(६)। तत्तदिन्धने(७) तत्तद्दाहं प्रति तत्तदिन्धने तत्तद्दाहोत्पत्तिकालीन(ध)मण्यभावत्वेन हेतुत्वम् (८)।

(१) 'सहवर्त्तिन एवे'ति 'हेतुत्वस्य' इति च पाठान्तरे। (२) 'हेतुत्वादिति विनश्यदवस्थदशाया'मिति पाठान्तरम्। (३) 'मण्याद्यभावादेः'इति पाठान्तरम्। (४) 'विनश्यदवस्थसमवायिन' इति पाठान्तरम्। (५) 'तदा तत्र तदुत्तरक्षणे' इति पाठान्तरम्। (६) 'ग्रहेणेति भावः' इति क्वचित् पाठः। (७) क्वचित्'तत्तदिन्धने' इति कार्य्यांशे विशेषणेन विनाकृत एव पाठः। (८) 'हेतुत्वे'इति क्वचित् पाठः।

---

(व) 'कालीने'ति–क्षणवृत्तीत्यर्थः। अन्यथा स्थूलकालमादाय मण्युत्पत्तिकालस्यापि दाहोत्पत्तिकालतया मण्युत्पत्तिक्षणे दाहोत्पत्तिप्रसङ्गात्।

(ध) 'कारणतावच्छेदकावलीढ़स्यैव' कारणतावच्छेदकोपलक्षितस्यैव, न तु कारणतावच्छेदकविशिष्टस्येति। अत्रेदमवधेयम्,—कारणस्य फलोपधायकतायां प्रयोजकं कार्य्याव्यवहितप्राक्क्षणावच्छेदेन कार्य्याधिकरणवृत्तित्वं कारणतावच्छेदकसमानाधिकरणमेव, न तु कारणतावच्छेदकावच्छिन्नमपि, तेन दाहोत्पत्तिप्राक्क्षणावच्छेदेन दाहाधिकरणेन्धननिरूपितवृत्तिताया दाहोत्पत्तिकालीनत्वानवच्छिन्नत्वेऽपि तत्सामानाधिकरण्यस्यानपायान्न दाहोपधानव्याघातो मण्यभावस्येति तात्पर्य्यम्।

कारणता(१)वच्छेदकावलीढस्यैव(न) च पूर्वसत्त्वं कार्य्योपधाने तन्त्रम्, अतस्तत्तद्दाहोत्(२)पत्त्यधिकरणक्षणवृत्तित्वविशिष्टस्य तत्तद्दाहप्राक्काले असत्त्वेऽपि क्षतिः।

एवं तत्तद्घटं प्रति तत्तत्कालीन(प)तत्तत्कपालत्वेन हेतुत्वम्। सामान्यसामग्री च विशेषसामग्रीसहकारेण कार्य्योपधायिकेति न विनश्यदवस्थकपाले घटोत्पत्ति(३)रित्यपि कश्चित्।

## दीधितिः

प्राभाकरास्तु विनाप्यनुमित्सां क्वचित् परामर्शानुमितिप्रवाहस्याविरललग्नस्यानुभविकत्वात् कालभेदकल्पनायाश्च मानाभावात् मानाभावाच्च पक्षता नानुमितिहेतुः। परार्थानुमाने तु सिद्धसाधनमर्थान्तरविधया दूषणमित्याहुः(फ)।

इति श्रीमद्रघुनाथशिरोमणिकृतायां दीधितौ अनुमानखण्डे
पक्षताप्रकरणं समाप्तम्।

(१) 'तत्र कारणतावच्छेदकावलीढस्यैव फलोपधाने तन्त्रम्' इति पाठान्तरम्। (२) 'तत्तद्दाहोत्पत्तिक्षणवृत्तित्वविशिष्टस्य तत्तद्दाह-प्राक्काले असत्त्वेऽपि न क्षति'रिति पाठान्तरम्। (३) 'घटोत्पत्तिरित्याहुः केचित्' इति पाठान्तरम्।

---

(न) 'तत्तत्कालीने'त्यत्र तत्तत्कालपदस्य षष्ठीसमासनिष्पन्नत्वे आत्माश्रयादिदोषात् कर्मधारयपक्षाङ्गीकारेण तत्र तत्र काले वर्त्तमानेत्यर्थः। तत्रापि कालपदं क्षणपरम्, तेन घटाधिकरणं यो यः क्षणः तस्यैव तत्तत्क्षणत्वेन परिग्रहः, अन्यथातिप्रसङ्गात्।

(प) स्वाधिकरणक्षणाव्यवहितपूर्वक्षणे यदा कपालमितरकारणासमवहितं तदा तत्र कपाले तदुत्तरक्षणे घटाभावाद् व्यभिचारवारणाय कपाले इतरकारणसमवहितत्वविशेषणम्।

(फ) आहुरित्यनेन प्रकृते अस्वरसः सूच्यते, स च 'प्रमाणपुरुषानुभवस्यैव वस्तुसाधकतया 'नहि करिणि दृष्टे चीत्कारेण तमनुमिमते अनुमातार' इति ग्रन्थेन सिद्धिसत्त्वे प्रमाणपुरुषीयानुमित्यभावानुभवस्यावेदितत्वात् प्रकृतस्यानुभविकत्वोक्तिरसङ्गते'ति।

# दीधितिप्रकाशः

'प्राभाकरास्त्वि'ति—'क्वचिदि'ति,—यत्र अनुमित्युत्पत्तिक्षणेऽपि(१) परामर्शान्तरसामग्री नियता तत्रेत्यर्थः(ब)। 'परामर्शप्रवाहस्यानुमितिप्रवाहस्य चेत्यर्थः।

एकानुमितिनाशानन्तरमेवापरानुमितिरित्यत्राह(२)—'कालभेदे'ति। सिद्धेरप्रतिबन्धकत्वे कथं सिद्धसाधनोद्भावनेन परस्य निग्रह इत्यत्राह(३)-'परार्थे'ति। 'अर्थान्तरे'ति,—सिद्धे अर्थे आकाङ्क्षाविरहात् तदभिधाने(४) अर्थान्तरमित्यर्थः(भ)।

इति श्रीमद्भवानन्दीये तत्त्वचिन्तामणिदीधितिप्रकाशे
अनुमानखण्डे पक्षताप्रकरणव्याख्या
समाप्ता।

(१) 'अनुमित्युत्तरक्षणेऽपि' इति पाठान्तरम्। (२) 'रित्यत आह' इति पाठान्तरम्। (३) 'इत्यत आह' इति पाठान्तरम्। (४) 'तदभिधानम्' इति पाठान्तरम्।

(ब) एकपरामर्शादनुमितिद्वयस्योत्पादेऽपि प्रवाहासम्भवादिति भावः।

(भ) तदुक्तम्—'प्रकृतादर्थादप्रतिसम्बद्धार्थमर्थान्तर'मिति न्यायसूत्रव्याख्याने वृत्तिकृता विश्वनाथन्यायपञ्चाननेन—'प्रकृतात्'–प्रकृतोपयुक्तात्,–ल्यब्लोपे पञ्चमी, तेन प्रकृतोपयुक्तमर्थमुपेक्ष्यासम्बद्धार्थाभिधानमर्थान्तरम्, प्रकृतानाकाङ्क्षिताभिधानमिति फलितार्थ' इति। सिद्धेऽर्थे आकाङ्क्षाविरहश्च विरोधिसमवधानात्'। इति

तर्कादि-पक्षतान्तस्य ग्रन्थस्य पदटिप्पनी।
तर्काचार्येण सन्दृब्धा श्रीकालीपदशर्मणा॥

